

ISSN – 2348-5981 Darśanaprabhā

# दर्शनप्रभा

सर्वदर्शनविभागः २०१८-१९



सम्पादिका

प्रो. गौरप्रियादाशः

## राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा "ए" श्रेण्या प्रमाणितम्)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# दर्शनप्रभा (Darśanaprabhā)



दर्शनविभागीयशोधपत्रिका

२०१८-१९

सम्पादिका – प्रो.दाशगौरप्रिया (आचार्या)

सम्पादकमण्डली – डॉ.सावित्रीशतपथी

डॉ.नन्दिघोषमहापात्रः

डॉ.ज्योतिप्रकाशान्दः

डॉ.प्रदीपकुमारसाहुः

डॉ.अजयकुमारपाण्डे

सम्पादनसहयोगी – सन्दीप चटर्जी (शोधच्छात्रः)

प्रकाशकः – सर्वदर्शनविभागः

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा 'ए' श्रेण्यां प्रमाणितम्)

श्रीसदाशिवपरिसरः, पुरी



ISSN : 2348-5981

प्रतिलिपयः – १००

मूल्यम्-२५०

मुद्रणम्-मङ्गलाप्रेस



# दर्शनप्रभा (Darśanaprabhā)



**सम्पादकीयम् -**

***सा विद्या या विमुक्तये, विद्ययाऽमृतमश्नुते*** इतीमाः सारस्वतीः श्रुतीः अवलम्ब्य विद्या एव मानवमनीषाया अपूर्वामलौकिकीं सत्यतां सफलतां च व्यक्तीकरोतीत्यत्र न कस्यापि विपश्चितो विप्रतिपत्तिः। वस्तुतः चेत् चिन्तनं विधीयेत तदा प्रश्नाः समापद्येरन् किमु एकविंशतिशतकेऽस्मिन् अस्ति काचिद् आवश्यकता मुक्तिदया विद्यया? अस्ति वा प्रयोजनममृतत्त्वस्याधिगमेन? सर्वस्यापि पर्यनुयोगस्य इदमेव उत्तरं यत् परा विद्या जन्मान्तरकर्मापनोदनेन आपवर्ग्या अमृतदा च भवतीत्यत्र न काचिद् विमतिः। किन्तु व्यवहारदशायामपि अस्याः परमावश्यकतां वा कश्चित् विप्रतिपत्तुं युज्यते। यतो हि भौतिकप्रापञ्चिकविडम्बनासकलेषु विडम्बितेष्वपि अस्मिन् काले अस्ति शास्त्राणां शिवदः पक्षः। किञ्च भारतीयसंस्कृतेः आदर्शस्य नैतिकतायाः च उपजीव्यमस्ति आर्षशास्त्रम्। तानीदानीं कालार्कभक्षितानि समजायन्त। तेषां परिरक्षणं तेषामध्ययनेन अध्यापनेन चिन्तनेनाचरणेन च सम्पद्येत इति कृत्वा इदानीमस्ति अवसरः तत्तच्छास्त्राणामनुशीलनस्य। अस्यानुशीलनस्य सन्ति नैकाः दिशः। तासु भाषासंभाषणयोग्यता सृजनशीलता च अन्यतमे वर्तेते। अध्येतृषु छात्रेषु तदेव कौशलं, सा एव सृजनशीलता चेत् परिवर्धेत, शास्त्ररक्षणं शास्त्रीयाचरणानां च परिरक्षणं स्वतः सम्पद्येत। नागरिकाणां शास्त्रीयमाचरणं व्यवहार-सौशील्यम् अन्ततोगत्वा राष्ट्रघटनात्मकं महत् कार्यं सम्पिपादयिषति। तस्मादेव कारणात् विश्रुतकीर्तेः अस्य परिसरस्य सर्वदर्शनविभागः **दर्शनप्रभा (Darśanaprabhā)** इति शोधपत्रिकाव्याजेन क्रान्तदर्शिनाम् अध्येतॄणाम् अध्यापकानां च सृजनीं कलां समुद्घाटयितुं काञ्चित् पत्रिकां सम्पादयन् अस्मद्विभागस्य सारस्वतीं समीहां संवर्द्धयन् सञ्चकास्ति। एवम्प्रकारेणास्मिन् अङ्के तु दर्शन-व्याकरण-साहित्य-पुराण-योगादीनि शास्त्राणि एकस्यां मालायां नैकानि सुगन्धिकुसुमानि इव भ्राजन्ते।

अस्मद्विभागस्य विशिष्टविदुषीभ्यः अभीक्ष्णं छात्रकल्याणं साधयन्तीभ्यः डॉ.सावित्रीशतपथीमहोदयाभ्यः पत्रिकायाः अस्याः अन्यतमसम्पादिकाभ्यः स्मरामि । किं च कार्यकुशलेभ्यः शास्त्राध्ययनाध्यापनकर्मसु निरन्तरं वर्तमानेभ्यः प्राध्यापकेभ्यः डॉ.नन्दिघोषमहापात्र-डॉ.प्रदीपकुमारसाहु-डॉ.अजयपाण्डे-डॉ.ज्योतिप्रकाशानन्द इति सर्वेभ्यः ससाधुवादमभिनन्दामि। एवञ्च टङ्कनकार्ये साहाय्यं कृतवते पत्रिकासम्बन्धिसर्वविधसहयोगप्रदायिने शोधार्थिने सन्दीपाय ससाधुवादमभिनन्दामि। यतो हि सर्वदर्शनविभागस्य पत्रिका प्रस्तुतिः अनेन क्रियान्वयिनी कृता। दर्शनप्रभायाः इदं प्राकाश्यं मे विभागस्य अध्यापकानां कर्मकौशलं सेवायां समर्पणं च सन्दिदिक्षति इति निःसङ्कोचनं ब्रवीमि। अत्र सन्निहिता अस्मच्छात्राणां सृजनशीलता विदुषां प्रसादेन तदीयाध्वदर्शनेन अग्रेसारणी भूयादिति कामयमाना राष्ट्रियसंस्कृतसंस्थानस्य विदग्धकुलपतिभ्यः शास्त्रशासनपटुभ्यः अनुपमव्यक्तिसम्पन्नेभ्यो विद्वत्तल्लजेभ्य आचार्येभ्यः परमेश्वरनारायणशास्त्रिभ्यः कृताञ्जलिपुटेन नतिततीः विज्ञापयन्ती, सर्वदर्शनविभागस्य सर्वाङ्गीणोन्नतये आशिषञ्च कामये।

अन्ते परिसरपारिवारिकेभ्यः सर्वेभ्यो विभागान्तेवासिभ्यः प्रत्यक्षपरोक्षसहयोगविधातृभ्यो मदीयां विनम्रतां विनिवेदयामि। किञ्च भगवते लीलाविनोदिने धामेश्वराय विभागस्य साफल्ये बीजरूपाय श्रीजगन्नाथदेवाय सभक्तिकं प्रणमामि।

सर्वान्ते अस्य विद्यामन्दिरस्य पुरोहितकल्पेभ्यः आचार्येभ्यः प्राचार्येभ्यश्च प्रो.हरेकृष्णमहापा-त्रमहोदयेभ्यः हार्दं कार्तज्ञं सश्रद्धं कृतवेदित्वं च समर्पयामि। यतो हि तेषामेव सहयोगः अस्मान् सर्वान् सूत्रमणिन्यायेन बध्नाति। इत्थं नानाशास्त्रविचक्षणैः विद्वभिः महता परिश्रमेण विलिखितशोधनिबन्धाः दर्शनप्रभा इति पत्रिकायाः प्रकाशनोद्देश्यानि प्रपूरयिष्यन्तीति शिवकामनाभिः साकं प्रकाश्यते सेयं विदुषां परितोषाय इति शम्।

**सम्पादिका**
**प्रो.गौरप्रियादाशः**
**विभागाध्यक्षा (सर्वदर्शनविभागः)**
**राष्ट्रियसंस्कृतसंस्थानम् (श्रीसदाशिवपरिसरः)**

# विषयानुक्रमणिका

वेदान्तशास्त्रस्य मानवीयमूल्यबोधः*

*पण्डित गोविन्दचन्द्र मिश्रः

विषयस्यास्य नामधेये वहु प्रश्नाः मुमुद्यन्ति। प्रथमः किं तावत् वेदान्तशास्त्रम्? द्वितीयस्तु कोऽसौ मानवः? तृतीयः किं तावत् मूल्यम्?चतुर्थस्तु कः पुनः मूल्यस्य बोधः। इत्येनं चतूर्णां प्रश्नानां मुत्तरदानच्छलेन विषयस्यास विचारणां विधास्यामः। यतो वयं मानवाः ततः प्रथमतः मानव परिचयचिन्ममः-

विषयेऽस्मिन् अवुल रहिमः आह-

**आनीता नटवन् मया तव पुरः श्रीकृष्ण या भूमिका-**
**व्योमाकाश खखाम्वराब्धिवदु द्धि स्त्वत् प्रीतयेऽद्यावधि।**
**श्रीतो यद्यसि ताः समीक्ष्य भगवन् यद वाञ्छितं देह मे**
**नो चेद् व्रूहि कदापि मा नय पुनर्मामीदृशीः भूमिकाः॥**

अस्यार्थः-हे श्रीकृष्ण! हे विश्वसम्रट! तन पुरः त्वत् प्रीतये नयवदमया व्योम '०' आकाश '०' ख '०' 'ख' '०' अम्वर '०' अवधि ४ वसु ८ द्धिः अङ्कानां वामतोगतिरिति ८४००००० चतुरशीति लक्षसंख्याकैः कायैः कदामीनः सन् नीरे प्लवमानः गगने विहङ्गमः वेशेन उडीयमानः अरण्ये पञ्चाननःसन् गर्जन् विष्ठादिषु कृमिकीटरूपेण सुखं विहरन् जुगुप्सीरम् मभिनयन् नटामि हसामि कोकिलस्वनेन गायामि क्रन्दामि करोमि अश्नामि विप्रो शुहोमि मुनिः सन् व्रतमाचरामि इत्यादि।

अर्थात् रहिम महोदयस्य विचारः-चतुरश्रीतियोनिषु क्रमशः भ्रमन् भ्रमन् विविधानि सुखदुःखानि भोगांश्च भुञ्जानः युग युग कठिनतपसामन्ते मानव जन्म लभ्यते। अन्येषां जीवनं कर्मक्षेत्रं न भवति। तथाहि

**आहर निद्रा भय मैथुनं च सामान्यमेतत् पशुद्धिर्नराणाम्।**
**धर्मोहि तेषामधिको विशेषो धर्मेण हीनाः पशुद्धिः समानाः॥**

धर्मो नाम मानव धर्मः। मूढाः विज्ञाः सन्तः खलाः, सर्वेषु मानवेषु भगवान् विचारशक्तिं निहितवान्। एते विचारशक्तिमन्तः विचारं न चरन्तः यदृच्छया कर्माणि कुर्वन्तः कृतानां कर्मणां परिणामं भुञ्जते। यत ईश्वरः एषु विचारशक्तिं निहितवन् या मानवेतरेषु न निहिता ततः मानवजन्म कर्मक्षेत्रं भवति कर्मफल विचार परिसरत्रात्। विचार-शक्ति व्यवहारो हि मानवीय मूल्यं भवति।

अहं मानः चतुरशीतिलक्षसंख्याक जीव दुर्लभविचारशक्तिमानस्मि। यः मयि एतां शक्तिं निहितवान् तद्दत्ताया-अस्याः शक्त्या अव्यवहारेण सहि दाता दुःखितः क्षुब्धश्चस्यात्। इत्येव विचारः मानवीय मूल्यम्। यतः लुडु खेलवत् नवनवति संख्याते गृहे यदि अपराधः क्रियेत पुनः सप्तमे गृहे पतनं यथा भवति प्राप्तेऽपि मानव जन्मनि अमानव व्यवहारा चरणेन पुनरमानव जन्मभयं सर्वथा शयानस्य मस्तकोपरि तीक्ष्णकरवालस्य भट्टङ्कनमिव यदि नाम त्रासयेत् तथा सति मूल्यस्य वोधः सम्भवेत्।

अथ इदानीं यावत् सारः-

१) अहं वहुतगोभिः वहुक्लेशान् भुक्त्वा भुक्त्वा अगणनीय वर्षानन्तरं मानवजन्म लब्धवान्।

२) तत्रापि यथा परिवेशः प्राप्तः सोऽपि दुर्लभः।

३) तत्रापि प्रतिक्षणं स्खलनभयम्। ईषद् व्यवहार स्खलनेन अमानव योनिगतिः। मानवे जन्मन्यपि अङ्गहीनता वा तलुष्टावि रोगाक्रमणमिति वहवः भीतयः भवन्ति। लब्धेऽपि मनुष्यजन्मनि-यथावस्थितिः अग्रे गमनमिति अधः पतनमिति अवस्थात्रयं भवति। तथाच गीता-

**अनेक जन्म ससिंद्धः ततो याति परां गतिम्।**
**वहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते॥**

वहूनां जन्मनामन्ते इति लब्धेऽपि मानवजन्मनि, वर्त्तमानोऽपि मानवजन्मनि क्रमश उन्नति माप्नुवन्नपि-

**अथवा योगिना मेव कुले भवति धीमतान्।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्॥**

अर्थात् मानवः कलासु ज्ञानेषु विज्ञानेषु च प्रवीणः सन्तः वासनायाः पूर्तेः पूर्वं शरीरं जहति। एव मवस्थायां सङ्गीज्ञेःस्वकर्मज वासनाफलेन त्यक्तकायः पुनः कस्यचि दधिकसंगीतविज्ञस्य एव सन्तानः सम्भवेत्। भास्करस्य कस्यचिद् भास्करस्य पुत्रः सम्भवेत्।

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्**
**यतते च ततो भूयः ससिंद्धौ कुरुनन्दन॥**

भास्करस्य कस्यचिद् कवेः, दार्शनिकस्य राज्ञो गृहे वा यदि जन्म स्यात्-

तदा-पूर्वाभ्यासेन कोऽपि लाभः न स्यात्। सर्वेषां शास्त्राणां सर्वासां विद्यानं अन्तः स एव अनन्तः संगीतज्ञः एकतानशेषे यस्मिन् लीयते, भास्करः योगी ज्ञानी च एकतानः तस्मिन् एव लीयन्ते। किन्तु शेषं यावत् गन्तव्यं भवति। शेषे च तमेवाप्नुवन्ति। इति मानवीय मूल्यबोध विचारः।

अथ वेदान्तशास्त्रम्। अथातो ब्रह्म जिज्ञासा इति सूत्रेण आरब्धो ग्रन्थः "ब्रह्मसूत्रम्" वेदान्तदर्शनस्य मूलग्रन्थत्वेन परिचितमपि उपनिषद एव वेदान्तदर्शनस्य मूलमिति अवधार्यन्ते। उप-निकटे शिष्यानुपवेश्य गूढं वेदसार माचार्य्या उपदिष्टवन्तः प्रश्नोत्तरशैल्या। किन्तु वहुसंख्याता एता विशाला उपनिषदः सम्पूर्णतया पठितुमसाध्याः ब्रह्मसूत्रम् च संक्षिप्ततममित्यनुभूय भगवान् वादरायणः पार्थं भगवन्तं च पात्रत्वेन संगृह्य प्रश्नोत्तशैल्या श्रीमद्भगवद्गीतां निर्ममे। क्वाहं क्वाहमिति क्रन्दन् विश्वमागतः शिशुः विषादग्रस्त इति विषादयोगात् एषग्रन्थः आरब्धः। प्रथमाध्यायस्तु विषाद योगः शेषा अध्यायाः प्रसाद योगाः। अद्वैत द्वैत विशिष्टाद्वैत द्वैतान्मैताचिन्त्यभेजाभेदादिमतमण्डितं वेदान्तदर्शनं वस्तुतः वाचनरीत्या चित्रितमपि एकमेव दर्शनम्। प्रस्थानत्रयीमाश्रित्य विद्यमानमपि मानवीय हितं केवलमेव प्रतन्मते। ब्रह्मसूत्रं संक्षिप्ततम मिति उपनिषदः विस्तृता अपि न गीता इव वर्गीकृताः तथास्पष्टीकृताः न सन्ति। गीता मामेक मानवान् इह परत्र कृतेऽपि स्वपाकान् प्रस्तौति। मानवानां सांसारिकजीवने अभाववोधः विषादात्मकः प्रथमत समुवेत्ति। यदि भाग्येन सम्भवति तदा योग्यगुरोः प्राप्तिः भवति। तस्य मुनिचारितेन उपवेशेन विचार विभ्रमनाशः भवति।

विश्वमध्ये जीवितुम् (१) आरोग्यं, (२) कर्म संपादनम्, (३) सुख मृत्युश्चेति त्रितयमेवाभीप्सितं भवति। एतेषामाप्तये स्थितप्रज्ञता अपेक्षिता।

**यदाते मोहकलिलं बुद्धिर्व्यति तरिष्यति।**

**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥**

पारेमोहकर्दमं यदा बुद्धिः शोभेत तदा नानिश्चला भवति। विविधवादश्रवणज चापल्यं पराहतं भवति।अथ स्थित प्रज्ञता विषये अर्जुनभगवतोः उत्तरम्।

**श्रुतिर्विप्रतिपन्ना ते यदा स्थास्यति निश्चला**
**समाधावचला वुद्धिस्तदा योगमवाप्स्यसि।**

सर्वं किञ्चित् श्रृण्वन् सर्वेषां सारं गृह्णन् अन्तररे विचार्य्य निजं कर्त्तव्यं बुद्धिः निश्चिनुयात्। निश्चिते कृत्ये एषा निश्चला एव तिष्ठेत्। यतः आकर्णतानां विचाराणां सारः तया गृहीतः ततः तस्याः चापल्यशङ्का नास्ति। तदनन्तरं संसारे सर्वकृत्यसंपादनाय सा धैर्यमवलम्ब्य प्रस्तुता भवति। तस्या धैर्यं कृत्याय सामर्थ्यं यच्छति। फलेन गृहनिर्माणादिकं सांसारिकसमृद्धये कृत्यजातं न विपद्येत। सर्वेषु कृत्येषु एकतानता एव योगः। "योगश्चित्तवृत्तिनिरोधः।" इति योगशास्त्रम्। "चित्तं तु चेतो हृदयं स्वान्तं हृन् मानसं मनः" इत्यमरः आसक्तिः अभिभूतिः एतज्जन्य चापल्यं हि मनसः चित्तस्य वा वृत्तिः। किञ्चित् द्रव्यं विलोक्य तस्मिन् मनः आकृष्टं भवति एवमपि कामपि पुंव्यक्तिं स्त्रीव्यक्तिं प्रति च आसक्तिः मनसि संजायते। अन्यस्य दुःखं वा सुखं वा विल्याक्य अश्रुघातः प्रसादश्च मनसि संजायते। एषा अभिभूतिः। अन्येः समं समाना हृदयानुभूतिरीति एषा सहानुभूतिरिति नाम्नापि अभिधीयते। साहित्यिका एवं जिनं सहृदयः सामाजिकः इति वदन्ति। एतया वृत्या योगहानिः भवति। व्यक्तेः स्वस्थितिः दुर्वला भवति। इति योगः चित्तवृत्तेः निरोधः। एवमुपदोः प्रदत्तः। किन्तु समाजे वर्त्तितुं एतासां वृत्तीनां स्थितिः नितरामपेक्षते। अभिभूतिं विना परदुःखकातरतां विना परोपकार प्रवृत्तिः न रदीयात्। तेन वेदान्तशास्त्रसारभूता गीता व्रवति-

**वुद्धियुक्तो जहातीहह उभेसुकृत दुष्कृते।**
**तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्॥**

शोभनं कर्म सुकृतं, दुःखेन दुःखाय च क्रियमाणं कर्म दुष्कृतिं भवति। जनः वुद्ध्या युक्तः सन् अर्थात् धैर्यमवलम्ब्य कृत्ये कर्मणि स्वां वुद्धिं विनियोज्य प्रत्येकं कृत्यं सम्पादयेत्। वुद्धिःकर्मणा योगं विधत्ते। साधारणानां क्षेत्रेषु दृश्यते धैर्यमनवलम्ब्य वुद्ध्या न विचार्य झटिति साधारणाः कर्म कुर्वन्ति। तेषां वुद्धिः अस्ति परन्तु एते तां नोपयुञ्जते। वुद्धियोगेन किं सुकृतं किं दुष्कृतमिति परिचितं भवति।ततः दुष्कृतं जह्यात्। सुकृतस्य फले लिप्त्यभावात् स्वयमेतत् सन्न्यस्तं भवति। इति उभे जहाति। तस्मात् कर्त्तव्य क्षेत्रे प्रथमं धैर्यमाश्रयन् वुद्धिं खटय। कृत्ये वुद्धेः संयोगात् तत् कृत्यं कथं सुखेन अल्प श्रमेण अधिक लाभदं स्यात् स पन्था मिलिष्यति। मूढाः वस्तुनि निगिड़ताया रज्ज्वाः वन्धं न विमोच्य कुरिकया तां छिन्दन्ति। फलेन सेयं रज्जुः मृता भवति पुनः निगड़ने सा नोपयुज्येत।एषापि छेत्तद्या स्याद् तदानिं समयः नापेक्षेत।उदाहरणं तु कालयवनस्य महावलिनः अद्भुतपराक्रमस्य निधनाय "युद्धेचाप्यपलायनमिति" स्वामुक्तिमववत्य पलाक्ष्य मुचुकुन्द शयनकन्दरे छन्नः सरलेन यवनं ददाह। एतेन लाभ एव लाभः। प्रत्यक्ष युद्धे तेन सह विषयाशा नासीत्। एष एव वुद्धियोगः। कर्मसु कौशलं योगः। येन हानिशङ्काया हानिः निःशङ्कलाभस्याभ्युदयः। संसारे मानवीयमूल्यस्य एवं वोधं वेदान्तशास्त्रमुपदिशति। जगति सर्वे प्राणिनः स्वं स्वं निर्दिष्टमाहारं भुञ्जते। एकोहि मानवः अमानवमाहार मुपयुंक्ते। मतङ्गजो मांसंनास्ति न च पञ्चाननः मृदुलं शमुमत्ति। मीनपतङ्गमार्जार कुक्कुरादयोऽपि स्वजातये न निर्दिष्टं खाद्यं न खादन्ति सुपक्वमपि रसालं रम्भाफलं वा श्वानोऽश्नन्ति। सुपक्वमपि जातफिलादि सुगन्धिद्रव्यमिलितं परिवेषितं मांस व्यञ्जनं गृहधेनवो नाहरन्ति। विश्वस्मिन् सर्वमपिमेध्यममेध्यं मानवा अश्नन्ति। फलेन विश्वप्राणिभ्यः सर्वेभ्योऽपि मानवा एव आधि व्याधिग्रस्ता दुःखिन आत्मघातिनश्च भवन्ति। मानवातिरिक्तो न कोऽपि प्राणी आत्महत्यां कुर्वन् प्रेतयोनिं संख्यां वर्द्धयति।

इत्येवं सर्वमनुभूय वेदान्तमाता गीता आहारविचारं परामृष्टवती। यथा पादपाः धरणीमाश्रित्य रसेन जीवन्ति तथा सर्वे जङ्गमाः आहारमाश्रित्य रसेन जीवन्ति तथा सर्वे जङ्गमाः आहारमाश्रित्य जीवन्ति। आहारानुगुणं काय मारोग्यं वुद्धिं विचारं धैर्यं मनोवलं कायवलं च लभन्ते। इत्येवं सर्वमनुभूय त्रिधा आहार विचारः शुद्ध मानवीय मूल्यवोधाय गीतायां निगदितः।

**आयुः सत्त्व वलारोग्य सुख प्रीति विवर्द्धनाः।**
**रस्याः स्निग्धाः स्थिराहृद्या आहाराः सात्त्विक प्रियाः॥**
**कट्वम्ललवणात्युष्ण तीक्ष्णरुक्षविदाहिनः।**
**आहारा राजसस्येष्टा दुःख शोकामय प्रदाः॥**
**यातयामं गतरसं पूति पर्य्युषितं च यत्।**
**उच्छिष्टमपि चामेध्यं भोजनंतामसप्रियम्॥**

वुद्धियुक्तः सन् खाद्ये यदि अवधानं दध्यात् तर्हि भोक्ता निर्दिष्ट फलभागभवेत्। एषवोधः मानवान् प्रति वेदान्त दानम्।गृहेसतां जनानां गृहसज्जा वसनशयनसज्जा तथा गृहपात्रादीनां मार्जनं यथा स्थान स्थापनं च नितरां समपेक्षितं भवति। आवर्जितं गृहं वस्त्रमुपकराणि च केवलं नेत्रकण्टकानि मनोग्लानि कराणि भवन्ति इति पर्य्याप्तं न्, अपि तु आधिव्याधिकराण्यपि भवन्ति। एतत् तथ्यमनुभूय गीतायां भगवानाह-

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।**
**सर्वथा वर्त्तमानोऽपि स योगी मयिवर्त्तते॥**

भूधातोर्भावेवाच्येक्तप्रत्ययेन प्रस्तुतः भूतशब्दः चराचरादिसर्वेषां वस्तुनां वोधकः। आदिशब्देन काष्ठपाषाण धातुद्रव्य वसनभूषणादयः गृह्यन्ते। सर्वभूतेषु इति लेखन्यां स्थाल्यां सम्मार्जन्यां वसनेषु। शल्यायां मृत्तिकायां सलिलेषु सरित्सु अम्वरे मेघेषु अपि स्थितं मां एकत्व-समभावेन मिश्रितमवधार्य भजति-सेवते।

अस्य अर्थः भवति-नीलाद्रौ नीलाचलनाथ गोलनयने या आस्था, या ममता, या निर्भरता, वृन्दावने वेणुवदने या च प्रीतिः पुत्रेषु पुत्रीषु पत्न्यां पत्यौ वा या प्रीतिः सेयं प्रीतिः लेखन्यां सेयमासक्तिः सम्मार्जन्यां वसनभूषणेषुस्थाली-पात्रेषु गृहेषु अङ्गणेषु भित्तिषु सरित्सु चत्वरेषु वनेषु तरुलतासु अपेक्षिता भवति।

तथा सति यदि गृह सम्मार्जनं भवति तर्हि सम्मार्जन्यां वृन्दावनेशं चत्वरे भूम्यां तमेव पश्येम अनुभवेम्। अङ्गणस्य सम्मार्जनानन्तरं तदङ्गरं रसतीति अनुभवेम। मार्जनात् पूर्वं तदेव क्रन्दति स्म। एवं मलिकं कच्चरं वसनं निपतितं क्रन्दती क्रोशदाह्वयन्निमम दुःखं विद्धीति। परिष्करणात् परं यथास्थानं यथारीति च स्थापनानन्तरं तदेव वसनं हसत् परिधातु माह्वायति। या तु शय्या जुगुप्सिता कुत्सितां तां प्रतियातुं कुण्ठति स्म सा हि परिष्कृता

धवल प्रच्छदपट समावृता सोपाधाना हसन्ती विश्रान्तये समाह्वयति। वसनं हसति क्रन्दति, स्थाली हसति क्रन्दति। सरितः हसन्ति स्म अद्य जाह्नजी क्रन्दति इति सर्वत्र हर्षशोकयोः स्पर्शं वेदान्तदर्शनं मानवान् अङ्गुलि निद्र्देशेन दर्शयति।

अथ श्लोकार्थः-सर्वथा इति वस्त्रं परिष्कुर्वन्नपि गृहाङ्गनं मार्जयन्नपि पाकस्थालीं सम्मार्जयन्नपि अन्नं पचन्नपि सुतं सुतां परिणतां श्वश्रूं सेवमानापि पत्याहसन्त्यपि परीहास्येषु परीहासरतापि, उच्छिष्टस्थानानि लिम्पन्त्यपि, सर्वथा वर्त्तमानोऽपि स योगी। यतः योगयुक्तात्मा। अन्नानि भुञ्जानोऽपिरममाणावपि दम्पती क्रीड़ा नर्मपरा अपि वालाः सर्वे योगयुक्तात्माः किं पुनः स्वाध्यायरता आचार्य्या शिष्या वा। सर्वे एव योगिनः। सर्वे हि योगयुक्ताः। अथ विचारः अहं सर्वेषु द्रव्येषु स्थावरास्थावरेषु उपकरणेषु च स्थितः। स च येगी मया सह क्रियापरे युक्तः अ तएव सर्वथा सर्वदा स मयि वर्त्तते। एतेन ईश्वरचिन्तायै मम समयाभावः संसार जञ्जाल जर्जरित इति दुर्विचारः पराहतः। सर्वे रुदन्ति हसन्तीति प्रत्यक्षतया अनुभवो जातः सर्वे ममतां स्नेहं च अपेक्षन्ते। एतामाप्य च पुनरस्मभ्यं प्रतियच्छन्ति। न प्राप्य प्रतिदानं दानाभावे कथं सम्भवेत्?

एवं वोधात् प्रतिक्षणं प्रतिवस्तु च व्यवहृत्य वयमेकाधारेण भुक्तिं मुक्तिं च सम्यक् लभेम इति मानवीय मूल्यवोधं प्रति वेदान्तशास्त्र दानम्। एतेन रमणीयं निकेतनं मनोरम मङ्गणमुपवनं मधुरा विहग काकली शोभना शय्या सुपक्वं मधुरं भोजनं श्रमजनितमर्जनं सुशिक्षितः परिवारः सम्यक् आरोग्यमयं शरीरं निराधि मानस मुपभुज्य सर्वथा मयि वर्त्तमानः अन्ते मामेव ते प्रपद्यन्ते इति गीतायां भगवानीह। उपनिषदामन्ते च शान्तिपाठे-

**भद्रं कर्णेभिः शृणुयम देवा-**
**भद्रं पश्येमाक्षभि यजत्राः**
**स्थिरै रङ्गैः तस्थिवांसस्तन्मभि-**
**र्व्यसेमो देवहितं यदायुः।। इति गदितमास्ते।**

अस्यार्थः-यद् आयुः-यावज्जीवनं कर्णेभिः भद्रं शृणुयाम। यदि यावज् जीवनं शुभमेव शृणुयामा (नाशुभम्) तथा सति भद्रं (साधु) शृणुयाम (श्रोतुं पारयेम)।

यदि अक्षभिः भद्रं (शोभनमेव) पश्येम द्रषुं शक्नुयाम तर्हि एव भद्रं(स्पष्टं) पश्येम द्रष्टुं पारयेम। यदि स्थिरैः, अङ्गैः देवहितं व्यसेम (परोपकारं व्यनस्येम) तर्हि स्थिरैः (दृढैः) अङ्गैः (अवयवैः) व्यसेम स्थातुं पारयेम। अन्यथा-

**अङ्ग गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम्**
**करधृत कम्पित शोभितदण्डं तदर्पन मुञ्चत्याशाभाण्डम्।।**

अनेन परदयाश्रित जीवनेन किम्?अतः

**शरीरयात्रा विनिवृत्तये अन्ते सुखमृत्यवे**
**परत्र च सुखाय वेदान्त प्रोक्तानुपदेशान्**
**परिपाल्य केवलं सुखमेव सुखं भुञ्जानाः**
**स्वजीवन मूल्यवोधमवगच्छन्तः अन्येषां**

स्थावरजङ्गमानामपि कल्याणमाचरन्तिः भूमिजलाकाशानिल प्रदूषरमकुर्वन्तः सुखं तिष्ठत च मानवा मानवा भवत न अमानवाः।।इति वेदान्तशास्त्रस्य उद्देश्यम्।

## वैयाकरणदिशा ब्रह्मविमर्शः*

**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञास्व। तद् ब्रह्मेति।**इति उपनिषदः सिद्धान्तानुसारेण तथा च –

*व्याख्याता, व्याकरणविभागः
दूर्गाचरणषडङ्गी, राष्ट्रियसंस्कृतसंस्थानम् श्रीसदाशिवपरिसरः, पुरी, ओडिशा

**यतः सर्वाणि भूतानि भवन्त्यादि युगागमे।**
**यस्मिंश्च प्रलयं याति पुनरेव युगक्षये।।**

इति श्लोकेन एतदवगम्यते यत्-

विश्वस्य जन्मस्थितिलयादिकं यतः सर्वज्ञात् सर्वशक्तिमतः सर्वकारणकारणात् एव सिद्ध्यति तद् ब्रह्म एव। अनयोः उपनिषद्वचनश्लोकयोः अयं भावः यस्मात् ब्रह्मादीनि सर्वाणि भूतानि जायन्ते येन प्राणान् धारयन्ति विनाशसमये यास्मिंश्च विलीनः भवन्ति तद् अस्मद् विलक्षणः सर्वज्ञत्व सर्वकर्तृत्वादि गुणसमन्वितः परिपूर्णतमः परमात्मा परम्ब्रह्म एव। अतः श्रीमद्भागवते ब्रह्मस्वरूपविषये अभिहितम् –

**स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् जन्तुः।**
**नायं गुणः कर्म न सन्न चासन्निषेषशेषो जयतादशेषः।।**[2]

अस्य श्लोकस्यायं भावः सः एवं विधं यः देवादीनां मध्ये न कोऽप्नि असुरः न लिङ्गत्रयरहितः प्राणिविशेषः न गुणः न कर्म न सत् साधुः , न असत् असाधुः किन्तु निषेधशेषः अर्थात् सर्वरूपः सर्वभिन्नत्वे सति सर्वाभिन्नः सर्वात्मादिस्यर्थः। तदेव परब्रह्म एव।

यद्यपि सर्वेषां उद्देश्यमेकं तथापि ब्रह्मस्वरूपविषये आचार्यैः स्व स्व शास्त्रेषु भिन्नं भिन्नं मतमुपस्थाप्यते। प्रबन्धे अस्मिन् समासेन वैयाकरणमतं प्रतिपाद्यते। शाब्दिकैः ब्रह्मपदेन शब्दब्रह्म एव प्रतिष्ठापितम्।

व्याकरणशास्त्रस्य द्विविधं स्वरूपं दृश्यते। प्रक्रियात्मकं दर्शनरूपं च। प्क्रियात्मके स्वरूपे प्रकृतिप्रत्ययविभागादिसम्पादनं क्रियते। दर्शनात्मकस्वरूपे शब्दस्य तात्त्विकालोचा क्रियते। व्याकरणदर्शने ईश्वरशब्दस्य साक्षात् प्रयोगाभावे पि तत्पर्यायत्वेन ईश्वरपदेन वुबुधयिषया शब्दब्रह्म एव प्रतिष्ठापितम्।

**शब्दस्वरूपम्–**

वैयाकरणैः शब्दस्य द्विविधं स्वरूपं स्वीकृतम्। स्फोटात्मकं ध्वन्यात्मकं च। अतः भगवता पतञ्जलिना स्वकीयमहाभाष्यग्रन्थे अथ गौरित्यत्र कः शब्दः इति जिज्ञासायां इत्थं समाहितं येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनामर्थः सम्प्रत्ययः भवति स शब्दः।अस्य भाष्यस्य टीकायां कैयटः लिखति– **वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णानां प्रत्येकं वाचकत्वे द्वितीयावर्णोच्चारणानर्थक्यप्रसङ्गात्। आनर्थक्ये प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोतत्र्य-भावात् अभिव्यक्तिपक्षे तु क्रमेणैवाभिक्ततया समुदायाभावादेकस्मृत्युपरूढानां वाचकत्वे सरो रस इत्यादावर्थप्रतिपत्यविशेषप्रसङ्गान्ताद् व्यतिरिक्तः स्फोट – नादाभिव्यङ्गयोः वाचकः**।[3]

अस्मिन् लक्षणे स्फोटः शब्दः इति सूच्यते। सः स्फोटः शब्दब्रह्मरूपेण वैयाकरणैः स्वीकृतः। इदं स्वरूपं वैयाकरणानां मुख्यं स्वरूपम्। अतः प्रक्रियात्मके शब्दे यदा राम इत्यस्योच्चारणं क्रियते तदा मकारस्योच्चारणे रकारः आकारश्च न विद्यते। उच्चारितप्रध्वसिंत्वात्।अतः किंभूतात् शब्दात् अर्थबोधः इति जिज्ञासायामुत्तरमागच्छति स्फोटरूपः शब्दः अर्थात् स्फोटात्मकशब्दाद् एव अर्थबोधः। स च स्फोटः नित्यः परब्रह्म सच्चिदानन्दश्च।

स्फोटात्मकः शब्दः इत्यस्मिन् विषये अनेकानि प्रमाणानि उपलभ्यन्ते। अत्रैकं प्रमाणमुपस्थाप्यते वर्तिककारः कात्यायनः महाभाष्ये – सिद्धे शब्दार्थसम्बन्धे इति वार्तिकस्य व्याख्यावसरे **नित्यपर्यायवाची सिद्धशब्दः, अतः शब्दः नित्यः अर्थः नित्यः तयोः सम्बन्धः नित्यः इति उक्तवान्। नित्यस्य अनेकानि लक्षणानि तत्र प्रदाय अन्तिमे इत्थं समाहितं यस्मिन् तत्वं न विहन्यते तन्नित्यम्।**[4]

अस्मात् ज्ञायते यत् वार्तिककारेण शब्दः परब्रह्मरूपेण स्वीकृतः।

शब्दस्य अपरं स्वरूपं महाभाष्ये लिखितमस्ति– प्रतीतपदार्थकः लोके ध्वनिः शब्दः इत्युच्यते। अनेन लक्षणेन ध्वनिः शब्दः इति ज्ञायते। अयं ध्वनिः व्यञ्जकः स्फोटः व्यङ्ग्य। अयं परब्रह्मस्वरूपः स्फोटः वैयाकरणानां सर्वेश्वरः। केचन तं शब्दब्रह्म इति अपरनाम्ना व्यवहरन्ति। अधुना शब्दः ब्रह्मत्वेन कथं स्वीकृतः तस्मिन् विषये उपस्थाप्यते संक्षेपेण।

**१.कार्यकारणयोः अभेदात्-**

कार्यादेव कारणस्यानुमितिः यथा वैशेषिकैः कार्येषु कारणधर्मसमन्वयात् घटादिकर्यस्य पृथिवीत्वेन तत् कारणस्य परमाणोः पृथिवीत्वं स्वीकृतं तथा वैयाकरणैः शब्दस्य कारणत्वं स्वीकृतम्। लोके शब्दात् अर्थबोधः जायते। शब्दः अर्थरूपात्मकः। अर्थः अपि शब्दरूपात्मकः। अतः तयोः शब्दार्थयोः तादात्म्यसम्बन्धः। व्यवहारे शब्दार्थयोः भिन्नत्वेन प्रतीतिसत्त्वे अपि परमार्थदशायां तयोः अभिन्नत्वमेव।

अतः रामशब्दोच्चारणे यथा रामशब्दोपस्थितिः तथा तेन शब्देन सह दशरथापत्यम् इत्यर्थस्यापि उपस्थितिः। अस्मात् ज्ञायते वैयाकरणाः कार्यकारणात्मकं शब्दतत्त्वं जगत्कारणमङ्गीकुर्वन्ति। अतः भर्तृहरिणा वाक्यपदीये लिखितम्–

**अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[5]

**प्रकृत्यन्वयात्–**

शंसारे यावन्तः पदार्थाः दृश्यन्ते सर्वेषां बोधः शब्दादेव जायते। यथा मणयः सूत्रानुविद्धा एव हाराकारं स्वरूपं धारयन्ति तथैव सर्वमपि ज्ञानं शब्दानुविद्धं सत् ज्ञानाकारेण प्रतीयते। अतः वाक्यपदीये ब्रह्मकाण्डे १२३-श्लोके उक्तमस्ति यत् –

**न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**

---

[1]तै.उ. ३.२

[2]श्रीमद्भागवतम्

[3] महाभाष्यस्य पस्पशायाम् पृ. ३

[4]तत्रैव पृ. २०

[5]वा.प.का. श्लोकः, ९

**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।**[1]

अपि च– वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्[2] इति वाक्यात् प्रकृतेरेव सत्यत्वलाभात् भिन्नस्वरूपाणां भिन्नेन्द्रियगृहीतानां रूपादीनां शब्दतत्त्वं हि प्रकृतिः।

**२.शब्दादर्थप्रतीतित्वात् –**

शब्दादेवार्थस्य ज्ञानं जायते। शब्दमशृणोत्, अथ अर्थं शृणोमि इत्यपि व्यवहारे अपि अर्थस्य शब्दाभिन्नत्वं प्रतिपादयति। अर्थनिमित्तं शब्दः एव मूलबीजम्। अतः वाक्यपदीये उक्तम् –

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**[3]

**३.जगदुत्पत्तेः शब्दाश्रितत्वात्–**

संसारे स्थितिप्रवृत्तिनिवृत्तिरूपव्यवहार शब्दरूप एव। अतः शब्दः ब्रह्मत्वेन उररीकृतः, शब्दः ब्रह्मस्वरूप इत्यस्मिन् विषये अनेकानि शास्त्रप्रमाणानि समुपलभ्यन्ते। तद् शब्दब्रह्म एव जगत्कारणम्। तथा हि उपनिषत्सु –

**ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिातश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसूतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्।**[4]
**आत्मैवेदं सर्वम्।**[5]
**सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्।।**[6]
**यो देवी अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश।**
**य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः।।**[7]

एभ्यः श्रुतिवाक्येभ्यः यथा ज्ञायते परब्रह्म जगत्कारणं तथा शब्दब्रह्म जगत्कारणमित्यस्मिन् विषये अपि श्रुतिवाक्यानि परिदृश्यन्ते। प्रथमतः शब्दः ब्रह्मस्वरूपः इति विषये श्रुतिवाक्यानि उदाह्रियन्ते। तथाहि –

**ओमिति ब्रह्म।।**[8]
**वाग्धी ब्रह्म।।**[9]
**वाग्वै ब्रह्म।।** [10]
**ओमित्येतदक्षरमिदम्।।**[11]
**एतद् ध्येवाक्षरं ब्रह्म एतद् ध्येवाक्षरं परम्।**
**एतद् ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्।**[12]

शब्दब्रह्म जगत्कारणमिति प्रसङ्गे इत्थं प्रतिपादितम्- **वागेव विश्वा भुवनानि यज्ञे।**[13]**वागेवार्थं पश्यति, वागेवार्थं ब्रवीति, वागेवार्थं निहितः सन्ननोति, वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुंक्ते।**[14] शब्दब्रह्मणः जगत्कर्तृत्वं पालयितृत्व संहर्तृत्वं च विद्यते एव। शब्दः ब्रह्मस्वरूपः जगत्कारणं च इत्यस्मिन् विषये न केवलं श्रुतिवाक्यानि प्रमाणमपि तु शास्त्रान्तरेषु महती चर्चा विद्यते।

**४.शास्त्रप्रामाण्यात् –**

शब्दं विना संसारः तमसाच्छन्नः स्यात्। अतः दण्डिना उक्तम् –

**इदमन्धः तमः कृत्स्नं जायते भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते**[15]

तन्त्रशास्त्रे अपि –

सर्वभूतानां चैतन्यं शब्दब्रह्म इति प्रतिपादितम्। तथाहि–

**चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः।**[16]

भगवान् शङ्करः पार्वती प्रति कथयति सर्वं जगद् शब्दब्रह्ममयम्। यः शब्दब्रह्मविषयं शृणोति सः मुक्तिमवाप्नोतीति नास्ति सन्देहः।

अतः उक्तम् –

---

[1]ब्रह्मकाण्डम्, १२३
[2]छा.उ. ६.२.३
[3]वाक्यपदीये २.२३
[4]मु.उ. २.२.१
[5]छा.उ. ८.२.२५
[6]तत्रैव ६.२.१
[7]श्वे.उ. २.२८
[8]तै.उ. ९.८
[9]ए.उ. ३.२५
[10]बृ.उ. ४.२२
[11]माण्डूक्योपनिषद्-९
[12]कठ.उ. २.२.२६
[13]शत.ब्रा.-६.३.५.२
[14]नृसिंह– ६.२
[15]काव्यादर्शः – २.४
[16]शारदातिलकम् - ४

**शब्दब्रह्ममयं देवि शृणोति तन्त्रविद् यदि।**
**थदा मुक्तिमवाप्नोति सत्यं सत्यं न संशयः॥[1]**

साम्बपञ्चशिकायाः द्वितीयश्लोकेऽपि वर्णितं यद्–

इदं सर्वं जगत् शब्दतत्त्वम्। शब्दात् एव जगतः प्रक्रिया प्रचलति। तथा हि –

**यस्माद्वेद्यं किमपि परमं शब्दतत्त्वं त्वमन्त**
**श्तत् सदव्यक्तिं जिगमिषुशनैर्लाति मात्रा कला खे॥[2]**
**अव्यक्तेन प्रणववपुषा बिन्दुनादोदितं स**
**च्छब्दब्रह्मोच्चारितकरणव्यञ्जितं वाचकं ते॥[3]**

शब्दः ब्रह्मस्वरूपः इति उक्तः –

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा॥[4]**

व्यक्तमव्यक्तं च द्विविधमपि तत्त्वं शब्दब्रह्मणः एव स्वरूपभूतम्। तदेव शब्दब्रह्म नानाशक्तिभिरुपवृंहितं सत् बहुधा विभातीति मैत्रेयः विदुरमुपदिदेशः। तथाहि –

**शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः।**
**ब्रह्मावभाति विततो नानाशक्त्युपवृंहितः॥**

आचार्यमण्डनमिश्रमतमपि शब्दब्रह्म परंब्रह्म एव। अतः सः ब्रह्मसिद्धेः आदौ शब्दब्रह्म नमस्यति। तथाहि

**आनन्दमेकममृतमजं विज्ञानमक्षरम्।**
**असर्वं सर्वमभयं नमस्यामः प्रजापतिम्॥**

किन्तु जगत् शब्दब्रह्मणः परिणामः इति मनुना मनुस्मृतौ प्रतिपादितम्। तेन उक्तं सः परमात्मा हिरण्यगर्भरूपेणावस्थितः सन् सर्वेषां नामानि कर्माणि च पृथक् पृथक् रूपेण सृष्ट्यादौ वेदशब्देभ्यः प्रणीतवान्। तथाहि दृश्यते यत् –

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्यः एवादौ पृथक् संस्थाश्च निर्ममे॥**

**वैयाकरणानां मतम्–**

व्याकरणशास्त्रे शब्दब्रह्मविषये महान् विचारः परिदृश्यते। कलेवरवृद्धिभिया अत्र कानिचन मतानि उदह्रियन्ते–

**नागेशभट्टमतम्–**

शब्दब्रह्मविषये नागेशभट्टेन तन्त्रमन्त्रमुपजीव्य इत्थं प्रतिपादितं तथाहि–

**प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीन सर्वजगतो माया चेतने ईश्वरे लीयते। लयश्चायं पुनः प्रादुर्भावफलको नात्यन्तिको नाशः। उत्तरमार्गानुपपत्तेः। नापि सर्वथाऽभानम्। प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनभासे तद्भासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति, कार्यप्रवृत्त्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलाद्भासमानाऽप्यभानप्रायैव। ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्वका सृष्टिः माया पुरुषावाविर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशी बीजम्, चिदचिन्मित्रोऽशों नादः चिदंशो बिन्दुरीति। अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते। अस्मात् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपभोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जदुपादानमेव स्वपरादिशब्दैः व्यह्रियते।[5]**

अतः उक्तम् –

बिन्दोस्तस्माद् भिहामानाद् खो व्यक्तात्मकोऽभवत्।

**स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते॥[6]**

**महाभाष्यकारस्य मतम् –**

भगवता पतञ्जलिना शब्दब्रह्म एव परब्रह्म इति स्वीकृत्य ऋग्वेदमन्त्रव्याख्यावसरे स्वकीयमहाभाष्ये तत् स्वरूपं प्रतिपादितम्। तथाहि व्याकरणप्रयोजनकथनावसरे –

**चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो बृषभो रोरवीति महो देवो मर्त्यामाविवेशः॥**

इति अयं मन्त्रः प्रदत्तः। तत्र महादेवी मर्त्याम् अविवेशेत्यस्य यदा व्याख्या क्रियते तदा लिखति – महान् देवः शब्दः मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा रुचादित्यध्येयं नागेशः लिखति अत्र उद्योते–

---

[1]निर्वाणतन्त्रम्, नवमपटलः, २९
[2]साम्बपञ्चशिखा, द्वितीयश्लोकः
[3]महाभरतशान्तिपर्वणि – २३२.२४
[4]श्रीमद्भागवतम् – ३.२२.४
[5]सिद्धान्तलघुमञ्जुषा, पृ. २६
[6]प्रपञ्चसारतन्त्रः,प्रथमपटलः, श्लोकसंख्या-२३

**महान् परब्रह्मस्वरूपो देवोऽन्तर्यामिरूपः शब्दो मत्र्येष्वादिष्ट इत्यर्थः।**[1]

किञ्च अक्षरशब्दस्य व्युत्पत्तावपि परब्रह्मार्थः प्रकाशितः तथाहि किमिदमक्षरमिति। ' अक्षरं न क्षरं विद्यात्', न क्षीयते न क्षरतीति वा अक्षरम्। टीकायाम् अस्यां कैयटः लिखति-' अत्र क्षियः क्षरतेर्वा विनाशार्थस्य षञ्पूर्वस्य रूपम्।" यथा ब्रह्म व्यापकं तथा शब्दब्रह्म व्यापकम् इति धिया अक्षरशब्दस्य व्युत्पत्तिः क्रियते महाभाष्यकारेण 'अश्नोतेर्वा सरोऽक्षरम्।" अर्थात् अर्थमश्नुते व्याप्नोति इत्यक्षरं पदं वाक्यं वा। अस्मात् ज्ञायते अक्षरशब्दः अविनाश्यर्थपरतया व्युत्पादितः। **एतत् सर्वं भाष्ये वार्तिकम्।**[2]

**भर्तृहरिमतम् –**

भर्तृहरिणा परंब्रह्म एव शब्दब्रह्म इत्यङ्गीकृत्य नैकाः कारिका उदाहृताः। तासु कारिकासु अत्र काश्चन उदाह्रियन्ते। शब्दात् सर्वेषां विवर्तः। अतः वाक्यपदीयस्य आदौ –

**अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[3]

अस्याः कारिकायाः टीकायां हरिवृत्तौ एका कारिका उद्धृता–

**ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।**
**विवृतं शब्दमात्राभ्यस्ता स्वेन प्रविलीयते॥**

शब्दः परब्रह्म एव। शब्दात् जगतो विवर्तः। युगक्षये शब्दे एव लयः। किञ्च शब्दा एव विश्वस्य कारणम्। अयं संसारः शब्दस्य परिणामः। अत्र परिणामशब्दः विवर्तार्थे प्रयुक्तः। अतः वाक्यपदीये उक्तम् यत् –

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्देभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥**[4]

इममर्थं प्रतिपाद्य नाट्यशास्त्रकारेणोक्तमस्ति यत् –

**वाङ्मयनीह शास्त्राणि वाङ्निष्ठानितथैव च।**
**तस्माद्वाच्यः परं नास्ति वाग्धि सर्वस्य कारणम्॥**[5]

**एकमेवाद्वितीयम्**[6]**, एको देवो बहुधा सन्निविष्टः,**[7]**एको देवः सर्वभूतेषु गूढः;**[8] इत्यादिवचनेभ्यः ब्रह्मणः एकत्वं प्रतिपाद्यते तथा शब्दब्रह्म एकमेव। अतः भर्तृहरिणा उक्तम् –

**एकमेव यदाम्नातं भिन्नं शक्तिव्यापाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनैव वर्तते॥**[9]

अर्थात् यत् शब्दब्रह्म सजातीयविजातीयस्वगतभेदशून्यमेकमेव कथितं श्रुत्यादिभिः तद् ब्रह्म विविधशक्तीनामाश्रयणात् अनेकरूपं भवति। परन्तु वस्तुनः तदेकैव इति निष्कर्षः –

एतस्मादनुशीलनात् ज्ञायते यत् वैयाकरणाः शब्दब्रह्म सर्वेश्वररूपेण प्रतिपादयन्ति। यथा वेदान्तिनः ब्रह्मणः विश्वस्य विवर्तरूपा तथैव शाब्दिकनये अर्थरूपस्य जगतः शब्दविवर्तत्वम्। यथा वेदान्तशास्त्रे जगतः मायाविजृम्भितत्वं सत्यात्मकस्य ब्रह्मणः अनुभवसिसाधयिषानिमित्तकं तथैव शब्दशास्त्रे व्याकरणे प्रकृतिप्रत्ययवर्णपद-वाक्यात्मकस्य शब्दजालस्य विस्तारः सद्रूपस्य शब्दब्रह्मणः प्रतिपिपादयिषामात्रम्। ब्रह्मपरमात्माभगवत्प्रभृतितत्त्वजातस्य ब्रह्मप्रत्यक्षस्यानुभवे अपि निखिलस्याप्यर्थजातस्य शब्दमूलकत्वेन प्रत्यक्षतायां न हि संशेरते सुधिय इति शम्॥

## सर्वेश्वरस्य माधुर्यम्[*]

**तमीश्वराणां परमां महेश्वरम्तदेवतानां परमञ्च दैवतम्।**

**स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः॥**[1]

---

[1]पस्पशाह्निकम्, पृ. ३८-३९
[2]म.भा.प्रत्याहाराह्निके, ञमङणनम् इति सूत्रे
[3]वा.प. १.१
[4]ब्र.का. २१२
[5]अ. २४
[6]छा.उ. ६.२.२
[7]तै.आ. ३.२४
[8]श्वे.उ. २.१२
[9]वा.प.का. २
[*]**प्रो.गौरप्रियादाश**

इत्यादि श्रुति-प्रामाण्येन ब्रह्मणः सर्वातिशायि पारमेश्वर्यं व्यात्तीभवति। भगवच्छब्दस्यापि तदेव तात्पर्यं पर्यवस्यति। तथाहि –

**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः त्रियः।**

**ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना॥**[2]

इति विष्णुपुराणात् भगशव्दवाच्यानां षड्गुणानाम् आधार एव भगवान्। तेषु च षड्गुणेषु ऐश्वर्यमेव सर्वप्रधानम् इतरेषां तस्यैव प्रपञ्चत्वात्। अत एव –

**शुद्धे सदाविभूत्याख्ये परे ब्रह्मणि वर्तते।**

**मैत्रेय भगवच्छब्दः सर्वकारण-कारणे॥**[3]

इति पूर्ववर्तीश्लोके महाविभूत्याख्य एव भगवच्छब्द प्रवृत्तिः प्रादर्शि। तत्र महाविभूतिशब्दञ्च व्याकूर्वनां स्वामिपादेनोक्तं – "महाविभूत्याख्ये अचिन्त्यैश्वर्ये इत्यर्यः"[4]। एवञ्च पारमेश्वर्यं सर्वैश्वर्यं वा वस्तुनं भगवत्त्यमिति निश्चीयते।

अत्रैव शङ्काऽवससः – कान्ता-वियोग-व्याकुल-विलाप-विवभीकृत चेतसा स्वगमृगवर्गैभ्यः सीतासमाचारं पृच्छति अटव्याम् अटति दाशरथौ कुतो वा पारमेश्वर्यम् ? कुत्र च "यः सर्वज्ञः सर्ववित्"[5] – इति श्रुति-सिद्धं सार्वश्यम् ? किञ्च नागपाशवैवश्येन निश्चेतने गरुडप्रसादेन च लव्धसंशे रघुनाथे कुतो वा अप्रतिहतं वीर्यम् ? कुतो वा "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत अतस्य वा अक्षरस्य प्रशासने गर्ग द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासन्ते…."[6]इत्यादि श्रुतिसिद्धं सर्वशास्त्रृत्वं तस्मिन् ? किञ्च दधिमन्यनीस्फोटनेन कृतागसि हैयङ्गव चौर्यविशङ्कितेसणम् अश्रुकलिलाञ्जनराग्भ्रमाक्षं वक्त्रं निनीय मातुः भयभावनया निलीयमाने –

"कृतागसं तं प्ररुदन्तमक्षिणी

कषम्तमञ्जन्मसिनि स्वपाणिना।

उद्वीक्षमाणं भयविह्वलेक्षणम्

हस्ते गृहीत्वा भिषयन्त्यवागुरुत्॥"[7] इत्यादिप्रमाणेन

"भो अशाल प्रकृते ! वानरबन्धो ! मन्यनीस्फोटक ! अद्य नवीनीतादिकं कुतः प्राप्ससि तथा बध्नाम्यद्य यथा सहचरबालकैः सह खेलितुं नवनीतमपहर्तुञ्च न प्रभविष्यसि। इदानीं यद्विताडनात् किं विभेषी"[8] इत्यादिरीत्या मान्नां निर्भत्स्यमाने व्रजचन्द्रपुरन्दरे दामोदरे श्यामसुन्दरे कुतो महामहैश्वर्यं कुतो वा ब्रह्मरुद्रादिप्रभुत्वम्? तस्मात् नरलीले राधवेन्द्र वृन्दावनचन्द्रे वा न पारमैश्वर्यं न च भगवत्त्वम्? इति चेत्? उच्यते – सत्यम् इदं भक्तवात्सल्यविस्मावितपारमैश्वर्यरूपं माधुर्यमेव तस्य भगवत्तासारभूतं तत्त्वम्। तस्य सर्वैश्वर्यमपि माधुर्यादीनमेव तच्च भगवत्त्वे न दूषकं प्रत्युत पोषकमेव। तदुक्तं श्रीशुकदेवेन –

**एवं सन्दर्शिता ह्यङ्ग हरिणा भृत्यवश्यता।**

**स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे॥**

अत्र च व्याख्यातं श्रीचक्रवर्तिचरणैः – **"भगवतः परम-पारमैश्वर्ये सत्यपि प्रेमवश्यता निवन्धनं वन्धनमिदं परमचमत्कारित्वाद् भूषणमेव न तु दूषणमित्याह– एवं हरिणा स्वस्य आत्मारागत्वेऽपि बुभुक्षया पूर्णकामत्वेऽपि अतृप्त्या भयदत्वेऽपि भयपलायनाभ्यां मनोऽग्रयानत्वेऽपि गात्राबलाद्ग्रहणेन आनन्दमयत्वेऽपि दुःखरोदनेन सर्वव्यापकत्वेऽपि बन्धनेन भवत्वश्यता स्वाभाविक्येण स्वस्य दर्शिता। ….ननु तर्हि कुतः स्वाधोनत्वं ? नत्राह – यस्येति चिच्छवितसारभुतेन प्रेम्णैव तस्यानन्दातिशयार्थमेव भक्तवश्यत्वं निष्पाद्यत इति प्राक् प्रपञ्चितम्"** इति। अत एव भगवतः माधुर्य तस्य ऐश्वर्यमपि स्वाधीनीकृत्य विराजमानं सत् भगवत्वं पु….. न क्लिश्नातीति विवेकः।

[1]श्वेताश्वतर उप. – 6.7
[2]विष्णुपुराणे – 6.5.74
[3]तत्रैव – 6.5.72
[4]तत्रैव श्रीधर्याम्
[5]मु. उ. – 1.1.9
[6]बृ.उ.
[7]श्री. भा. – १०.९.११
[8]तत्रैव – १०.९.१९

पराभूतैश्वर्यं माधुर्यमिदं किं लक्षणकमिति जिज्ञासाया तत्स्वरूपं समासतो विचार्यते। यथा भगवत् ईश्वरः तथैव मधुरोऽपि। अतः ईश्वरस्य भावः = ऐश्वर्यमिति व्युत्पत्तिवत् मधुरस्य भावः = माधुर्यमिति विग्रहेण परममधुरस्य भगवतो रूपगुणलीलीदीनां सर्वचैतन्यगतकारकः त्रिभुवनमनोह्लादकः असाधारणो धर्म एव माधुर्यम्। अत एव श्रीबलदेवविद्याभूषणेन **"ब्रह्माद्यभिमानपराभावकः प्रभावी हि ऐश्वर्यम्"** इति ऐश्वर्यलक्षणं विधाय **"माधुर्यं नाम चेष्टानां सर्वावस्थासु चारुता'** इति माधुर्यलक्षणं व्यधायि। उक्तं च चक्रवर्तिपादेन – **"महैश्वर्यस्य द्योतने वाऽद्योतने च नरलीलत्वानतिक्रमो माधुर्यम्"**। एवञ्च महैश्वर्यसमानाधिकरणं परमचमत्कारकारणं नरलीलत्वमेव माधुर्यमिति सिद्धान्तः।

इदञ्च माधुर्य भगवति श्रीकृष्णे असारण्येन वर्तते। अत एव नृसिंह-वामन-रामादिषु महैश्वर्यस्य सार्वत्रिकत्वेऽपि श्रीकृष्ण-माधुर्यस्य अदष्टश्रुतचरत्वेन **"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्'** इति तस्य स्वयं भववक्त्व्यं सुतरां संगच्छते। अत एवं श्रीकृष्णमाधुर्यस्य...... नदितरे दुर्लभमिति सशपथमेव ब्रुते श्रीलीलाशुकः –

**तत्कैश्वरं तच्चवक्त्रारविन्दं**
**तत्कारुण्यं ते च लीलाकटाक्षाः।**
**तत्सौन्दर्यं सा च सान्द्रस्मितश्री**
**सतां सत्यं दुर्लभं दैवतेऽपि ॥**

तस्मात् माधुर्यवारिधेरेतस्यैव तरङ्गभङ्गे तस्य मनः प्लवतामिति स प्रार्थयते –

**माधुर्यवारिधिसदाम्बुतरङ्गभङ्गी-**
**शृङ्गारसङ्कुलित-शीत-किशोरवेषम्।**
**आमन्द-हासललिताननचन्द्रविम्ब-**
**मानन्दसंप्लवमनु प्लवतां मनो मे॥**

माधुर्यवारां निधेरस्य श्रीकृष्णस्य माधुर्यं प्रधानतश्चतुर्धा प्रथितम्; तस्य हि लीलामाधुर्यं, परिकरमाधुर्य, वेणुमाधुर्यं, रूपमाधुर्यम् इति भेदान्। तदुक्तरम् –

**सर्वाद्भुतचमत्कार-लीलाकल्लोलवारिधिः।**
**अतुल्यमधुरप्रेममण्डितप्रियमण्डलः॥**
**त्रिजगन्मनसाकर्षी मुरलीकलकूजितः।**
**असमानोर्ध्वरूपश्री-विस्मापित चराचरः॥**
**लीला-प्रेम्णा प्रियाधिकरां माधुर्ये वेणुरूपयोः।**
**इत्यसाधारणं प्रोक्तं गोबिन्दस्य चतुष्टयम्॥**

चतुर्विधं माधुर्यमेतत् प्रसङ्गतः सोदाहरणं दिङ्मात्रं प्रदर्श्यते। तथाहि लीलामाधुर्यं तावत् प्रथमम्। अविद्या-काम-कर्मभिः क्लिश्यमानानां जनानां समुद्धराय श्रवणस्मरणयोग्यलीलानां विधानमेव भगवदवतारस्य मुख्यो हेतुः। तत्रापि श्रीकृष्णः सर्वाद्भूतचमत्कारलीलाकल्लोलाणां वारिधिः अवातरयत्। अत्र स्वलीलायाः स्वस्यापि आकर्षकत्वं मन्वानेन स्वयमेवोक्तं भगवता–

**सन्ति मे यद्यपि प्राज्या लीलास्तास्ता मनोहराः।**

**नहि जाने स्मृते रासे मनो मे कीदृशं भवेत्॥**

श्रीकृष्णलीलायाः सर्वचेतोहरत्वादेव परमब्रह्मनिष्ठोऽपि लब्धसमाधिरपि त्वया गृहीतचेता श्रीशुकदेव श्रीमद्भागवतमधौष्ट इति स स्वयमेव अबादीत् –

**परिनिष्ठोऽपि नैर्गुण्य उत्तमशोकलीलया।**

**गृहीतचेताः राजर्षे आख्यानं लदधीतवान्॥**

किञ्च स्वयं श्रीमन्नारायणश्रेयसी भगवती लक्ष्मी ब्रह्मादिप्रार्थितकटाक्षलेशापि श्रीव्रजलीलया समाकृत्य सती तत्प्राजये सुचिरं तपः समचरदिति श्रीमद्भागवते नागपत्न्यः प्रमाणयन्ति –

**कस्यानुभावोऽस्य न देव विद्महे**

**तवाङ्घ्रिरेणुस्पर्शाधिकारः।**

**यद्वाञ्छया श्रीर्ललनाचरत्तपो**

**निहाय कामान् सुचिरं धृतव्रता॥**

अत एव –

**रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः।**

**योगेश्वरेण कृष्णेन तासां मध्ये द्वयो र्द्वयोः॥**

व्याख्यातं श्रीचक्रवर्तिचरणैः – रास एव उत्सवः भक्तजनद्वयमनश्चातकेभ्य आनन्दामृतप्रदायकः सम्यगेव प्रवृत्तः। केन, तासां मण्डलरूपेण अवस्थितानां गोपीनां द्वर्योर्द्वयोर्मध्येन प्रविष्टेन कृष्णेन। अत्र सप्रवर्तितं इत्यनुक्तेः स्वतन्त्रकर्तृत्वं तस्मै रासात्रएव ददता स्वयञ्च करणत्वं भजता श्रीकृष्णेन स्वस्मात् सर्वशक्तिभ्यः सर्वलीलाभ्यश्च शसस्यैव महोत्कर्षः स्वदत्तो व्यञ्जयामासे। अत एव लक्ष्मीप्रभृतयोऽपि तं लब्धुमुत्कण्डन्त एव ननु लभन्त इति ज्ञेयम्। उक्तञ्च लघुभागवतामृते –

**चरितं कृष्णदेवस्य सर्वमेवाद्भुतं भवेत्।**

**गोपाललीला तत्रापि सर्वतोऽति मनोहरा॥**

परकरमाधुर्यं श्रीकृष्णस्य माधुर्यस्य द्वितीयो भेदः। भक्त-भगवतोः सम्बन्धस्य नित्यसिद्धत्वात् तद्भक्तानामुत्कर्षसिद्धौ भगवतोऽपि तत्सिद्धिः। अतो भगवतः परिकराणां माधुर्यं तन्माधुर्यमेव परिबृंहयति। नारायणस्य परिकराः चतुर्भुजाः शङ्खचक्रगदाद्ययुधधारिणः किरीटिनः, श्रीकृष्णस्य तु सर्वे परिकराः द्विभुजा गोपवेषाः गुञ्जागैवनमालादिमन्त इति तस्य नरलीलत्वस्य सर्वतैवानुरूपाः। तदुक्तमस्ति –

**एवं निगूढात्मगतिः स्वमायया**
**गोपात्मजत्वं चरितैर्विडम्बयन्।**
**रेमे रमालालित-पादपल्लवो**
**ग्राम्यैः समं ग्राम्यवदीश-चेष्टितः॥**

व्याख्यातञ्चात्र चक्रवर्तिपादैः – स्वयोगमायया आवृतात्मैश्वर्यः स्वयं गोपात्मजोऽपि चरितैर्गोपात्मजत्वं भूपालपुत्रत्वं विडम्बयन् निरस्कुर्वन् सोऽप्येवं लीलां कर्तुं न जानातीति भावः। ऐश्वर्यदृष्ट्या रमालालितपादपल्लवोऽपि तदावरणात् कैश्चिद् ग्रामैः बन्धुभिः सह कश्चित् ग्राम्यो बन्धुरिव रेमे.

गोप्यस्तु तस्य परिकरेषु मूर्धानमेवाधिरुह्य विराजन्ते। ताः श्रीकृष्णदर्शने पक्ष्मातजन्यमपि विरहमसहमानाः पक्ष्मकृतं विधातारं जडत्वेन विशिंसन्ति। तथाहि –

**अटति यद्भवानह्नि काननं**
**त्रुटिर्युगायते त्वामपश्यताम्।**
**कुटिलकुन्तलं श्रीमुखं च ते**
**जड उदीक्षतां पक्ष्मकृद् दृशाम्॥**

श्रीकृष्णदर्शनस्य अभावे निमेषस्य सप्तविंशतितमं भागं त्रुटिपर्यायं युगायितं कुर्वाणाः एता तद्दर्शनावसरे तु परमानन्दमग्नएव संजायन्ते। तथाहि गोपीनां परमानन्द आसीद् गोविन्ददर्शने।

अणं युगशतमिव यासां येनविनाऽभवत्।

एतेन श्रीकृष्णस्य असाधारणं परिकरमाधुर्यं प्रकटीभवति। अस्य वेणुमाधुर्यं रूपमाधुर्यञ्च अपरं माधुर्यद्वयम्। यथा श्रीकृष्णस्य मुरली त्रैलोक्यसम्मोहिनी तथैव तस् रूपं त्रैलोक्यसौभणम्। तदुक्तं गोपीभिः -

**का स्यङ्गते कलपदायतमूर्छितेन**
**सम्मोहितार्यचरितान्नचन्नेत्रिलोक्याम्।**
**त्रैलोक्य-सौभगमिदञ्च निरीक्ष्य रूपं**
**यद्गोद्विजद्रुममृगाः पुलकान्यमिभ्रन्॥**

श्रीकृष्णस्यानन्यसाधारणं सौन्दर्यमिदं सौभगसम्पन्नेः सारभूतं भूषणस्य भूषणभूतम्। एतेन सौन्दर्यजातेन त्रैलोक्यसम्मोहनस्य वार्ता तु दूरे आस्मां तदीयं सौन्दर्यं तस्य स्वस्यैव विस्मापनमासीदिति श्रीमद्भागवते उद्धवस्य वचनात् ज्ञायते। तथा हि–

**यम्मर्त्यलीलौपयिकं स्वयोग-**
**मायाबलं दर्शयता गृहीतम्।**
**विस्मापनं स्वस्य च सौभगर्द्धेः**
**परं पदं भूषण-भुषणाङ्गम्॥**

स्वस्य विस्मापनमिति तत्त्वमेव वलितामाधवे श्रीकृष्णस्य स्वानुभववचनात् स्पष्टीभवति। तद् यथा –

**अपरिफलितपूर्व कश्चमत्कारकारी**

**स्फुरति मम गरीयानेष माधुर्यपूरः।**
**अयमहमपि प्रेश्य यं लुव्धचेताः**
**सरभसमुपभोक्तुं कामये राधिकेव॥**

एवञ्च श्रीकृष्णस्य लीला-प्रेष्ठ-वेणु-रूपाणां माधुर्यम् समासतो विचारितम्। इदमेव श्रीविल्वगङ्गल आह –

**मधुरं मधुरं वपुरस्य विभो**
**र्मधुरं मधुरं वदवंमधुरम्।**
**मधुर्गन्धि मृदुस्मितमेतदहो**
**मधुरं मधुरं मधुरं मधुरम्॥**

श्रीकृष्णचन्द्रस्य ललनालिधैर्यदलं सौन्दर्यं रमास्तम्यिनीं लीलां पारेपरार्द्धं च गुणान् निरीक्ष्य श्रीगोविन्दलीलामृवे शुकमुखेन श्रीकविराजकृष्णदासगोस्वामी तं जगन्मोहनत्वेन विशिनष्टि उद्गायति च सान्द्रघोषेण–

**सौन्दर्यं ललनालिधैर्यदलनं लीला रमास्तम्भिनी**
**वीर्यं कन्दुकिताद्रिवर्यममलाः पारे परार्द्धे गुणाः।**
**शीलं सर्वजनानुरञ्जनमहो यस्यायमस्मत्प्रभु**
**र्विश्वं विश्वजनीनकीर्तिरवतात् कृष्णो जगन्मोहनः॥**

एवं सर्वेश्वरस्य माधुर्य-धुर्यं स्थालीपुलाकन्यायेन प्रदर्श्य विरम्यते विस्तरादिति शम्।

## न्यायनये ईश्वरतत्त्वम्*

महर्षिणाऽक्षपादेन दुःखपङ्कनिमग्नानां जनानामुद्धारकामनया अष्टादशविद्यास्थानेष्वभ्यर्हितत-मामान्वीक्षिकीं प्रणिनाय लोके चतुर्विधपुरुषार्थप्राप्तिः समेषां मानवानां नूनमभीष्टा। तत्राप्यन्तिमस्य लब्धये विशेषेण यतन्ते निःश्रेयसार्थिनः। निःश्रेयसं च वेदविहितमार्गानुसरणपुरस्सरं दर्शनानुशीलनं विना न सिद्ध्यति। आस्तिकनास्तिकभेदेन दर्शनं द्विविधम्। तत्र वेदप्रामाण्यमनङ्गीकुर्वन्नेव चार्वाकबौद्धजैनदर्शनानि नास्तिकदर्शनत्वेन परिगृह्यन्ते एवं षड्दर्शनान्येवास्तिकदर्शनत्वेन सङ्गण्यन्ते। यथा–

**कणादस्याक्षपादस्य व्यासस्य कपिलस्य च।**
**पतञ्जलेर्जैमिनेश्च दर्शनानि षडेव हि॥**

दर्शनेषु न्यायस्य तदितरसर्वोपकारकत्वादस्ति वैशिष्ट्यम्। तत्रादौ षोडशपदार्थानां नामोल्लेखप्रदर्श-नपुरस्सरं **'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम'**इति प्रथमं सूत्रं

*डा.महेशझाः

विरचितम्[1]। अपि च **'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'**[2] इति निगदितमक्षपादेन। कणादेनापि एतदेव मतं स्वीकृत्यावाचि-**'धर्मविशेषप्रसूतान् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्वज्ञानान्निःश्रेयसाधिगमः'**[3] इति।

न्यायनये 'मानाधीनामेयसिद्धिरि'ति सिद्धान्तमवलम्ब्य सर्वप्रथमं प्रमाणतत्त्वं परिशीलितम्। प्रमाणेन प्रमात्मकज्ञान-विषयतया सिद्धानां प्रमेवसंज्ञकानां पदार्थानां कियन्तो भेदाः एतद्विषये महर्षिणा द्वितीयं सूत्रमुक्तम्**'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्'**[4] इति। तत्र द्वादशविधेषु प्रमेयेषु प्रथमं भवति परममहान् विभुर्नित्यश्चात्मा। तच्च 'आत्मत्वजातिमत्त्वम्'। तच्चात्मत्वं समवायसम्बन्धावच्छिन्नसुखत्वावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकतया सिद्ध्यति। तच्चात्मत्वं जीवात्मनि-परमात्मनि च विद्यते। अतः जीवात्मपरमात्मनोः भवति आत्मत्वाभिधे-यत्वम्।

अत्रेयमाशङ्काजायते यत् आत्मत्वजातिस्तु सुखादिसमवायिकारणतावच्छेदकतया सिद्धा, सा च सुखदुःखाश्रये जीवात्मन्येव तिष्ठति, न तु परमात्मनि, ईश्वरे सुखादेरभावात्, कथं परमात्मनः महेश्वरस्यात्मपदवा-च्यत्वम्? एवञ्च परमात्मन आत्मानन्तर्गततया दशमद्रव्यत्वापत्तिः

अत्रेत्थं विचिन्त्यन्ते, नहि आत्मत्वजातिमत्त्वम् आत्मनो लक्षणम्, अपितु 'समवायसम्बन्धेन ज्ञानाश्रयत्वम्' आत्मनः लक्षणम्। एवञ्च जीवात्मनि जन्यज्ञानस्य परमात्मनि च नित्यज्ञानस्य विद्यमानतया भवति परमात्मनोऽप्यात्मपदवाच्यत्वमात्मान्तर्गतत्वञ्च। अतः नहि परमेश्वरस्य दशमद्रव्यत्वापत्तिः। परमात्मनि च परमत्वमुत्कृष्टत्वं, तच्च प्रकृते सृष्टिस्थितिलयकर्तृत्वरूपम्। अस्य परमात्मन एव ईश्वर इत्यभिधानम्। ईशना नाम चेतनाशक्तिः, क्रियाशक्तिर्वा, तस्याश्च निरतिशयायाः परमात्मनि सत्त्वेन तस्येश्वरत्वं नितरां सूपपन्नं भवति। अयञ्चेश्वरः न्यायदर्शने**'ईश्वरः कारणम्, पुरुषकर्माफल्यदर्शनात्**[5]' 'न पुरुषकर्माभावे **फलनिष्पत्तेः'**[6], **'तत्कारितत्वादहेतुः'**[7] इत्यादिभिः त्रिभिः सूत्रैः पूर्वोत्तरपक्षरूपेण संसारनिमित्तकारणतया जीवानुष्ठितकर्मणा-मधिष्ठातृतया च संसाधितो विद्यते। भाष्यकारोऽपि एषां सूत्राणां प्रतिपादनावसरे सिद्धान्तरूपेण प्रतिपादयति - 'आत्मकल्पश्चायम्। यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम्' इति। ईश्वरे एते गुणाः सन्तीति स्वयमेव प्रतिपादयन्ति 'गुणविशिष्टमात्मान्तरमीश्वरः तस्याऽऽत्मकल्पात् कल्पान्तरानुपपत्तिः, अधर्ममिथ्याज्ञानप्रमा-दाहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यं, सङ्कल्पानुविधायी चास्य धर्मः। प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्तयति, एवञ्च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यमितिग्रन्थेन।[8]

भाष्यकृद्भिः साक्षादीश्वरसाधकानुमानं न प्रदर्शितम्, किन्त्वेतावदेवोक्तं-'न चात्मकल्पादन्यः कल्पः सम्भवति। न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम्। आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता ईश्वर इति। **बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानाय मविषयातीतं कः शक्त उपपादयितुम्**[9]? अर्थात् बुद्धिं विना अन्यः कोऽपि धर्म ईश्वर उपपादयितुं न शक्यते, येन ईश्वरस्य सिद्धिः स्यात्। इत्थमत्र भाष्यकृद्भिः ईश्वरसाधकलिङ्गरूपेण ईश्वरीयबुद्धिमेव निर्दिशति। अस्यैव वार्त्तिके विस्तारो विद्यते। 'तत्कारित्वादहेतुः' सिद्धान्तसूत्रमेतत् वार्त्तिककारोद्योतकराचार्य इत्थं व्याख्याति-सूत्रकारस्तत्कारित्वाद् ईश्वरकारित्वादिति वदति। तथा चात्र सूत्रकारमते ईश्वरस्य निमित्तकारणत्वमेवाभिहितम्। अत्र मन्ये सर्वप्रथमं वार्त्तिककृद्भिः साक्षादीश्वरसाधकानुमानद्वयं प्रदर्शितं विद्यते। तत्र प्रथमानुमानं यथा-क्षित्यप्तेजोवायुरूपमहाभूत-चतुष्टयम्, स्वोचितधारणक्लेदनादिक्रियायां बुद्धिमत्कारणाधिष्ठितं सत् प्रवर्तते, उक्तमहाभूतवर्गस्याचेतनत्वात्। यद्यदचेतनं वस्तु स्वोचितक्रियायां प्रवर्तते, तद्बुद्धिमत्कारणाधिष्ठितं सदेव प्रवर्तते यथा वास्यादिशस्त्रम्। वास्यादिकं काष्ठादिच्छेदनक्रियायां बुद्धिमत्पुरुषकर्तृकाधिष्ठितं सदेव प्रवर्तते। एवमेव पृथिव्याद्यचेतनभूतसमूहः स्वोचितधारणक्रियायां बुद्धिमत्कारणाधिष्ठितं सदेव प्रवर्तते। **अचेतनमहाभूतवर्गस्य यस्तावदधिष्ठिता, स एव बुद्धिमत्कारणमीश्वरः**[10]। द्वितीयानुमानं यथा-**तृणतरुपर्वतादि, तदुपादानाभिज्ञकर्तृकं (निमित्तं) तृणादेरुत्पत्तिमत्त्वात्, कार्यत्वात्, यद्यत्कार्यम्, तदुपादानाभिज्ञकर्तृजन्यम्, यथा प्रासादादिकम्**[11]। तथा च तृणतरुपर्वतादेरुपादानाभिज्ञः कर्ता एवेश्वर इत्यभिप्रायः।

वार्त्तिकोक्तं बुद्धिमत्कारणकत्वसाध्यकानुमानं तात्पर्यटीकाकाराः वाचस्पतिमिश्राः समर्थयामासुः। तात्पर्यटीकायामित्थमीश्वरानुमानं तैः प्रकटितम्-**'विवादाध्यासितास्तनु-तरुगिरिसागरादयः उपादानाभिज्ञ-कर्तृकाः उत्पत्तिमत्वात् अचेतनोपादानत्वाद्वेति**[12]। अत्र सामान्यमुखीव्याप्तिः विवक्षिता। यद् यदुत्पत्तिमद-चेतनो-पादानकं वा भवति तत्तत्सर्वमुपादानाद्यभिज्ञकर्तृपूर्वकं भवति यथा प्रासादादिरिति। एवञ्चोक्तानुमाने चेतनकर्तृकत्वं साधनीयमिति टीकाकाराणामाशयः।

भासर्वज्ञेन स्वकीये न्यायसारग्रन्थे ईश्वरानुमानप्रकरणे 'तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञःसकलजगद्विधाता। स कथं ज्ञातव्यः, अनुमानादागमाच्च। तथाहि विवादाध्यासितमुप-लब्धिमत्कारणकम्, अभूत्वाभावित्वात् वस्त्रादिवत् इति। सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात्। ततः सामान्यसिद्धौ परिशेषात् कार्यविशेषाच्च कर्तृविशेषसिद्धिः, चित्रादिकार्यविशेषात्तत्कर्तृविशेषसिद्धिवत्। एको रुद्रो न द्वितीयाय

[1]न्यायसूत्रम् - १/१/१
[2]न्यायसूत्रम् - १/१/३
[3]वैशेषिकसूत्रम् - १/१/४
[4]न्यायसूत्रम् - १/१/२
[5]न्यायसूत्रम् - ४/१/१९
[6]न्यायसूत्रम् - ४/१/२०
[7]न्यायसूत्रम् - ४/१/२१
[8]न्यायभाष्यम्, पृ.-३५४
[9]न्यायसूत्रभाष्यम् - ४/१/२१
[10]न्यायवार्त्तिकम्, पृ.-४६१
[11]तत्रैव
[12]न्या.वा.ता.टी., पृ.-५६३

तस्थे, य इमान् लोकानीशत ईशिनीभिरि[1]त्येवं प्रतिपादितम्। इत्थं न्यायसारे मूलरूपेण 'विवादाध्यासितमुपलब्धिमत्कारणकम् अभूत्वाभावित्वात् वस्त्रादिवत्' इतीश्वरसाधकानुमानं प्रदर्शितम्।

न्यायमञ्जर्यां वेदस्य कर्ता पुरुषः ईश्वर एवेति संसाधितम्। एवञ्च वेदस्य कर्तृत्वेनाभ्युपगम्यमानः पुरुषः साधारण अस्मदादिः न किन्तु त्रैलोक्यनिर्माणक्षमः परमेश्वर एव। स च ईश्वरः कृपालुः सर्वज्ञः नित्यानन्दस्वरूपः क्लेशकर्मविपाकादिरहितश्च भवति। तदुक्तम्-

**वेदस्य पुरुषः कर्त्ता न हि तादृशतादृशः।**
**किं तु त्रैलोक्यनिर्माणनिपुणः परमेश्वरः॥**[2]
**स देवः परमो ज्ञाता नित्यानन्दः कृपान्वितः।**
**क्लेशकर्मविपाकादिपरामर्शविवर्जितः॥**[3]

**नित्यं विज्ञानमानन्दं ब्रह्म**[4] इति श्रुतिबलादेव परमेश्वर आनन्दवान् विज्ञानवान् नित्यश्चेति नैयायिकैः स्वीक्रियते। मनस्संयोगानपेक्षत्वात् तस्यानन्दस्य नित्यत्वमित्यवधेयम्। यद्यपीतरैः नैयायिकैरीश्वरे सुखं न स्वीकृतं तथापि न्यायमञ्जरीकारः भगवति नित्यं सुखमङ्गीकरोतीत्यत्रायं विशेषः।

महर्षिणा कणादेनाऽपि 'संज्ञाकर्मत्वमस्मद्विशिष्टानां लिङ्गम्[5], 'प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः'[6] इत्याभ्यां सूत्राभ्यां ईश्वरः साधितः। यद्यपि वैशेषिकसूत्रे साक्षात्परमेश्वरस्यालोचना नास्ति, तथापि उपस्कारकर्त्ता श्रीमान् शङ्करमिश्रः प्रथमं सूत्रमित्थं व्याख्याति-संज्ञा नाम, कर्म कार्यं क्षित्यादिः तदुभयमस्मद्विशिष्टा-नामीश्वरमहर्षीणां सत्वेऽपि लिङ्गम् इति। द्वितीयसूत्रस्य व्याख्यानमित्थं कृतमस्ति संज्ञा च कर्म चेतिसमाहारद्वन्द्वादेकवद्भावः, संज्ञाकर्त्तुः जगत्कर्त्तुश्चाभेदसूचनार्थ इति। तथा च या मैत्रादिसंज्ञा पिता पुत्रे 'द्वादशेऽहनि पिता नाम कुर्यात्' इत्यादि विधिना क्रियते, सापि नूनमीश्वरप्रयुक्तैव।एवञ्च संज्ञाया ईश्वरलिङ्गत्वं सिद्धम्। कर्म-कार्यमपीश्वरे लिङ्गम्। तथाहि-क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवदिति।

वैशेषिकसूत्रभाष्यकृद्भिर्प्रशस्तपादाचार्यैरपि चतुर्णां महाभूतानां सृष्टिसंहारविधिनिरूपणक्रमे स्पष्टतया ईश्वरसत्ता स्वीकृताः।

तथाहि-'ब्राह्मेण मानेन शतवर्षान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारपरिखिन्नानां सर्वप्राणिनां निशिविश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्चिहीर्षासमकालं शरीरेन्द्रियमहाभूतो-पनिबन्धकानां सर्वात्मगताना-मदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः[7] इत्यादिग्रन्थेन। यद्यपि भाष्येऽपि साक्षादनुमानप्रमाणेन ईश्वरसिद्धिर्नैव प्रदर्शिता, तथापि भाष्यस्य व्याख्यातारः श्रीधराचार्यप्रभृतयः न्यायकन्दल्यादिरचयितारः विभिन्नाभिः युक्तिभिः परमेश्वरं साधयन्ति। प्रशस्तपादभाष्यस्य किरणावलीटीकायामुदयनाचार्येणोक्तं यत् भाष्ये यः सृष्टि-संहारः प्रकाशितः, स ईश्वरास्तित्वसिद्धावेव सुसङ्गतो जायते। ईश्वरास्तित्वे किं प्रमाणम्?एतस्मिन् प्रश्ने उदयनाचार्यः कथयति ईश्वरसाधकानामनुमानानां सद्भावेऽप्यत्र तेषु किञ्चिदुल्लिखामि[8]। व्योमशिवाचार्यः स्वव्याख्यायां कथयति प्रशस्तपादभाष्ये या सृष्टिसंहारविधिः प्रदर्शिता, सा न सुसङ्गता, यतः ईश्वरसद्भावे न किमपि प्रमाणं विद्यते, किन्त्वग्रे स्वयमेव कथयति एतत् कथनं न समीचीनम् 'अनुमानागमाभ्यां तत्सद्भावसिद्धेः'[9]। एतेनैव परिज्ञायते यत् प्रशस्तपादभाष्ये ईश्वरसाधकानुमानं नास्तीति।

न्यायवार्त्तिककारोक्तिमवलम्ब्यैव ईश्वरप्रत्यक्षयितुमसमर्थान् प्रति तत्साधिकायुक्तयः न्यायवैशेषिक- दर्शनविद्भिः श्रीमद्भिरुदयनाचार्यैः स्वप्रतिभानुसारं कुसुमाञ्जलिग्रन्थे 'तत्साधकप्रमाणाभावाच्च' इति पञ्चमी-विप्रतिपत्तेरुत्तरत्वेन-

**कार्याऽऽयोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।**
**वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥**[10]

इत्यनया कारिकया प्रदर्शिता। तत्र प्रथमो हेतुः कार्यपदेन निर्दिष्टः।

(क) कार्यत्वहेतुकानुमानं यथा-क्षित्यादिकं सकर्तृकं कार्यत्वात् (कार्यं चात्र प्रागभावप्रतियोगि ग्राह्यम्) घटवत्। सकर्त्तृकत्वं च उपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्। पृथिव्यादिकार्याणां कर्तृत्वं जीवात्मनि अल्पज्ञे च न सम्भवतीत्युपपादनाय 'उदादानेत्यादिना व्याख्यातम्। एतादृशाऽपरो-क्षज्ञानचिकीर्षादीनां जीवात्मन्यभावात् तत् कर्ता यो विद्यते स एव ईश्वरः। अत्र क्षितिः कर्त्रजन्या शरीराजन्यत्वादाकाशवत् इति साध्याभावसाधकहेत्वन्तररूपं सत्प्रतिपक्षितत्वं तु न शङ्क्यम्। यतोह्यस्मिन्ननुमाने व्यभिचारशङ्कायाः निवर्तकतर्कस्याऽभावो विद्यते। तथाहि 'शरीरजन्यत्वा-भावोऽस्तु कर्त्तृजन्यत्वाभावोमास्तु' इत्येवं विधायाः व्यभिचारशङ्कायाः निवर्तक अनुकूलस्तर्कः नास्ति, उभयोरप्यत्यन्ताभावरूपत्वेन कार्यकारणभावस्या-नुपपद्यमानत्वात्। कार्यत्वहेतुकानुमाने तु 'कार्यत्वमस्तु, कर्तृजन्यत्वं मास्तु' इत्येवं विधायाः व्यभिचा-रशङ्कायाः निवारकस्तर्कः विद्यत एव-'यदि कर्त्तृजन्यत्वं न स्यात्तर्हि कार्यत्वमपि न स्यादिति। अतः अनुकूलतर्कपराहतत्वात् कार्यत्वहेतोः न सत्प्रतिपक्षितत्त्वमिति भावः।

(ख) आयोजनहेतुकानुमानं यथा-परमाण्वादयः चेतनायोजिताः प्रवर्तन्ते अचेतनत्वात् वास्यादिवत्।[11] अत्रायोजनं नाम प्रेरणात्मकं कर्म। यद्यपि कारिकायां आयोजनहेतुना ईश्वरानुमानं उक्तं तथापि आयोजनमेवात्रानुमीयते। प्रेरणान्यथानुपपत्या तदाश्रयः चेतनः सिद्ध्यतीत्यर्थः। एवञ्च अचेतनभूता वासी यथा

---

[1]न्यायसारः, पृ.६५-८०
[2]न्यायमञ्जरी, पृ.-१७५
[3]न्यायमञ्जरी, पृ.-१७५
[4]वृहदारण्यकोपनिषद् - ५/९/२८
[5]वै.सू.-२/१/१८
[6]वै.सू.-२/१/१९
[7]प्रश.पा.भा., पृ. २९-३०
[8]सर्वमेतदीश्वरसद्भावसिद्धौ सम्भवेत्। तत्सिद्धावेव
किं प्रमाणमिति चेत्, तद्बहुत्वेऽपि किञ्चिदुच्यते'(किर.-२९, पृ.-२९)
[9]व्योमवती टी., पृ.-३०१
[10]न्या.कु.पञ्च.स्त., का.-१
[11]न्या.कु., पृ.-२९७

चेतनेन तक्षकेण प्रेरिता प्रवर्तते तथैव परमाण्वादयोऽचेतनभूताः चेतनप्रवर्तिताः प्रवर्तन्ते इति तादृशप्रवर्तनस्याश्रयभूतः कश्चिच्चेतन अस्मदादिविलक्षणः भवेदित्याचार्याणामाशयः।[1]

(ग) धृतिहेतुकानुमानं यथा-क्षित्यादिब्रह्माण्डपर्यन्तं हि जगत् साक्षात् परम्परया वा प्रयत्नाधिष्ठितं गुरुत्वे सत्यपतनधर्मकत्वात् वियतिविहङ्गमशरीरवत् तत्संयुक्तद्रव्यवच्च।[2] अत्र धृतिर्नाम पतनाभावः। अत्रोक्तप्रयत्न एव वैशेषिकैः विधारकप्रयत्न इत्युच्यते। तस्य च अचेतने ब्रह्माण्डेऽसम्भवात् परम्परया तद्वत्वं वाच्यमिति ईश्वरः सिद्ध्यति। अत्र गुरुत्वं हि आद्यपतनासमवायिकारणमिति असति प्रतिबन्धे गुरुत्ववतः ब्रह्माण्डादेः पतनं नियतम्, न चात्र पतनं लभ्यते इति पतनप्रतिबन्धकं वाच्यं ब्रह्माण्डादौ। तत्र 'संयोगवेगप्रयत्नाभावे गुरुत्वात् पतनम्' इति कणभुक् सूत्रप्रतिपादितेषु प्रतिबन्धकत्रयेषु आद्यद्वयाभावात् चरममेषितव्यं, तदाश्रयश्चेश्वर इति[3]। कारिकायां धृत्यादेः उक्तमाचार्यैः। अत्र आदिपदात् नाशपरिग्रहः। तथा चानुमानप्रयोगः-ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत्। ईश्वरप्रयत्नस्यान्यत्र समवायबाधादीश्वरसिद्धिरितिभावः।

(घ) पदहेतुकानुमानं यथा-'एतत् पटादिनिर्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रम-व्यवहारश्च बालानां, स सर्वस्वतन्त्रपुरुषविश्रान्तः व्यवहारत्वात् निपुणतरशिल्पिनिर्मिता- पूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्च।[4] पद्यते गम्यते इति व्युत्पत्त्या पदं नाम वृद्धव्यवहारः। एतैरत्र वृद्धव्यवहारपदेन कायिकाः वाग्व्यवहाराश्च परिगृह्यन्ते। अत्र व्यवहारः नाम उपदेशः। एतादृशस्योपदेशादेरन्यत्र बाधात् परमेश्वरसिद्धिः।

(ङ) प्रत्ययहेतुकानुमानं यथा-वेदजन्यं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्। अत्र प्रत्ययो नाम प्रमात्वविषयकनिश्चयः।[5] कारणगुणस्तावदीश्वरनिष्ठमितिस्वीकार्यम्। यथा प्रत्यक्षादिप्रमा सन्निकर्षादिगुणापेक्षा तथा शाब्दबोधोऽपि वक्तृयथार्थवाक्यार्थज्ञानरूपगुणापेक्ष इति। तादृशवाक्यार्थ-ज्ञानमीश्वरस्यैव भवतीति परमेश्वरः सिद्ध्यति।

(च) श्रुतिहेतुकानुमानं यथा-वेदः पौरुषेयः वेदत्वादायुर्वेदवत्। अत्र पौरुषेयत्वं 'सजातीयोच्चारणा-नपेक्षोच्चरितजातीयत्वम्' इति मणिकृतः। अथवा सर्वज्ञप्रणीताः वेदाः वेदत्वात्।[6] अत्र किञ्चिज्ज्ञाप्रणीतत्व-चेतनप्रणीतत्त्वोभयवत्त्वरूपं साध्यं स्वीकार्यम्। तथा च न साध्याप्रसिद्धिः।[7] प्रत्येकं हि किञ्चिज्ज्ञाप्रणीतत्वं चेतनप्रणीतत्वं च प्रसिद्धमेवेति।

(छ) वाक्यहेतुकानुमानं यथा-वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्। उपर्युक्तवेद-त्वहेतुकानुमानं केवलव्यतिरेक्यनुमानम्। इदञ्चान्वय्यनुमानमिति विशेषः।[8] किञ्च वेदः पौरुषेयः वाक्यत्वात् भारतादिवत्। इदञ्चानुमानं चिन्तामणावप्युपन्यस्तम्। न च वाक्यार्थज्ञानं विना वाक्यरचना सम्भवति, तथाविधं च ज्ञानं नास्माकं प्रामाणिकमिति तदाश्रयत्वेन नित्यसर्वज्ञेश्वरसिद्धिरिति तात्पर्यम्।

(ज) संख्याहेतुकानुमानं यथा-द्वयणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वेसति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणात्, प्रकृष्टतादृशकपालत्रयारब्ध- घटपरिमाणवत्। अणुपरिमाणञ्च न परिमाणजनकं नित्यपरिमाणत्वात् अणुपरिमाणत्वाद्वा। अत्र द्वयणुकपदं त्र्यणुकस्याप्युपलक्षणम्। परिमाणस्य स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमात् परमाणुपरिमाणं द्व्यणुकपरिमाणं प्रति द्व्यणुकपरिमाणं त्र्यणुकपरिमाणं प्रति वा न कारणं तर्हि द्व्यणुकपरमाणुपरिमाणयोः किं कारणमिति चेत् तत्तदवयवगतसं-ख्याविशेष एव इत्युच्यते। एवञ्च द्व्यणुकपरिमाणे संख्याजन्यत्वं प्रसाध्य तस्याः संख्यायाः निमित्तकारणीभूतापेक्षाबुद्धेः तत्समवायिकारणपरमाणुद्व्याऽद्रष्टरिसाधारणे जीवे सादौ योगिनि च बाधात् नित्यसर्वज्ञेश्वरसिद्धिरिति।

अत्रेदं बोध्यम्, संसारेऽस्मिन् एकं सामान्यमपि चित्रं चित्रयितुं, साधारणमपिमूर्तिं निमार्तुं यस्तदुपयोगीन्युपकरणान्युपादानतत्त्वानि च सम्यगवगच्छति एतादृशः कश्चन कुशलः शिल्पी नूनमपेक्ष्यते, तर्हि जनसामान्य-कृत्यविषयस्य विविधवैचित्र्योपेतस्यास्य जगत उत्पत्त्यर्थमपि तादृशकुशलस्य रचयितुः स्वीकारः नूनमपेक्षितः। अतएव न्यायवैशेषिकदर्शनं जीवानां कृतकर्मजन्यादृष्टानि जगतोऽस्योपादानकारणानि परमाणूपकरणानि चाभ्युपेत्य तेषां सर्वेषां साध्ववबोद्धारमीश्वरं जगतो प्रणेतारं स्वीकरोति।

न्यायवैशेषिकाचार्याणां मते ईश्वरः जगतः स्रष्टा अतएव सर्वज्ञः, तस्य सर्वज्ञत्वसाधनार्थं प्रमाणस्या-वश्यकता नास्ति। विषयेऽस्मिनुद्योतकराचार्याः कथयन्ति यत् ईश्वरो यदि सर्वज्ञो न स्यात्तदाऽसौ जगतः स्रष्टा न भवितुमर्हति[9]।

मण्डनमिश्रेणाऽपि न्यायवैशेषिकसम्मतं सर्वज्ञत्वसाधकानुमानमित्थं विधिविवेके प्रदर्शितम् 'सर्वकार्याणां कर्तृत्वादेव तर्हि सर्वज्ञत्वम्। उपादानोपकरणसम्प्रदानप्रयोजनभिज्ञा हि कुलालादयः कर्तारः। सर्वेषाञ्च कार्याणामीश्वरः कर्त्ता इति समस्तकार्योत्पादानाद्यभिज्ञः, तथा च सर्वज्ञ[10] इति'। न्यायकणिकायां विधिविवेकटीकायां श्रीमान् वाचस्पतिमिश्रः कथयति'सर्वेषां कार्याणामीश्वरः कर्त्तेति समस्तोपादानाद्यभिज्ञाः, तथा च सर्वज्ञः[11]।

इदमत्रावधेयम्, वस्तुतः 'यः सर्वज्ञः स सर्ववित्'[12], 'द्यावाभूमी जनयन्देव एको विश्वस्य कर्ता भुवनस्य गोप्ता'[13], 'एको रुद्रः न द्वितीयः'[1], 'यज्ञेन यज्ञमयजन्त देवाः'[2]।

---

[1]न्या.कु.वि., पृ.-२९७
[2]न्या.कु.,पृ. ३००-३०१
[3]न्या.कु.विभा., पृ.-२००
[4]न्या.कु., पृ.-३०३
[5]न्या.कु.वि., पृ.-३०४
[6]न्या.कु.वि., पृ.-३०५
[7]तत्रैव
[8]न्या.कु., पृ.-३०६
[9] 'न च बुद्धिमत्तया विना ईश्वरस्य जगदुत्पादोन घटते' (न्या.वा.-४/१/२१)
[10]विधिविवेकः, पृ. २९०-२९१)
[11]न्या.क., पृ. २९०-२९१
[12]त.सं., दीपि, पृ.-१९२
[13]मुक्ता. पृ.-२६

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज3**
**ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।**
**स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च॥**
**अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥4**
**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥5**
**विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुतविश्वतस्पात्।**
**सम्बाहुभ्यां धमति सम्पतत्रैर्धावाभूमी जनयन् देव एकः।6**
**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः सश्रृणोत्यकर्णः।**
**स वेत्ति सर्वं न हि तस्य वेत्ता तमाहुरग्यं पुरुषं महान्तम्।7**
**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥8**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य विभत्र्त्यव्यय ईश्वरः॥9**
**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥10**

इत्यादि श्रुतिस्मृतिपुराणेतिहासानुभवप्रमाणैर्दृढं प्रमितोऽपीश्वरः यावत् युक्तिभिः न साध्यते तावत् युक्तिमात्रप्रमाणकाः नास्तिकाः दुर्युक्तिभिः ईश्वरो नास्तीति साधने प्रवर्तमानाः न निरस्ताः भवेयुः। किञ्चैतेषां मतान्तरस्थानां वचसि प्रामाण्यभ्रन्त्या कदाचिदास्तिका अपि कलुषितमतयः स्युः इति सम्यगालोच्य परमकारुणिकाः महर्षयः परमास्तिकाः तत्तदाचार्याश्च बहुभिः युक्तिभिः परमात्मानं संसाधितवन्त इति शम्॥

**शब्दब्रह्मपरब्रह्मणोस्तादात्म्यम्***

महाभाष्यस्य पस्पशह्निके अथ शब्दानुशासनम्[11]इति प्रतिज्ञाय केषां शब्दानामिति प्रश्नः समुत्थापितः। तस्य द्रव्यस्य क्रियायाः गुणस्य आकृतेश्च शब्दत्वमाशङ्क्य तेषां प्रत्याख्यानं कृत्वा येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः[12]इति समाहितम्। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा शब्दं कुरु मा शब्दं कार्षीः। शब्दकार्यय माणवकः इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः अत्र येनोच्चारितेनेत्यस्य प्रकाशितेनेत्यर्थस्य सत्त्वात् प्रथमलक्षणे स्फोटः शब्दः इति सूच्यते। अथवा इत्यनेन तु ध्वनिः शब्दः इति निर्दिश्यते।

---

[1]तैत्तिरीयसंहि-१/८/६
[2]पुरु.सू.म.-१६
[3]श्रीमद्भगवद्गीता.-१८-६६
[4]वायुपुराणम्- १०/६५-६६
[5]वा.पु.-१२/३३, व्यासभा.-१/२५
[6]श्वेता.उप.-३/३
[7]श्वेता.उप.-३/१९
[8]गीता-१५/१६
[9]गीता - १५/१७
[10]मु.उप.-३/१/१
***डा.उमेशचन्द्रमिश्रः**
[11]महाभाष्यस्य पस्पशायाम्
[12] तत्रैव

एतद्विषये तपरस्तत्कालस्ये[1]ति सूत्रे महाभाष्ये उक्तमस्ति यत् एवं स्फोटः शब्दः। ध्वनिः शब्दगुणः। कथमिति चेत् उच्यते भेर्याधातवत्। तद्यथा भेर्याधातो भेरीमाहत्य कश्चिद् विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिद् चत्वारिंशत्। स्फोटस्तावानेव भवति ध्वनिकृता वृद्धिः।

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।**
**अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥**

अत्र टीकाकारः भेरीमाहन्तीति भेर्याधातः। उपलब्धिसामान्ये दृष्टान्तः प्रदत्तः। यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कैश्चिद् अल्पकालमुपलभ्यते। कैश्चिच्चिरम्। एवं वृत्तिषूपलब्धिनां कालभेद अस्ति न तु विषयभेदः। अर्थात् शब्दगुणे ध्वनावेव ह्रस्वदीर्घप्लुतादीनां भेदोऽस्ति। न तु शब्दे स एव भेदः। शब्दस्य नित्यत्वात्। अत्र प्रथम आन्तरः शब्द इति उच्यते। अथवा इत्यनेन तु बाह्यो ध्वन्यपरपर्यायः। यः प्रथमः शब्दः आन्तरः गृहीतः स एव सच्चिदानन्दरूपम्। स एव नित्यः विभुः सर्वजगदुपादानकारणम् इत्यमु विषयं प्रतिपादयति कौण्डभट्टः वैयाकरणभूषणसारस्य मङ्गलश्लोके-

**श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।**
**स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते॥[2]**

अत्र एकः सन् बहुधा व्यजायत, एकोऽहं बहु स्याम इत्यादिश्रुत्या एकस्यैव परमात्मनो नानारूपत्वं कार्यवैचित्र्याय कारणवैचित्र्यस्यैव कार्यवैचित्र्यप्रयोजकत्वात् इति सूचितम् अनेन शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे इति श्रुतिवाक्यं संगच्छते। शब्दात्मकं ब्रह्मस्फोटो रूपं स्वरूपं यस्य तम् इत्यर्थः। यतः एतद् जगद् विवर्तते वा स्फुटति बोधविषये भवत्यर्थोऽस्मादिति स्फोटः शब्दः रूप्यते ज्ञायते इति रूपोऽर्थः स्फोटश्च रूपश्चानयोः समाहारः स्फोटरूपं शब्दार्थस्वरूपमिति। शब्दार्थरूपस्य जगत उपादानकारणतया शब्दार्थरूपत्वम्। अतः शब्दात्मकमर्थात्मञ्च जगदस्ति। जगतो नामार्थरूप-त्वात्। नामरूपे व्याकरवाणि इति श्रुतिरेव प्रमाणम्। यस्यार्थः नानात्मकमर्थात्मञ्च जगत्प्रकाश्यम्।

यतो वेदान्तिनये मायोपाधिकस्यैव परमात्मनो जगदुपादानत्वम्। अनाद्युपादानत्वे सति ज्ञानं (ब्रह्मज्ञानं) निवर्त्याऽज्ञानरूपा माया तच्छबलिताद् ब्रह्मणः सकाशात् जगदुत्पत्तिः। ब्रह्मणः उपादानकारणत्वञ्च यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रत्यन्त्यभिसंविशन्ति इत्यादि श्रुत्या बोधितम्। ब्रह्मणि स्थितिलयकारणत्वेऽपि श्रुतिः प्रमाणम्। यथा आत्मनः आकाशः सम्भूतः आकाशाद्वायुः इति। यद्वा यत इत्यस्य यस्मिन्नित्यर्थः। आद्यादित्वात् तसि प्रत्ययः न्यायादिनये निमित्तकारणत्वेऽपि पञ्चमीविभक्तिः। ब्रह्मणः निमित्तकारणत्वेऽपि प्रमाणन्तु द्यावा भूमिं जनयत् देव एव आस्ते विश्वस्य कर्ता भुवनस्य गोप्ता इत्यादि श्रुतिः। न चोपादाननिमित्तकारणत्वबोधकश्रुत्योः परस्परं विरोधः। जगतो विवर्तत्वे एकत्रोपादानत्व – निमित्तत्वयोः सत्त्वे बाधकाभावात्। ननु सदेव सोम्येदमग्र आसीत् इति श्रुत्या प्रपञ्चस्य नित्यतां प्रतीयते तत्कथं परमात्मनः उपादानत्वं निमित्तत्वं वेत्यत आह – जगदिति गच्छति कारणे लीयते इति व्युत्पत्त्या विनाशित्वप्रतीत्या यद्विनाशि तज्जन्यमिति नियमेन जगतो जन्यत्वे बाधाभावात्। न च सदेव सोम्येदमग्र आसीत् इति श्रुतिविरोधः सत्तामात्रत्वेन नित्यत्वस्य नामादिविशिष्टत्वेन अनित्यत्वस्य च स्वीकरणादोषात्। विवर्तते इति वेदान्तिमते रज्जुसर्पवद् जगतो ब्रह्मरूपत्वे विवर्तते इत्यस्यान्यथा प्रतीयते इत्यर्थः। यथा रज्ज्वां सर्पस्य रज्जुसत्ताऽतिरिक्तसत्ता नास्ति। तथा प्रपञ्चस्यापि ब्रह्मसत्ताऽतिरिक्तसत्ता नास्ति। यावद् रज्जुर्न प्रतीयते तावत्सर्पः प्रतीयते एवं यावद् ब्रह्म न प्रतीयते तावत्प्रपञ्चः प्रतीयते। एवञ्च अतात्त्विकोऽन्यथाभावो विवर्तः, अत्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीविषयत्वमित्यर्थः।

न्यायमते तु विवर्तते इत्यस्य उत्पद्यते इत्यर्थः। अस्य सर्वं कार्यरूपं जगदिति शेषः। तन्मते आकाशादीनां नित्यत्वात्। सांख्यमते आविर्भवतीत्यर्थः। तन्मते सर्वेषां नित्यत्वेन उत्पत्तिविनाशयोरा-विर्भावतिरोभावरूपत्वात्। उत्पत्तिश्चाक्षणसम्बन्धः, क्षणे आद्यत्वञ्च तत्सम्बन्धप्रयोगभावानधिक-रणत्वे सति तत्सम्बन्धाधिकरणध्वंसानधिकरणत्वम्।

अथ शाब्दिकवेदान्तिदृष्ट्या शब्दब्रह्मपरब्रह्मणोस्तादात्म्यमुपस्थाप्यते। स चासौ आत्मा च तदात्मा तस्य भावस्तादात्म्यमित्यर्थकं तदभिन्नत्वे सति भेदेन प्रतीयमानत्वरूपं तादात्म्यस्वरूप-मुभावपि पारमर्थिकं स्वीकुरुतः।

तैजसमन्तःकरणमिन्द्रियप्रणालिकया विषयदेशं गत्वा तद्देशे एव विषयाकाराकारितापन्नं भवति। अतः बाह्यानां पदार्थानां विषदेशे एव अन्तःकरणस्य तदाकारितां वृत्तिं मन्वानाःसन्ति वेदान्तिनः।

शाब्दिकास्तु स्वप्नभ्रमणादिदृष्ट्या अन्तःकरणदेशे संस्कारात्मना सूक्ष्मरूपेणावस्थितान् घटादीन् पदार्थान् ज्ञानविषयीकृत्य तद्देशे एव विषयाकाराकारितां वृत्तिं मन्वते। बाह्यापदार्थापेक्षया अन्तः पदार्थस्य सत्यत्वातिशयं मन्वानाः स्वीयं सिद्धान्तं स्थापयन्तीति शाब्दिकवेदान्तनोर्भेदः।

बौद्धार्थस्वीकारे बुद्धिसिद्धं तु तदसत्[3] इति सूत्रयत। श्री गौतमेनापि अनुमोदितोऽयं पन्थाः। जन्माद्यस्य यतः इति सूत्रे श्रीवाचस्पतिमिश्रोऽपि **चेतनो हि नामरूपे बुद्धावालिख्य घट इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति। निर्वत्यस्यापि घटस्य अन्तः सङ्कल्पात्मना सिद्धस्य कर्मकारकत्वं, घटं करोति इति प्राह।**[4]अतः वेदान्तिनाऽपि बौद्धपदार्थः स्वीकर्तव्य एव। अन्यथा–

**एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कुर्मक्षीरचय स्नातः शशशृङ्गधनुर्धरः॥**[5]

इत्यादीनामनर्थकशब्दानां प्रातिपादिकसंज्ञा एव न स्यात्। अतः बाह्यपदार्थाभावेऽपि बन्ध्यासुतादिपदानां बौद्धार्थवत्त्वेन अस्यैव प्रातिपदिकत्वमिति बौद्धार्थ एव विषयाकारिता वृत्तिः वेदान्तिनाऽपि स्वीकार्या।

परापश्यन्तीमध्यमावैखरीभेदचतुष्टयेन आक्रान्तस्वरूपाचतस्रो वाचः सर्वत्रैव निगमादिषु समुपलभ्यते। एताषामेव कुत्रचिद् व्याकृताव्याकृतेति भेदद्वयेन व्यवहारः। तत्र व्याकृतपदेन पश्यन्त्या-दित्रय्याः अव्याकृतपदेन न शक्तिशक्तिमदादिभेदेन शून्यायाः परायाः विचारो वेदेषु चर्चितः। तथा च –

**सूक्ष्ममर्थेनाप्रविभक्ततत्त्वाम्**

[1]पा.सू. १.१.७०
[2]वैयाकरणभूषणसारः
[3]न्या.द. ४.१.५०
[4]ब्रह्मसूत्रभाष्यम् १.१.२
[5]परमलघुमञ्जूषायां शक्तिनिर्णयः

**एकां वाचमभिष्यन्दमानाम्।**
**उतान्ये विदु रन्यामिव च पूतां**
**न्नानारूपामत्मनि सन्निविष्टाम्।।**[1]

तथा च एकैव परा वाक् व्याकृताऽव्याकृतरूपभेदेन द्वेधा विभज्यते नामरूपे व्याकरवाणि[2], ते मृत्युमतिवर्तन्ते य वै वाचमुपासते[3]इति।

वेदान्तिनां परं ब्रह्मापि एकं नित्यमव्याकृतमपि विवर्तदशायां व्याकृतमिव भवति। अतः उभयोः साम्यम्। व्याकरणदृष्ट्या परायां वाचि नैव कश्चन विचारलेशोऽपि सम्भावनापपदमारोहति। दृष्टस्व-रूपायां तस्याम् अधिकारनिवृत्तेरूपदेशात्। तस्याश्च द्वैतत्वे तद्वैयर्थ्यापत्तेरद्वैतज्ञानेनैव अविद्यानिवृत्तेः निर्णीतत्वात्। एषा एव सरणी वेदान्तिभिराद्रियते इति अत्रापि तयोः साम्यम्।

प्राणिभ्यः अभुक्तकर्मफलप्रदानाय सैव परा वाक् स्वीयां कलां शक्तिमात्मनि अध्यस्य स्मरणपूर्विकां सृष्टिं विद्यते। वेदान्तिनां परं ब्रह्मापि मायावच्छिन्नं सज्जगद् रचयति इति द्वयोः साम्यम्। माया, अज्ञानं प्रकृतिः कला इति पर्यायशब्दाः। परं ब्रह्म शब्दब्रह्म वा लीयते– आच्छाद्यते यया सा कला तत्सन्वितस्यैव ब्रह्मणः कर्तृत्वमिति शाब्दिको वेदान्ती च मन्वाते।

शाब्दिकाः पश्यन्त्यामेव शक्तिशक्तिमन्तौ चर्चयन्ति। तस्या एव कालाख्यस्वातन्त्र्यशक्तिः, या ह्यन्यासां शक्तीनां स्फोरणे प्रभवति। तस्याः अभ्युनुज्ञा, निरोधश्च कार्यद्वयम्। अविद्यादयः शक्तयोऽपि तद्विजृम्भिता एवेति। वाच्यावाचकविभागोऽपि तस्यामेव व्यवह्रियते। तत्रैव समापन्नस्य योगिनः सर्वे सर्वार्थवाचकाः इति ज्ञानमुत्पद्यते। तस्या एव पश्यन्तीरूपेण सर्वशब्दबीजत्वात्। प्रतिभारूपेण सकलार्थप्रसवत्त्वाच्च। तदवस्थायां वैयाकरणानां निखिलार्थसमुत्पादनसामर्थ्यम् अभिव्यज्यते।

वेदान्तेऽपि एकेन वा विज्ञानेन सर्वमिदं विज्ञानं भवति। एकस्यैव ब्रह्मणः प्रकाशः सर्वं वस्तुतत्त्वं प्रकाशयति। तथा च श्रुतिः – **तस्य भासा सर्वमिदं विभाति**[4] इति। वेदान्तिनां विवर्तवादोऽपि तुल्यः वैयाकरणानां शब्दविवर्तवादेन् अभिन्ननिमित्तोपादानकारणं ब्रह्म इति वेदान्तिनः। शाब्दिकोऽपि तदेव स्वीकरोति –

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।**[5]इति

परायाः यल्लक्षणं शाब्दिकैः स्वीकृतं तेन लक्षणेन वेदान्तिनः परं ब्रह्मापि लक्षितम्। तथा हि अनादिनि-धनत्वे सति व्यापकत्वे सति सच्चिदानन्दरूपत्वं शब्दमिति। वेदान्तिनः परं ब्रह्मापि अनादिनिधनं व्यापकं सच्चिदानन्दमिति। विवर्तदृष्ट्या–

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा।**
**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥**[6]

इत्येकस्यैव शब्दब्रह्मणः विवर्तदशायां भोक्तृभोक्तव्यरूपेण ज्ञातृज्ञातव्यज्ञानरूपेण व्याप्तिमामनन्ति शाब्दिकाः। वेदान्तिनोऽपि तथा। अतस्तुल्यन्यायादत्रापि साम्यम्।

शब्दब्रह्मणः पारमार्थिकी सत्ता कारणात्मना कार्यं सदिति जगतोऽपि पारमार्थिकी सत्तेति जगदपि ब्रह्मरूपेणमेव कारणात्मना तयोरैक्यमिति। हेलराजमते तु ग्राह्यग्राहकादिप्रपञ्चस्य विकल्पपरिघटितस्य असत्यत्वमेव तथा च श्रीभतृहरिः कथयति –

**यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम्।**
**तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदान्तिनः॥**[7]

अत्र कारिकायाः व्याख्यानावसरे श्रीहेलराजः सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीतत्वम् अविकल्पं परं ब्रह्म अनादिनिधनमिति उक्तवान्। ऋग्यजुःसामात्मको वेदस्त्रयी तस्याः अन्तः सारभूतार्थनिर्णयमयमुपनिषद्भागं जानन्ते विद्वांसः परमार्थरूपमभेदमेवाहुः। न तु कर्मानुष्ठाक्षिप्तं भेदमिति। अविद्यापरिकल्पितो हि भेदो वितथो वैकल्पिकः। अविद्याऽपि च तत्त्वान्यत्वाभ्यां विवेक्तुमशक्या अनादिसिद्धजीवात्मगतभेदप्रतिभासकारिणी। अद्वैतवादमनुसरन्तो वेदान्तिनोऽपि इमामेव सरणीमव-लम्बन्ते इति शाब्दिक– वेदान्तिनोः साम्यम्।

वमकृष्णादिरूपेण परमब्रह्मणः आराधनां कुर्वन्तः शाब्दिका वेदान्तिनश्च शब्दब्रह्मरूपेण वेदराशेरपि उपासनायामुभयोः साम्यमिति उपासनादृष्टौ शब्दब्रह्मपरमब्रह्मणोरैक्यमेव।

सृष्टिक्रमेऽपि शाब्दिकवेदान्तिनोः साम्यम्। एकोऽहं बहुस्यां प्रजायेय[8] इत्यनया श्रुत्या सच्चिदानन्दज्ञानक्रियेच्छात्मकप्रपञ्चशक्तिविशिष्टस्य स्वतन्त्रस्य कर्तुः लीनजगत्प्रपञ्चस्य सञ्चितप्रारब्धवशाच्चितः स्फुरणे क्रमशः स्रष्टुमिच्छायां पृथगिव सम्भूतायां जायते, अस्ति, वर्धते, विपरिणमते, ह्रसति, नश्यति इति षड्भावविकाराः परिणामरूपाः क्रमशः एकस्मिन् वस्तुनि क्रमेण आविर्भवन्ति। इन्द्रो मायाभिः पुरुरूप ईयते इति श्रुत्या बहूनि रूपाणि विद्यन्ते।

शाब्दिकमते तु आख्यातोपयोगे[9] सूत्रस्थभाष्यसिद्धान्तेन ज्योतिर्वज्ज्ञानानि भवन्ति[10] इति सन्दर्भेण सर्वस्य वा चेतनात्वात्[11]इति धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रस्थवार्तिकेन च शब्दस्य चैतन्यकौटावन्तर्भावात् स भुरिति व्याहरत्। भुवमसृजत् इति श्रुत्या अर्धसृष्टौ सञ्जातायां

[1]वैयाकरणसिद्धान्तलघुमञ्जूषायां शक्तिनिर्णयः

[2]छा.उप. ६.३.२

[3]छान्दग्योपनिषत्

[4]कठोपनिषद् २.२.१५

[5]वाक्यपदीयम् १.१

[6]तदेव १.४

[7] तदेव ३.७२

[8]छान्दग्योपनिषद् ६.३.२

[9]पाणिनीयसूत्रम् २.४.२६

[10]महाभाष्यम्

[11]तदेव

चिज्जडयोः साम्यश्रवणात् सर्वोऽपि सृष्टिप्रपञ्चः क्रमश उदेति। शब्दार्थसृष्टिः या शाब्दिकाभिमता तज्ज्ञानं कया पद्धत्या परिणमति विवर्तते वेति सूत्रमात्रदर्शनेन परिणामवादो विवर्तवादो इति निश्चेतुं न शक्यते। वार्तिकं तु सर्वस्य वा चेतनावत्त्वात् इत्यनेन चैतन्यस्य तदाश्रयस्य भेदः प्रतीयते। स भेदः व्यवहारिकः परमार्थिको वा। तत्र व्याकरणशास्त्रस्यैव निरुक्ते षण्णां भावविकाराणामुपादानेन परिणामवादः समायति। वाक्यपदीयेऽपि-

**जन्मादयो विकाराः षट् भावभेदस्य योनयः।**[2]

इत्यत्र षड्भावविकाराः परिणामत्वेन परिणिताः। तत्र पूर्वञ्च विवर्तेऽर्थभावेन प्रक्रिया जगतो यतः।[3] इत्यनया विवर्तवादोऽपि समर्थितः। चैतन्यस्य विवर्तः तदाश्रयस्य परिणाम इत्युभावपि स्वकृतौ वैयाकरणनिकाये।

वेदान्तिनोऽपि शुद्धस्य ब्रह्मणो विवर्त मायासंबलितस्य ब्रह्मणः परिणामं मन्वानाः सन्ति। अतोऽत्रापि शाब्दिकवेदान्तिनोः साम्यं दृश्यते।

परासाक्षात्कारेऽधिकारनिवृत्तेः श्रवणात् तदवस्थापक्षः पुरुषधौरेयः न ह्यस्माकं व्यवहारपथे प्रवेष्टुम् अर्हति इति स्वीकुर्वन्ति शाब्दिकाः। वेदान्तिनोऽपि परे ब्रह्मणि लीनस्य पुरुषस्य व्यवहारयोग्यत्वं वर्णयन्ति इत्यत्रापि साम्यम्।

**भोक्ता भोग्यं प्रेरितारञ्च मत्वा।**
**सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत्॥**[4]

इति हि एकस्याभिन्नतत्त्वस्य ब्रह्मणः त्रिविधरूपतां मन्वाना वेदान्तिनः। वैयाकरणा अपि –
एकस्य सर्वबीजस्य यस्य चेयमनेकधा।

**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥**[5]

सर्वशक्तिमत्त्वस्य एकस्यैव शब्दब्रह्मणः अपारमार्थिकत्वात् कार्यनामात्वोन्नीयमानः शक्तिभेदः अविद्याकल्पितस्य भावभेदस्य युक्तः, न तु तस्य स्वरूपभेदः। तत्र स्फोटाख्ये शब्दब्रह्मणि जपाकुसुमा-दिगतलैहित्यादिव्यञ्जकोपरागवशास्त्रे हितः स्फटिक इति भानवद् व्यञ्जकध्वनिगतकत्वगत्वादयः स्फोटे भासन्ते प्रतिविम्बगतधर्मवैशिष्येन बिम्बस्य लोकावधारणादिति न वस्तुतः स्फोटे कत्वगत्वादयो येन भेदः स्यात्। अतश्चाह भर्तृहरिः –

**यत्र वाचो निमित्तानि चिह्ननीवाक्षरस्मृतेः।**
**शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्॥**[6]

यथा ध्वनिगतकत्वगत्वादिभिः स्फोटे भेदो नास्ति तथैव उदात्तानुदात्तादिविरुद्धधर्म-संसर्गकृतोऽपि भेदः स्फोटे नास्ति इति शाब्दिकराद्धान्तः। तथा चाह भर्तृहरिः–

**अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च।**
**यस्मिन्नुच्चावचा वर्णाः पृथक्स्थितिपरिग्रहाः॥**[7]

वाग्धि ब्रह्म[8]इत्यादिषु श्रुतिषु सरस्वत्यपरपर्याया वाचो ब्रह्मत्वमास्थिततम्। शब्दब्रह्मणः जगत्कारणता बोधका। श्रुतयः स वै छन्दस्थः साममयः प्रथमोऽक्षन वै राजपुरुषः योऽन्तमसृजत तस्मात्पशवोऽजायन्त पशुभ्यो वनस्पतयो वनस्पतिभ्योऽग्निः स उ एवैष यजुर्मयः साममयो वैराजः पुरुषः वागेव विश्वा भुवनानि जज्ञे स भूरिति व्याहरत् भूमिमसृजत् इत्यादयः सन्ति। इमाश्च सुस्पष्टतया शब्दस्यैव ब्रह्मरूपत्वं बोधयन्ति। वाक्यपदीयेऽपि–

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥**[9]

शब्दमेव अविद्यावशं जीवमविद्यारहितं च ब्रह्म आह इति कारिकायाः तात्पर्यम्।
अपभ्रंशविवेकद्वारा व्यवस्थितसाधुत्वेन रूपेण शब्दत्वे संस्क्रियमाणेऽपभ्रंशरूपप्रतिबन्धकागमे धर्मविशेषः आविर्भवति। शब्दस्य षड्भावविकारान् प्रतिभाख्यं तत्त्वञ्च जानन् नर औपनिषदेन ब्रह्मणा सह एकीभवतीति वैयाकरणराद्धान्तः। तथा च आह भर्तृहरिः–

**तस्माद् य शब्दसंस्कारः सा सिद्धिः परमात्मनः।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥**[10]

शारदातिलकतन्त्रे अपि श्रीमल्लक्ष्मणदेशिकेन्द्रः शब्दब्रह्मणः परब्रह्मस्वरूपत्वमाह –

**नित्यानन्दवपुनिरन्तरगलत्पञ्चाशदर्णैः क्रमात्।**
**व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत्॥**
**शब्दब्रह्म यदुचिरे सुकृतिनश्चैतन्यमन्तर्गतम्।**
**तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः॥**[11]

भर्तृहरिणापि –

---

[1]पाणिनीयसूत्रम् ३.२.७
[2]वाक्यपदीयम् १.३
[3]तदेव १.१
[4]श्वेताश्वतरोपनिषद् १,१२
[5]वाक्यपदीयम् १.४
[6]तदेव १.२१
[7] तदेव १.२२
[8]ऐतरीयब्रह्मणम् २.१५
[9]वाक्यपदीयम् १.१२०
[10]तदेव १.१३१
[11]शारदातिलकम् १.१

**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।**
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते॥**[1]

एवं शब्दब्रह्मणः परंब्रह्मस्वरूपत्वं शास्त्रे प्रतिपादितम्।

## विद्यारण्यानुसारं ब्रह्मणोऽन्तर्यामिस्वरूपविचारः*

खमिवाभिव्यापकेऽस्मिन् अद्वैतसाम्रज्ये अद्वैतवादः विभिन्नोपायेन परिपुष्टो भवति। तत्र परिपोषकेषु ग्रन्थेषु प्रचारकेष्वाचार्येषु च आचार्यमहामुनिना विद्यारण्येन विरचितग्रन्थः "पञ्चदशी" अन्यतम असाधारणग्रन्थः। वेदान्तान्तर्गतेषु प्रकरणग्रन्थेषु "पञ्चदशी"ति ग्रन्थः प्राज्ञैः स्वीकृत अद्वितीयप्रामाणिकः ग्रन्थो वर्तते। अत्र सरलभाषया प्रामाणिकयुक्त्या शास्त्रीयदृष्टान्तमाध्यमेन च दुर्बोधतत्त्वस्य सम्यक्तया विचारः कृतो वर्तते। वेदान्तदर्शनस्य गुरुत्वपूर्णमूलतत्त्वानि अत्र विशदरूपेण ग्रथितानि सन्ति। अत्र इदृश्या सरलभाषयातिगम्भीरतत्त्वान्यालोचितानि सन्ति यत्र सर्वेषां साधारणजनानामपि प्रवेशस्सुकरस्स्यात्। अद्वैतशास्त्रसिद्धान्तान्मनसि निधाय ग्रन्थकारः अस्मिन् ग्रन्थे स्वविद्वत्पराकाष्ठां प्रदर्शयति। सर्वसाकल्येन ग्रन्थोऽयं सम्प्लुतोदकमिव सर्वजनादृतो भवतीत्यत्र नास्ति संशयः।

विद्यारण्यमुनिभिः विरचितेषु ग्रन्थेषु पञ्चदशीति ग्रन्थ अनन्य असाधारणो भवति। अयं ग्रन्थः पञ्चदशाध्यायात्मकः, अतः अस्य नाम पञ्चदशी इति। ग्रन्थेऽस्मिन् प्रत्येकमध्याये एकैकस्य प्रकरणस्योपरि आलोचना भवति। तत्र क्रमानुसारं प्रकरणानां नामानि यथा तत्त्वविवेकप्रकरणम्, पञ्चभूतविवेकप्रकरणम्, पञ्चकोशविवेकप्रकरणम्, द्वैतविवेकप्रकरणम्, महावाक्यविवेकप्रकरणम्, चित्रदीपप्रकरणम्, तृप्तिदीपप्रकरणम्,

[1]वाक्यपदीयम् १.२२

***डा.दयानन्दपाणिग्राही, सहायकाचार्यः**
**अद्वैतवेदान्तविभागः, कलियाचकविक्रमकिशोर-आदर्शसंस्कृतमहाविद्यालयः,हेरिया,पूर्वमेदिनीपुरम्- ७२१४३०,पश्चिमवंगः.**

कूटस्थदीपप्रकरणम्, ध्यानदीपप्रकरणम्, नाटकदीपप्रकरणम्, ब्रह्मानन्देयोगानन्दप्रकरणम्, ब्रह्मानन्दे आत्मान-न्दप्रकरणम्, ब्रह्मानन्दे अद्वैतानन्दप्रकरणम्, ब्रह्मानन्दे विद्यानन्दप्रकरणम्, ब्रह्मानन्दे विषयानन्दप्रकरणम् इति।

तत्र प्रथमप्रकरणपञ्चके आत्मानात्मवस्तुविषयकविचारालोचना भवति। तथा प्रथमप्रकरण-पञ्चकं विवेकप्रकरणमिति कथ्यते। द्वितीयप्रकरणपञ्चके शुद्धचैतन्यस्वरूपात्मविषयिणी आलोचना भवति अतः द्वितीयपञ्चकस्य नाम दीपपञ्चकमिति। तत्र तृतीयप्रकरणपञ्चके आत्मानन्दस्वरूपं प्रतिपादितमस्ति, अतः अस्य पञ्चकस्य नाम आनन्दपञ्चकमिति। एवं प्रकारेण पञ्चदशीग्रन्थे वेदान्ततत्त्वानि सरलरीत्या प्रतिपादितानि सन्ति। अतः पञ्चदशीति ग्रन्थ: ग्रन्थकारस्य विद्यारण्यमहाभागस्य अमरकीर्त्तिराजीति नास्ति संशयः।

प्रकरणप्रतिपाद्यविषयेषु द्वितीयप्रकरणे नाम दीपप्रकरणे चित्रपटदृष्टान्तेन परमात्मन: वर्णनं नितरां पिपठिषूणामानन्दमधिगमाय भवतीति। तत्रारम्भे उक्तं यथा-

**यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम्।**
**परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम्॥**
**यथा धौतो घट्टितश्च लाञ्छितो रञ्जित: पट:।**
**चिदन्तर्यामी सूत्रात्मा विराट् चात्मा तथेर्यते॥**[1]

तत्र पटे चतस्र: अवस्था: यथा-धौत:,घट्टित:, लाञ्छित:, रञ्जित: इति भवन्ति, एवं चित्, अन्तर्यामी, सूत्रात्मा, विराट् चेति चतस्र: अवस्था: परमात्मनि अवगन्तव्या:। आसु अवस्थासु मध्ये स्वत: द्रव्यान्तसम्बन्धं विना शुभ्र: पट: धौत: इत्युच्यते। अन्नेन मण्डेन लिप्त: पट: घट्टित: इति कथ्यते। मषीमयै: आकारै: पूरित: पट: लाञ्छित: इति भण्यते। यथायोग्यं वर्णै: पूरित: पट: रञ्जित: इति गीयते। एवं पटस्य अवस्थाचतुष्टयं यथा तथैव परमात्मनि अपि विज्ञेयम्। तत्र परमात्मा यदा मायारहित: मायाकार्यरहितश्च भवति तदा 'चित्' इत्युच्यते। मायासम्बन्धात् 'अन्तर्यामी'ति व्यपदिश्यते। अपञ्चीकृतपञ्चभूताभ्यां कार्यस्वरूपसमष्टिसूक्ष्मशरीरयोगात् 'सूत्रात्मा' इत्याहूयते। पञ्चीकृतपञ्चभूतानां कार्यस्वरूपस्थूलसृष्टियोगात् समष्टिस्थूलशरीररूपस्योपाधे: संयोगात् 'विराट्' इति कथ्यते।[2]

एवमयं परमात्मा य: चतुर्धाभागं प्राप्नोति स्वोपाधिवशात् स वस्तुत: स्थूलसू-क्ष्मकारणशरी-राद्व्यतिरिक्त:जाग्रत्स्वप्नसुषुप्त्याद्यवस्थात्रयसाक्षीअन्न-प्राण-मन-विज्ञान-आनन्दमया-दिपञ्चकोशा-तीत: सच्चिदानन्दस्वरूप: संस्तिष्ठतीति।[3]

उपाधिस्तु तत्र अचिन्त्यरचनायुक्तियुक्तं यद् बीजं सा माया एव। मायोपाधि एव स्वाभासेन जीवेशौ निर्माति। अत एवोक्तमपि

**मायाख्याया: कामधेनौर्वत्सौ जीवेश्वरावुभौ।**
**यथेच्छं पिवतां द्वैतंतत्त्वं तत्त्वन्त्वद्वैतमेव हि॥**[4]

तत्र 'सुषुप्तिस्थान एकीभूत: प्रज्ञानघन एव' इत्यादौ सुषुप्तिकालीन आनन्दमयकोश एव सर्वेश्वर: परमेश्वर:, ईश्वर:,सर्वज्ञ:,अन्तर्यामी, भूताधिपति:, प्रज्ञानघन:, जगत्कारणं चोच्यते।

एवं विज्ञानमयादिकोशेषु पृथिव्यादिभूतेषु तिष्ठन् तान् कोशान् भूतानि च अन्त: नियमयति प्रेरयति। तेन र्सवज्ञ एव अन्तर्यामीति पदेन उच्यते। उक्तं हि-

**विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि।**
**अन्तस्तिष्ठन्यमयति तेनान्तर्यामितां व्रजेत्॥**[5]

बृहदारण्यकोपनिषदि अन्तर्यामिब्रह्मणे श्रुति: 'यो विज्ञाने तिष्ठन्'[6] इत्युद्घोषयति यत् विज्ञानमयको-शरूपबुद्धौ तिष्ठन् स अनतर्यामी बुद्ध्या अनवलोकित: बुद्धिशरीर: सन् एवं बुद्धिं नियमयति प्रेरयतीति।[7]

यथा तन्तु: उपादानरूपेण पटे सर्वत्र विद्यते तथा अयम् अन्तर्यामी सर्वेषामुपादानकारणं भवति। अत: सर्वेषु भूतेषु कोशेषु च वर्तते इति घोषितं 'य: सर्वेषु भूतेषु तिष्ठन्' [8] इति।

अन्तर्यामी यदि सर्वत्र उपस्थित: अवस्थित: अस्ति, तर्हि सर्वत्र कथं नोपलभ्यते? अस्योत्तरं यत्- पटात् आन्तर: तन्तु:, तन्तो: आन्तर: सूक्ष्मतन्तु:। एवं यत्र आन्तरत्वस्य समाप्ति: भवेत् तत्र अयमीश्वर: अनुमातव्य:, अन्तरत्वात्। स: सर्वत्र नोपलभ्यते इति अनुमानगम्य: भाव:। अत्रेदमनुमानम्। आन्तरत्वस्य तारतम्यं क्वचित् विश्रान्तं भवेत्, यत: तत्तारतम्यमस्ति यथा अणुत्वस्य तारतम्यममस्ति। तद्यथा-

**पटादप्यान्तरस्तन्तुस्ततोरप्यंशुरान्तर।**
**आन्तरत्वस्य विश्रान्तिर्यत्रासावनुमीयताम्॥**[9]

आन्तरत्वेऽपि सूक्ष्मतन्तुवत् अन्तर्यामिनो दर्शनं कथं न भवति? उत्तरं तु यत्- तेषां बाह्यत्वं नास्ति आन्तरत्वमेवास्ति, अत: नोपलभ्यते। आन्तरत्वस्य द्वित्रासु अवस्थासु कक्षासु वा दर्शनं घटपटादिषु बाह्यपदार्थेषु दृश्यते। परन्तु आन्तर्यामिन: बाह्यत्वं नास्ति। आन्तरमेवास्ति,अत: अयं सर्वान्तर: दृश्यते। अस्य सद्भावस्य निर्णय: युक्त्या श्रुत्या कर्त्तव्य:। तत्र किमप्यचेतनं चेतनाधिष्ठानं विना न प्रवर्तते इति युक्त्या अस्य सिद्धि।'यो विज्ञाने

---

[1]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:-१-२
[2]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक-३-४
[3]तत्त्वबोध:,श्लोक:-१४
[4]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:२३६
[5]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक: -१६३
[6]बृहदारण्यकोपनिषद् - ३.७.२२
[7]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६४
[8]बृहदारण्यकोपनिषद् -३.७.१५
[9]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६६

तिष्ठन्' [1] इति श्रुत्याऽपि अस्य सिद्धिः भवति। यस्य 'सर्वर्णि भूतानि शरीरम्' [2] इत्याद्यापि। यथा तन्तूनां पटरूपेण परिवर्तनात् तस्य पटस्य शरीरं तन्तुजालं भवति,तथैव अन्तर्यामी। यत: सर्वजगत: रूपम्, अत: अन्तर्यामिन: शरीरं सर्वं जगद्भवति। तथाह-

**पटरूपेण संस्थानात्पटस्तन्तोर्वपुर्यथा।**
**सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा॥** [3]

एवम् अन्तर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिरूपं गीतावचनमुपन्यस्तम्। यथा-

**ईश्वर: सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रमयन् सर्वभूतानि यन्त्रारूढानि मायया॥** [4]

अयमर्थ:- हे अर्जुन! ईश्वर: सर्वप्राणिनां हृदयदेशे वर्तते। स च यन्त्रारूढं सर्वभूतवर्गं स्वमायया भ्रमयति इति। अत्र सर्वभूतानि इति पदं विज्ञानमयकोशरूपजीव: इति अर्थस्य प्रकाशकम्। ते च विज्ञानमयकोशरूपजीवा: हृदयपुण्डरीके स्थिता:। यत: तेषामुपादानकारणमीश्वर: हृदि विकारं प्राप्नोति। तत्र देहादिपञ्जरम् एव यन्त्रम्। तत्राभिमानभाव: आरोह:। शुभाशुभेषु कर्मसु प्रवृत्ति: भ्रमणम्। तदेवं यन्त्रपदं देहादिपञ्जरस्य वाचकम्, अभिमानभाव: तदारोहपदस्य, शुभाशुभकर्मप्रवृत्तिभ्रमणस्येति। [5]

ईश्वर: स्वशक्त्या प्रभावित: विज्ञानमयजीवरूप: सन् तस्मिन् विज्ञानमयप्रवृत्तिरूपेण विकृत: भवति। स एव ईश्वर: स्वशक्त्या स्वयमेव विकृतिं प्राप्नोति। तदेव मायाया: भ्रमणमुच्यते।

'य: पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति' [6] इत्यादिश्रुतौ अयमेव भ्रमणरूप: अर्थ: कथित:। अयं न्याय: पृथिव्यादिषु स्वबुद्ध्या योजनीय:। सर्वा: प्रवृत्तय: ईश्वराधीना: इत्यत्र शास्त्रान्तरं प्रमाणमस्ति। तद्यथा-

**जानामि धर्मं न च मे प्रवृत्ति: जानाम्यधर्मं न च मे निवृत्ति:।**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥** [7]

इत्यादौ हृदये वर्तमान: देव: यथा प्रेरयति तथा मनुष्य: करोति इत्यत्र सर्वासां प्रवृत्तीनां प्रेरक: अन्तर्यामीति शम्।

**ग्रन्थसूची**

श्रीविद्यारण्यमुनि:।(१९९६)।पञ्चदशी,।दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान।
श्रीशङ्कराचार्य:।(स.२०५८)। बृहदारण्यकोपनिषद्,शाङ्करभाष्योपेता, हिन्दी अनुवाद सहित। गोयन्दका, श्रीहरिकृष्णदास, अनुवादक। गोरखपुर : गीताप्रेस्।
श्रीशङ्कराचार्य:।(स.२०६३)। श्रीमद्भगर्वीताशाङ्करभाष्य, हिन्दी अनुवाद सहित। गोयन्दका, श्रीहरिकृष्णदास, अनुवादक। गोरखपुर : गीताप्रेस्।
श्रीशङ्कराचार्य:।(१९८८)।प्रकरणाष्टकम्,श्रीमद्विद्यारण्यादिटीकोपेतम्,सम्पा.एस्,एस्,शास्त्री। आनन्दाश्रममुद्रणालय:।

## श्रीमद्भागवते ब्रह्मतत्त्वलक्षणविमर्श:*

सर्वशास्त्रेतिहासपुराणादिषु मानवजीवनमतीवदुर्लभमिति प्रतिपादितं परमिह मानवयोनौ जन्म लब्ध्वा जीव: आजन्मन: आरभ्यान्तं यावत् बहुनि आध्यात्मिकाधिदैविकाधिभौतिकानि कष्टानि सहते। एतदर्थं सर्वोऽपि जीव: आत्मकल्याणाय चिरसुखावाप्तये च सदा चेष्टते। विविधानि कर्माणि कृत्वैवेह जीव: शतं जीवति परं कर्मण फलानि भोक्तुं नाना योनौ जन्म लब्ध्वा जन्ममृत्युपरम्परायां नैकानि कष्टानि प्राप्नोति।तेषां निवृत्यर्थं ऋते ज्ञानान्नमुक्तिरिति उक्त्वा शास्त्रकारा: मोक्षमार्गं विनिर्दिशन्ति। स च मोक्षमार्ग: ज्ञानैकलभ्य:। आत्मज्ञानानन्तरं ब्रह्मप्राप्तेरन्तरं वा दुखस्य समूलोत्पाटनं भवतीति पूर्वजानां मुनिऋषीणामभिमतम्। प्रत्येकस्य मानवस्य मनसि इयं शङ्का जायते दृश्यमानं जगत् केन विनिर्मितं केन चैतत् पालितं भवति?केन प्रचोदित: जीव: अस्मिन् नसीप्रोतबलिवर्देव नाना विधान् कष्टान् सादरेण स्वीकरोति? भगवती श्रुतिरपि इत्थं प्रतिपादयति-

**केनेषितं पतति प्रेषितं मन: केन प्राण: प्रथम: प्रैति युक्त:।**
**केनेषितां वाचमिमां वदन्ति चक्षु श्रोत्रं क उ देवो युनक्ति॥**

[1]बृहदारण्यकोपनिषद् -३-७-२२
[2]बृहदारण्यकोपनिषद् -३-७-१५
[3]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६८
[4]श्रीमद्भवद्गीता.श्लोक:८ -५१
[5]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१७१-१७३
[6]बृहदारण्यकोपनिषद् -३-७-३
[7]पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१७६

***डा. कृष्णचन्द्रकवि:, पुराणेतिहासविभाग:, श्रीसदाशिवपरिसर:, पुरी**

**भयादस्याग्निस्तपति भयात्तपतिसूर्य:।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम:॥**[2]

शंकाया: अस्या: निवारणाय बहुप्राचीनकालादारभ्य भारतीया: मनीषिण: कृतयत्ना: सन्ति। भारतीयदार्शनिका: स्व स्वमतानुसारं जगत्कारणतत्त्वं आप्राचीनकालात् प्रतिपादयन्ति चेष्टन्ते च। दृश्यमानं जगत् कार्यात्मकं कार्यस्य किमपि कारणमवश्यमेव स्यादिति मत्वा सत्कार्यवादिन: सांख्यदार्शनिका: कारणं विना कार्योत्पत्तिर्नैव भवितुमर्हति इति प्रतिपादयन्ति यथा तैलरूपस्य कार्यस्य तिला: सन्ति कारणरूपा: न कोऽपि जन: तैलावाप्तये सिकताया: पेषणं करोति। दृश्यमानं जगत् तु कार्यात्मकं यतो हि नित्यंप्रतिदिनं सूर्यचन्द्रतारकादय: उद्गच्छन्ति अस्तं च यान्ति वृक्षा: यथाकालं फलपुष्पै: विमण्डिता: भवन्ति नद्य: स्वामृतमयै: जलै: प्रवाहिता: भवन्ति जीवयन्ति च स्थावरजङ्गमानि। ये केऽपि मनीषिण: सचराचरं भावात्मकं जगत् केनैतद् विनिर्मितमिति चिन्तयन्ति। भारतीयदर्शनं तु आस्तिकनास्तिकभेदेन द्विधा प्रविभक्तम्। ये तु आस्तिका: वेदोपवृङ्हितानि तत्परकशास्त्रप्रतिपादितानि च तथ्यानि आधृत्य जगत्सृष्टौ कारणानि प्रतिपादयन्ति। नास्तिकास्तु वेदबाह्यानि तथ्यानि विमृश्य स्वमतं समुपस्थापयन्ति। सत्कार्यवादिन: सांख्यास्तु जगत्कारणत्वमित्थं प्रतिपादयन्ति- असद्वस्तुन: उत्पत्ति: सद्वस्तुनश्च विनाश: भवितुं नार्हति। किं च श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णचन्द्रेणेत्थं प्रतिपादितं यत्

**नासतो विद्यते भाव: नाभाव: विद्यते सत:।**[3]

एतेषां मतानुसारेण असद् वस्तुन: कार्यत्वसिद्धि: न स्यात्। कार्योत्पत्तये उपादानमवश्यमेवावश्यकम्। अर्थात् कार्यकारणयो: नियमपूर्वकसम्बन्ध: वर्तते एव यतो हि सर्वस्मिन् सर्वं कार्यं न सम्भवति। तदुच्यते-

**असद् करणादुपादानग्रहणात् सर्वसम्भवाभावात्**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥**[4]

एते तु वेदान्तसम्मतं ब्रह्मतत्त्वस्य विवर्त्तत्वं प्रपञ्चत्वमिति नाङ्गीकुर्वन्ति। सुखदुःखमोहा-त्मकस्योत्पत्तौ प्रकृतिरेव मूलकारणमिति स्वीकुर्वन्ति। तदुक्तं सांख्यवादिभि:-

जगत्कारणे येयं सुखात्मकता तत्सत्वं,या दु:खात्मकता तद्रज: या च मोहात्मकता तत्तम इति त्रिगुणात्मककारणिसिद्धि:। तथाहि प्रत्येकं भावास्त्रैगुण्यवन्तोऽभूयन्ते। यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखमाविरस्ति। तं प्रतिसत्वगुणप्रादुर्भावात्। तत् सपत्नीनां दु:खम्। ता: प्रति रजोगुणप्रादुर्भावात्। तामलभमानस्य चैत्रस्य मोहो भवति। तं प्रति तमोगुणसमुद्भवात्।[5]

इत्थमेतेषां मतानुसारेण जगत्सृष्टौ मूलप्रकृतिरेव प्रमुखकारणमिति एते विनिर्द्धारयन्ति। सांख्यास्तु जगत्सृष्टौ ईश्वरस्यास्तित्वं नैव स्वीकुर्वन्ति। वेदान्तिनस्तु प्रपञ्चोत्पत्तौ मूलकारणं ब्रह्मेति प्रतिपादयन्ति। जगत्सृष्टौ मूलभूतस्य तत्त्वस्य स्वरूपं तत्तन्मतप्रतिपादका: दार्शनिका: भक्ता: स्वमतं कथं दर्शयन्ति तत् केनापि कविना इत्थमेकेनैव पद्येन दर्शितम्-

**यं शैवा: समुपासते शिव इति ब्रह्मेति वेदान्तिन:**
**बौद्धा:बुद्ध इति प्रमाणपटव: कर्त्तेति नैयायिका:।**
**आर्हन्नित्यथ जैनशासनरता: कर्मेति मीमांसका:**
**सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरि:॥**

तत् परमं तत्त्वं ब्रह्म श्रुतिस्मृतिपुराणशास्त्रप्रतिपाद्यविषय इति वदन्ति विपश्चित। अत एव गीतायां भगवता स्वयमुक्तम्-

**सर्वस्य चाहं हृदि सन्निविष्टो मत्त: स्मृतिर्ज्ञानमपोहनं च।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्॥**[6]

एवं ब्रह्मण: सर्वव्यापकतां स्वीकृत्य भगवता व्यासदेवेन ब्रह्मसूत्रविनिर्माणावसरे अथातो ब्रह्मजिज्ञासेति सूत्रं सूत्रितम्। योऽयं ब्रह्म तस्यव्याकरणदृष्ट्या किं निर्वचनं तन्मयाध विचार्यते।

ब्रह्मशब्दस्य व्युत्पत्ति: अर्थश्च-

भ्वादिगणपठितात् बृंहि बृद्धौ इति धातो: मनिन् प्रत्यये ब्रह्मशब्द: निष्पद्यते। यस्यार्थ: भवति यत् तत्त्वं व्यापकं निरवधिकं निरतिशयं च तत् ब्रह्मेति गीयते। बृंहणात् बृहत्वादात्मा ब्रह्मेति गीयते।[7]
भगवत्पादानामादिशङ्कराचार्यमहोदयानां मतानुसारं बृहत्तमत्वात् ब्रह्म अपि भाष्यकृता एवमुक्तं ब्रह्मशब्दो हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्था: प्रतीयन्ते बृहतेर्धातोरर्थानुगमात्। श्वेताश्वेतरो-पनिषद्यपि ब्रह्मशब्दस्य व्युत्पत्ति: इत्थं प्रतिपादितं शास्त्रकारेण-

**बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म अर्थात् यत् तत्त्वं स्वयं वर्द्धते समग्रं लोकं वर्द्धयते च तत् ब्रह्मेति वदन्ति।**[8]

बृंहणत्वात् ब्रह्म इति व्युत्पत्या वस्तुदेशकालाद्यपरिच्छिन्नं नित्यं ब्रह्मावगम्यते। एवं बृद्ध्यर्थकबृहं धातुनित्यव्यापकत्वनिरतिशय-त्वानन्दत्वाद्यर्थान् प्रतिपादयति। अस्मादवगम्यते ब्रह्म नाम नित्यशुद्धबुद्धविनाशरहितं तत्त्वम्। उक्तं च सनत्सुजाते-

**शुक्राद् ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते।**

---

[1]केनोपनिषद् १/१
[2]कठोपनिषद् २/३/३
[3]भ. गी २/१६
[4]सां कारिका९
[5]सर्वदर्शनसंग्रह पृ५४७
[6]कठोपनिषदि २/३/३
[7]ब्र.सू.शा.भा सत्यानन्ददीपिका पृ ३०
[8]श्वेता शा.भा १/१

**तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम्।**[1]

**ब्रह्मलक्षणम्**

लक्षणप्रमाणाभ्यामेव कस्यापि तत्त्वस्य सिद्धिः जायते। वेदान्तपरिभाषायां ब्रह्मतत्त्वस्य द्विविधं लक्षणमुपन्यस्तं तद्यथा स्वरूपं तटस्थं च। स्वरूपलक्षणं नाम स्वरूपमेवलक्षणं स्वरूपलक्षणम् अर्थात् कस्यचित् स्वरूपभूतलक्षणं स्वरूपलक्षणमिति कथ्यते। यथा सत्यं ज्ञानमनन्तंब्रह्म अत्र ब्रह्मेति पदं विशेष्यं सत्यं ज्ञानम् अनन्तं च विशेषणपदम्। तटस्थलक्षणं विपश्चिः इत्थं प्रतिपादयन्ति यत् स्वस्वरूपे विद्यमानेऽपि इतरव्यावृत्यार्थं प्रतिपादयति तत् तटस्थम्। वेदान्तपरिभाषाकारः तटस्थमेवं निरूपयति यावल्लक्ष्यकाल-मनवस्थितत्वे सति यत् व्यावर्तकम् अस्योदाहरणं व्यासदेवेन जन्माद्यस्य यतः इति ब्रह्मसूत्रे प्रतिपादितम्। आदिशङ्करस्य मतानुसारं कश्चन नटः नाटके भिन्नरूपं बिभर्ति नाटकस्यपरिसमाप्त्यनन्तरं पुनः स्वरूपं भजते नाटके धृतं रूपं तस्य तटस्थलक्षणं भवितु मर्हति तथैव ब्रह्मण स्वरूपं सत्यं महाभूतेषु तस्य यो अवभासः भवति तत् तटस्थमिति उच्यते।

**श्रीमद्भागवतमहापुराणे ब्रह्मतत्त्वम्**

श्रीमद्भागवतमहापुराणमस्ति सर्वज्ञानविज्ञानविजृम्भितपुराणम्। अस्मिन् सर्वेषां शास्त्राणां मूलभूतानि तत्त्वानि सन्ति सर्वत्र प्रतिपादितानि किञ्चैतत् पुराणं वेदान्तसारसम्बलितपुराणमिति मन्यते। तस्मादुक्तमस्ति-

**श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं**
**यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते।**
**तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं**
**तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः॥**[2]

पुराणस्यास्य मङ्गलाचरणे सर्वादौ यन्माद्यस्य यस्येति उक्त्वा ब्रह्मतत्त्वमेव सर्वश्रेयस्तत्वमिति प्रतिपादितम्। श्रीमद्भागवतस्य लक्षणं कुर्वद्भिः शास्त्रकारैः प्रतिपादितं यत्र हयग्रीवेण प्रतिपादिता ब्रह्मविद्या सविस्तरं वर्णितास्ति तत् महापुराणं भागवतमित्युच्यते। तदुक्तम्यत्राधिकृत्यगायत्रीं वर्ण्यते धर्मविस्तरः....तं वै भागवतं विदु॥ अस्य महापुराणस्यैकादशस्कन्धे निमिनवयोगीन्द्रसम्बादवर्णनप्रसङ्गे ब्रह्मतत्त्ववर्णनपरकं प्रकरणमुपलभ्यते। कदाचित् अस्मिन् पुण्यक्षेत्रे भारतवर्षे ऋषभदेवेति राजर्षिः जन्म लब्धवान्। तस्य शतपुत्रेषु भरतः ज्येष्ठः आसीत्। यस्य नाम्ना इदमजनाभवर्षं भारतमिति व्यपदिशन्ति मनीषिणः। तमनु नवनवति प्रधानाः नववर्षेषु राजानः बभूवुः। अन्ये च नवपुत्राः भागवतधर्मदर्शनाःमहाभागवताः संजाताः। ते यथा-

**कविर्हरिरन्तरीक्षप्रबुद्धः पिप्पलायनः।**
**आविर्होत्रोऽथद्रुमिलश्चमसः करभाजनः॥**[3]

इमे नवयोगीन्द्राः कदाचित् कालचोदिताः सन्तः राज्ञः निमेः विदेहस्य यज्ञस्थलं समुपागताः। तान् वीक्ष स राजर्षिः प्रणयावनतपुरसरः पाद्यादीनि दत्वा यथा विधिः समर्चयित्वा च विविधान् भागवतधर्मान् पप्रच्छ। तस्य शङ्कानिवारयन् ते भागवताः यथाक्रमं अधोलिखितपद्यानुसारं भागवती कथामुचुः। तद्यथा-

**भगवद्धर्मतद्भक्तः माया तत्तरणानि च।**
**ब्रह्मकर्मावतारेहा भक्तप्राप्ययुगक्रमान्॥**

नवयोगीन्द्रेषु पिप्पलायनेन ब्रह्मतत्त्वं तल्लक्षणं च प्रतिपादितं पुनश्च अस्य पुराणस्य प्रत्येकेषु स्थलेषु श्लोकेषु वा एतत् तत्वमुपलभ्यते यतो हि भगवता कृष्णद्वैपायनेन व्यासदेवेन महाभारतादीनि नैकानि शास्त्राणि अष्टादशपुराणि च विरचय्यापि यदा मनसि शान्तिं नाधिगच्छत् तदा कदाचित् सम्याप्रासाश्रमे सरस्वतीनद्यास्तटे नारदेनोपदिष्टः एतत् पुराणं रचितम्। तस्मात् अत्र ब्रह्मतत्वप्रतिपादकानि तत्वानि एव उपलभ्यन्ते। पुराणेऽस्मिन् वेदान्तशास्त्राभिप्रेतं स्वरूपतटस्थेति लक्षणद्वयं मङ्गलाचरणे एव प्रतिपादितम्। स्वरूपं सत् व्यावर्तकं स्वरूपलक्षणम् अर्थात् यल्लक्षणं पदार्थस्य यत् सत्यं तात्विकस्वरूपं तस्य प्रतिपादनं कृत्वा अन्येभ्य तस्य भिन्नतां प्रतिपादयति तत्स्वरूपमित्याचक्षते। पद्येऽस्मिन् ब्रह्मणः सत्यमिति स्वरूपलक्षणमभिहितम्। यस्मिन् ब्रह्मणि सत्वरजतमसां मायागुणानां भूतेन्द्रियदेवतारूपः सर्गः असत्यभूतः अपि सत्यवत् प्रतीयते तत् परं सत्यं ध्यायेमः इति प्रतिपादितम्। अत्रोदाहृतं भगवता कृष्णद्वैपायनेन यत् यथा कदाचित् मनुष्यस्य तेजसि वारिबुद्धिः जायते क्वचिच्च मुकुरादौ जलज्ञानं च भवति यद्यपि तदसत्यभूतं तथापि सत्यवत् प्रतिभाति। यथा दुर्योधनस्य राजसभायां जले स्थलबुद्धिः स्थलेषु च जलबुद्धिः अजायत कदाचिच्चकामलरोगादिपीडितस्य जन्तो शङ्खादौ पीतज्ञानं जायते। पुनश्च यन्माद्यस्य यतः इति उक्त्वा कृष्णद्वैपायनेन तटस्थलक्षणं व्याकृतं यत् यत सर्गस्थितिलयाः सम्भवन्ति इति। पद्येऽस्मिन् अन्वयशब्देन अनुवृत्तिः इतरशब्देन व्यावृत्तिः अवगम्यते अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत्। व्यावृत्तत्वात् विश्वं कार्य घटकुण्डलादिवत् इत्यर्थः। श्रुतिस्मृतयश्चापि तथ्यमिद-मङ्गीकुर्वन्ति यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रत्ययंत्यभिसंविशंन्ति। स्मृतिश्च

**यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।**
**यस्मिँश्च प्रलयं यान्ति पुनरेव युगक्षये।।**
**इत्थं ब्रह्मणः लक्षणद्वयं प्रतिपादितम्।**

तदुक्तं-

**यन्माद्यस्य यतोऽन्वयादितरतश्चार्थे स्वभिज्ञः स्वराट्**
**तेने ब्रह्महृदा य आदि कवये मुह्यन्ति यत्सूरयः।**

---

[1]सनत्सुजात ४/२
[2]श्रीमद्भा१२/१३/१८
[3]श्रीमद्भा ५/४/११

**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा**
**धाम्ना स्वेन सदा निरस्त कुहुकं सत्यं परं धीमहि॥**

पुनश्च-

**नारायणाभिधानस्य ब्रह्मण: परमात्मन:।**
**निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमा॥**

महाराजेन निमिना पृष्ट: पिप्पलायन: कथयति हे राजन् य: कारणरहित: अपि अस्य संसारस्य स्थित्युद्भवप्रलयादीन् करोति यश्चापि स्वयमुपाददानिमित्तकारणरूपेण जगत्सृजति तद्ब्रह्मेति अवेहि। स्वप्नजागराद्यवस्थातिसृष्वपि साक्षी रूपेणावतिष्ठते एतदतिरिच्य तुरीयावस्थायां समाधावपि यत्तु राजते देहेन्द्रियाणि येन संजीवितानि भवन्ति तत् नारायणाख्य: ब्रह्मेति अवेहि। अग्निकणिका: यथा अग्निं न प्रकाशयन्ति न तु प्रज्वालयितुं शक्नुवन्ति तथैव परमात्मनि परब्रह्मणि मन वाग् चक्षु: न विशन्ति प्राणा: अन्यानि इन्द्रियाण्यपि तं अधिगन्तुं समार्था भवन्ति। वेदा: अपि यं बोधकनिषेधवाक्येन बोधयन्ति तद् ब्रह्मतत्वमिति ज्ञेयम्।

**नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिष स्वा:।**
**शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धि:॥**[1]

### ब्रह्मण: विलक्षणता

ब्रह्मतत्त्वं सर्वस्मिन् शास्त्रे प्रतिपादितमस्ति।तद् ब्रह्मतत्त्वं यत्तु वेदोपनिषदादिषु प्रतिपादितं तस्य स्वरूपं कीदृशमिति शंकायां शास्त्रकाराइत्थं स्वरूपनिर्द्धारणं कुर्वन्ति। श्रुतय: अपि तस्य स्वरूपमित्थं व्याकुर्वन्ति-अशब्दमस्पर्शस्वरूपमव्ययम् अर्थात् तद् ब्रह्म शब्दस्पर्शरूपरहितोऽस्ति। सनत्सुजातेनास्य स्वरूपमित्थं प्रतिपादितं यत्

**नाभाति शुक्लमिव लोहितमिवाथो कृष्णमथार्जुनं काद्रवं वा।**
**न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत्समुद्रे सलिलं बिभर्त्ति॥**[2]

अस्य ब्रह्मण: स्वरूपं तारकासु विद्युत्सु मेघेषु वा न विलोक्यते न चाप्यस्य स्वरूपं वायौ देवतासु चन्द्रे सूर्ये वा तिष्ठति। ऋगादिष्वपि चतुर्षु वेदेषु अस्य स्वरूपमिदमित्थं रूपेण नैव निर्णितमस्ति। अस्य साक्षात्कार: केवलं ब्रह्मतत्त्वविदां अन्तहृदयाकाशे एव भवति। तदवारणीयं ब्रह्मतत्त्वं सर्वगतत्वात् तमस: परमिति वक्तुं शक्यते। प्रलये सर्वाणि तत्त्वानि नष्टानि जायन्ते परं ब्रह्मतत्त्वं पूर्ववत् तिष्ठति। अस्य स्वरूपमणीयसामपि अणीयं रूपं पर्वतेभ्योऽपि महत् वर्तते एतस्मिन्नेव सर्वं जगत् प्रतिष्ठितं वर्तते। विष्णुपुराणे ब्रह्मतत्त्वस्य विलक्षणता इत्थं प्रतिपादितास्ति-

**नाहो न रात्रि न नभो न भूमि: नासीत्तमो ज्योतिरभूच्च नान्यत्।**
**श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्मपुमाँस्तदासीत्॥**[3]

### ब्रह्मण उपादानत्वं निमित्तत्वं च

कारणं विना कार्यस्योत्पत्ति: न स्यादिति चिन्तयित्वा दार्शनिका: घटपटादिसमस्तस्य कार्यस्य कारणानि विचिन्तयन्ति। तत् कारणमपि उपादाननिमित्तभेदेन द्विविधम्।कार्यात्मकस्य जगत: उपादानकारणं निमित्तकारणं च स्वयं ब्रह्म एवास्ति इति उद्धवमुखेन प्रतिपादयति भगवान् व्यासदेव तद्यथा-

**एतौ हि विश्वस्य च विश्वयोनी रामो मुकुन्द: पुरुष: प्रधानम्।**
**अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ॥**[4]

### ब्रह्मण: स्वयं प्रकाशत्वम्

सोपनिषद: वेदा: परस्मादेव ब्रह्मणो: हिरण्यगर्भादीनामुत्पत्ति: दर्शयन्ति। शुद्धब्रह्मण: सकाशात् कार्यब्रह्मण: उत्पत्ति:जायते तस्मादेव तस्य बृद्धिरपि जायते। ज्योतिर्गणेषु सोऽप्रकाशितोभूत्वापि सर्वान् प्रकाशयति। यथा आकाशे अवकाशोऽस्ति गंगायां वीचय: यथा भवन्ति तत् वत् सचराचरं जगत् स्वयं प्रकाशे ब्रह्मणि उत्पद्य लीयते। भागवतकार: ब्रह्मस्तुतावपि ब्रह्मण: स्वयं प्रकाशत्वं प्रतिपादितं यथा स पुराणपुरुष: आत्मा एक एव सत्य: स्वयं ज्योति: अनन्त: आद्यश्च वर्तते।तमेव परमात्मानं सर्वे अक्षर: नित्य: अजस्रमुख: निरञ्जन: पूर्ण: अद्वय: मुक्त: इति व्यपदिशन्ति।

**एकस्त्वमात्मा पुरुष: पुराण: सत्य: स्वयंज्योतिरनन्त आद्य:।**
**नित्योऽक्षरोऽजस्रमुखो निरञ्जन: पूर्णोऽद्वयो मुक्त उपाधितोऽमृत॥**[5]

### ब्रह्मण: अनीहत्वम्

पर ब्रह्मण: किमपि कर्त्तव्यं नास्ति किं च तस्य कृतेकिमपि प्राप्तव्यं नास्ति तथापि स कर्माणि करोति। आत्मन: योगमायया तुणै: संसक्त: स: दुर्विभाव्यं व्यक्तं सृजति पालयति नाशयति च। यद्यपि स सर्वाणि स्थूलसूक्ष्मभूतानि सृजति तथापि तै: तस्य प्रसक्ति: नैव जायते। यतो हि स: रागद्वेषादिषु मुक्त: आस्ते। तदुक्तमस्ति एकादशे देवस्तुतौ-

---

[1] श्रीमद्भा ११/३/३६
[2] सनत्सुजातदर्शन ३/२०
[3] विष्णुपुराणम्
[4] श्रीमद्भा१०/४६/३१
[5] श्रीमद्भा११/१४/२३

**त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तुणस्थ**
**नैतैर्भवानजित कर्मभिरज्यते वै यत् स्वे सुखेऽव्यवहिते ऽभिरतोऽनवद्यः॥**[1]

पुनश्च माता देवकी स्वपुत्रस्य साक्षात् जातमात्रस्य अलौकिकमहिमानं दृष्ट्वा इत्थं स्तौति-

**रूपं यत् तत् प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्।**
**सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षात् विष्णुरध्यात्मदीपः॥**[2]

**जीवब्रह्मणएकत्रावस्थानम्**

परमात्मनः सकाशात् आदौ अपः सृष्टाः तथा च मनुस्मृतिः कथयति अप एव ससर्जादौ इति। अप् शब्दः भूतपञ्चकानामुपलक्षणार्थः। शब्देनानेन सूक्ष्मसृष्टिरपि अभिहिता। सलिलादेव स्थूलदेहादिकं जातम्। एतस्मिन्नेव शरीरे हृदयाकाशे वा द्योतमानौ जीवपरमात्मानौ समाश्रितौ स्तः। भगवती श्रुतिरपि इत्थं बोधयति-

**द्वा सुपर्णा सयुजासखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति॥**

श्रीमद्भागवतकारः जीवब्रह्मणोः एकत्रावस्थानं स्वीकरोति। तस्य मतानुसारं जीवपरमौ एकौ एव व्यवहारनिमित्तं परमात्मन अंशविशेषरूपेण तस्य अन्यथा प्रतिपादनं जातम्। वस्तुत जीवः परमात्मनः न पृथगस्ति। यदा जीवः आत्मज्ञानयुक्तः भवति तदा तं मुक्तः अन्यथा तं बद्धेति विचारयन्ति विद्वांसः।

**एकस्यैव ममांशस्य जीवस्यैव महाम्ते।**
**बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः॥**[3]

यद्यपि बद्धमुक्तभेदेन जीवपरमयोः भेदकल्पनं भवति तथापि द्वयोः सहावस्थानं नियन्ता नियन्त्रितरूपेण एकत्रैव भवति। अस्योदाहणमेवं प्रतिपादयति भागवतकारः यथा कस्मिश्चित् वृक्षे समधर्मिणौ सहचारिणौ च प क्षिणौ वसतः तथैव जीवपरमौ एकस्मिन्नेव वृक्षे शरीरे भवन्ति अनयोः मध्ये यस्तु जीवःमायाकल्पितेनोपाधिना युक्तः वृक्षजातं फलं सुखदुखात्मकं कर्मफलं खादति परं तु अन्य परमः निरन्नः अपि बलेन युक्तः द्रष्टा रूपेण तिष्ठति।

तदुक्तं भागवतकारेण-

**सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे।**
**एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्॥**[4]

अस्यपुराणस्य मतेन जीवपरमयोः न कोऽपि भेदोस्ति। श्रुतिरपि इत्थं प्रतिपादयति जीवो ब्रह्मैव नापरः। किं च गीतायाः मतानुसारमीश्वरस्यांशभूताः सन्ति जीवाः। स एवेश्वरो सर्वभूतानां हृदि तिष्ठति स एव सर्वभूतानि मायया भ्रमयति। तदुक्तमस्ति-

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनस्तिष्ठति।**
**भ्रमयन् सर्वभूतानि यन्त्रारूढानि मायया॥**[5]

एवं विचार्यमाणे अनयोः मध्ये न कोऽपि भेदः लक्षितो भवति केवलं मायया अज्ञानेन च कर्मण्यासक्तः जीव आत्मानं बद्धः मुक्तो वा चिन्त्यते। सदा साधकेन ज्ञानेनात्मनः स्वरूपं द्रष्टव्यं येन स्वकल्याणसाधितं स्यात्। इत्थं सर्वत्र शास्त्रेषु जीवपरमयोः एकत्वमभिन्नत्वं सहावस्थानं च प्रतिपादितमस्ति।

## अद्वैतवेदान्तदर्शने ब्रह्मस्वरूपम्*

अद्वैतवेदान्ते परमार्थसद्वस्तु ब्रह्मैकमात्रं भवति। ब्रह्मातिरिक्तं यद्वस्तु विद्यते तत्सर्वमनित्यं भवति। यथोक्तमस्ति- ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इति। ब्रह्म एकं सर्वव्यापि भवति। तत्तु जगतः एकैकस्मिन्नणावपि व्याप्तं निर्विकारं निराकारमविनाशि अनादि चैतन्यमानन्दमयं च भवति। यथोक्तमस्ति - 'सर्वं खल्विदं ब्रह्म" इति। ब्रह्मज्ञानं विना मोक्षप्रिप्तः न भवति। अतः मोक्षप्रप्त्यर्थं ब्रह्मसाक्षात्कारस्य नूनमावश्यकतावर्त्तते। तर्हि किं तत् ब्रह्म? तस्य लक्षणं किम्? किं वा तस्य स्वरुपम्? इति जिज्ञासायाम् आचार्यशङ्करभगवत्पादेनोक्तं यत् -

**श्लोकार्द्धेन प्रवक्षामि यदुक्तं ग्रन्थकोटिभिः।**
**ब्रह्म सत्यं जगन्मिथ्या जीवब्रह्मैव नापरः॥**

---

[1]श्रीमद्भा११/६/८
[2]श्रीमद्भा१०/३/२४
[3]श्रीमद्भा ११/११/४
[4]श्रीमद्भा ११/११/६
[5]भ. गीता १८/६१

***प्रदीपकुमारसाहुः**
**सहायकाचार्यः, सर्वदर्शनविभागः, रा. सं. सं., श्रीसदाशिवपरिसरः, पुरी**

लक्षणं द्विविधं स्वरूपलक्षणं तटस्थलक्षणं चेति। स्वरूपमेव लक्षणं स्वरूपलक्षणम्। सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात् इत्यादय: ब्रह्मण: स्वरूपलक्षणत्वेन प्रिसद्धिरस्ति। सच्चिदानन्दं ब्रह्म इत्यत्र सच्छब्दस्यार्थो भवति त्रिकालबाधरहित्वम्। यद्रुपेण यन्निश्चितं तद्रूपं न कदापि व्यभिचरति तदेव तत्सत्यमिति। सद्वस्तुन बाधा कस्मिन्नपि काले न भविष्यति। ज्ञानं नाम चैतन्यस्वरूपम्। आनन्दस्वरूपं च भवति ब्रह्म। पुनः तटस्थलक्षणं तावत्- यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति इत्यतदेव ब्रह्म। परन्तु पारमार्थिकव्यावहारिकदृष्टिभ्यां सगुननिर्गुणभावमाश्रित्य कल्पनाद्वयं वर्तते। उक्तञ्च भगवत्पादेन श्रीशङ्कराचार्येण - द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम् इति। अत्रोत्यपाधिशब्देन मायेति निर्दिशो भवति। मायारूपोपाधिविशिष्टं ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं निर्विकारं निर्गुणं समस्तभेदावरहितं सर्वोपाधिविनिर्मुक्तं स्वीक्रियते।

ब्रह्मनिर्गुणविषये शाङ्करभाष्येऽपि वर्णितमस्ति यत् - न तु ब्रह्म गुणशब्देनोच्यते निर्गुणत्वात् । प्रकृते: धर्मा: सत्वरजस्तमात्मका ये गुणा: ते ब्रह्मणि न भवन्ति। यथोक्तमस्ति कठोपनिषदि - वाचामगोचरं ब्रह्म इति। पुनः उल्लिखितमस्ति तैत्तिरीयोपनिषदि यत - नैव वाचा मनसा प्रप्तुं शक्यो न चक्षुषा इति। प्रसङ्गेऽस्मिन् मुण्डकोपनिषदि वर्णितमस्ति यत् - यतो वाचो निवर्तन्ते अप्रप्य मनसा सह। इतोपि ब्रह्मणो निर्गुणत्वं विषये उक्तमस्ति यत् - यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं भूतयोनिं परिपश्यन्ति धीरा इति।

ब्रह्ममिदम् इन्द्रियै: मनसा च ज्ञातुं न शक्यमिति प्रतिपादितम्। यथेक्तमस्ति वेदान्तसारे - अवाङ्गनसगोचरं ब्रह्मैति ।सम्पूर्णं जगत् ब्रह्मण: विवर्तमेव। सृष्टे: पूर्वं जगत् ब्रह्मैवासीत्। ब्रह्मण: भिन्नं न किञ्चिदस्तु विद्यते। सदेव सोम्येदमग्र आसीत् , एकमेवाद्वितीयं ब्रह्म , यथासौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इति छान्दोग्योपनिषदि वर्णितमस्ति। स यथाग्ने क्षुद्रविस्फुलिङ्गा व्युञ्चरन्ति एवमेवैतस्मादात्मन: सर्वे प्राणा: सर्वे लोका: सर्वे देवा: सर्वाणि भूतानि व्युञ्चरन्ति इति बृहदारण्यकोपनिषदि टङ्कितमस्ति। यतो वा इमानि भूतानि जायन्ते येन वा जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तज्जिज्ञासस्व तद्ब्रह्म इति तैत्तिरीयश्रुतिश्च ब्रह्मण एव सकलस्थावरजङ्गमानामुत्पत्ति:, ब्रह्मण्येव स्थिति:, ब्रह्मण्येव नाश इति प्रतिपादयत्य: साक्षाद्ब्रह्मण एव सत्यत्वमस्तीति प्रतिपादयन्ति।

एकं ब्रह्म एवात्मारूपेण समस्तजीवेषु व्याप्तमिति श्वेताश्वतरोपनिषदि प्रतिपादितमस्ति। तत्रैवोक्तमस्ति - एको देवस्सर्वभूतेषु गूढ: सर्वव्यापी सर्वभूतान्तरात्मा इति। स यथा सैन्धवाखिल्य उदके प्रास्त उदकमेवानुविलीयेत्, न हि अस्य उद्ग्रहणाय इव स्याद्यतो यतस्वाददीत लवणमेवैकं वाऽरे इदं महद्भूतमन्तमपारं विज्ञानघनमेव इति बृहदारण्यकश्रुति जगत एकैकस्मिन्नणावपि ब्रह्मव्याप्तमिति निर्दिशति।

सर्वस्यात्मत्वाद्ब्रह्मास्तित्वसिद्धिरिति ब्रह्मास्तित्वविषये शङ्करभगवत्पादाना-माशय:। इनद्रियद्वारा यस्य मन: बहिर्विषयं प्रित गच्छति तस्य लोक इति व्यवहार:। न गच्छति चेत् तस्य लोकोऽपि न। लोक: अविद्याजन्य:। जयते गच्छति तिष्ठति वा जगत्। जन्म अस्ति चेत्तस्य नाशोऽप्यस्ति अवश्यम्भावी। जगतो जन्मास्ति अत: नाशोऽपि ध्रुवास्ति। यथेक्तमस्ति श्रीमद्भगर्वीतायां - जातस्य हि ध्रुवो मृत्यु: ध्रुवं जन्म मृतस्य च इति। ब्रह्मण: जन्म अपि नेत्यत: नाशोऽपि न। अत: अव्ययम्। आत्मा स्वत: सिद्ध इत्यत: तत्सिद्धये न प्रमाणानां केषामप्यावश्यकतास्ति इति। यथेक्तं श्रीशङ्कराचार्येण - आत्मन: प्रत्याख्यातुम-शक्यत्वात्। य एव निराकर्ता तस्यैवात्मत्वम्। सर्वोऽप्यात्मास्तित्वं प्रत्येति। न नाहमस्तीति इति। ब्रह्म एवात्मशब्देन गीयते।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।<br>
यच्चास्य सन्ततो भाव: यस्मादात्मेति गीयते॥

श्लोकेऽस्मिन् प्रत्यगात्मा एव आत्मशब्देन गीयते इति प्रितपादितमस्ति। आत्मा न भेक्ता धर्माधर्मरहितः कूटस्थत्वात् स नित्यः भवति। बुद्ध्याद्युपाधिपरिछिन्नः सः स्वतो भोक्तेति जानाति। नहि केवलस्यात्मनो भोक्तृत्वमस्ति। बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम् इति शङ्करभगवत्पादेनोक्तम्। अत्र धीः उपाधिः। कर्तृत्वभोक्तृत्वादयः अविद्याप्रत्युपस्थापिताः।

आत्मब्रह्मणोः ऐक्याभिव्यक्तिः तत्त्वमसीति वाक्ये भवति। सम्पूर्णं जगदात्मैव तदेव सत्यं, त्वमपि तदात्मा एव। प्रसङ्गेऽस्मिन् छान्दोग्योपनिषदि उक्तमस्ति यत्- स च ...... सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति ।

ब्रह्मसाक्षात्कारानन्तरं सकलभेदभावो विनश्यति। तदनु सर्वं खल्विदं ब्रह्म इति ब्रह्म एव भवति। निरस्तसमस्ताज्ञानजन्यसकलतत्त्वः ब्रह्मैव भवति इति श्रृत्युक्तात्मभावनां प्रप्तुमेव जीवानां प्रवृत्तिः।

बृहदारण्यकोपनिषद्<br>
तैतिरीयोपनिषद्- २/१/१<br>
तैतिरीयोपनिषद्<br>
तैतिरीयोपनिषद्-३/६<br>
तैतिरीयोपनिषद्- २/१<br>
शा. भा. - १३/१२)<br>
कठोपनिषद्<br>
तैतिरीयोपनिषद्<br>
तैतिरीयोपनिषद्- २/१/१<br>
वेदन्तसारः<br>
छान्दग्योपनिषद्- ६/२/९<br>
छान्दग्योपनिषद्- ६/२/१<br>
छान्दग्योपनिषद्<br>
बृहदारण्यकोपनिषद्<br>
तैतिरीयोपनिषद्- २/१<br>
श्वेताश्वतरोपनिषद्

बृहदारण्यकोपनिषद्
श्रीमद्भगवींता
छान्दोग्योपनिषद्
छान्दोग्योपनिषद्

सन्दर्भाः -

१. षड्दर्शनसूत्रसंग्रहः - जे.एल.गुप्ता,चौखम्बासंस्कृतप्रतिष्ठान,दिल्ली -२०१२
२. भारतीयदर्शनम् - शशिप्रभाकुमार,विद्यानिधिप्रकाशन,दिल्ली - १९९९
३. सर्वदर्शनसंग्रहः - माधवाचार्यः - डा@. उमाशङ्करऋषि - चौखम्बाविद्याभवन - २००८
४. ब्रह्मसूत्रशाङ्करभाष्यम्- सत्यानन्दसरस्वती- चौखम्बा सुरभारती प्रकाशन, -२००४
५. वेदान्तसारः - प्रे. राममूर्त्तिशर्मा - ईर्ष्टन बुक् लिङ्करर्स – १९९९
६. बृहदारण्यकोपनिषद् - गीताप्रेस गोरखपुर – २००६
७. छान्दोग्योपनिषद् - गीताप्रेस गोरखपुर - २००६
८. तैतिरीयोपनिषद् - गीताप्रेस गोरखपुर - २००६

## सांख्यदर्शनेपुरुषतत्त्वम्*

प्राणमात्रस्य स्वाभावीकिसुखेच्छां तथा सर्वथा दुःखनिवृत्ति प्रचेष्टां च दृष्ट्वा परमकारूरणको कपिलमुनि चतुर्व्युहात्मकं सांख्यशास्त्रमिदं प्रणीतवान्। तद्यथा भागवते-

**कपिलस्त्रावसंख्याता भगवानत्ममायया।**
**जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥**[1]

दर्शनस्यास्य प्रमुखोद्देश्यं भवति दुःखस्य आत्यन्तिकं ऐकान्तिकं च निवृत्तिः परमपुरुषार्थं च प्राप्तिः। एतदर्थ शास्त्रारम्भे प्रतिज्ञाक्रियते कपिलमुनिना यत्-

**अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः॥**[2]

*डॉ. विकासिनी गुमानसिंह;सांख्ययोगविभाग;संविदा अध्यापिका,श्रीसदाशिवपरिसरः

[1]भागवतम् - ३.२५.१
[2]सा.द.- १.१

एतदेव लक्ष्यं पुरयितुं हेयं-हेयहेतु-हान-हानोपायेति भेदेन चत्वारो व्युहाः विचारिताः सन्ति। तत्र हेयं दुःखं हेयहेतु अविद्या हानं-मोक्षः। हानोपायः विवेकज्ञानम् इति।

सांख्योक्त पञ्चविंशति तत्वानं विवेकात् नाम विशेषभेदज्ञानाद् एव दुःखात् सार्वकालिकी निवृत्तिः प्राप्यते। तद्यथा कारिकायां-

**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज विज्ञानात्॥**[1]

किञ्च-

**ज्ञानान्मुक्तिः॥**[2]

**विवेकख्यातिरविप्लवा हानोपायः॥**[3]

**सत्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठानृत्वं सर्वज्ञातृत्वं च॥**[4]

**'तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्॥**[5]

साख्यं परम्परायामिदं प्रकृतिपुरुषविवेकख्यातिः सत्वपुरुषान्यताख्यातीतिः वेति ज्ञायते। सम् उपसर्ग ख्या धातोः सांख्यं शब्दोऽयं निष्पद्यते। यस्य अर्थं भवति जड़चेतनयोः भेदज्ञाननिरूपणात्मकं शास्त्रम् इति। शास्त्रेऽस्मिन् तत्वज्ञानमेव मोक्षस्य विकल्परहितोपायरूपेण विचारितं वर्त्तते। तद्यथा-

**अब्रवीत् परमं मोक्षं यतः सांख्यं विधीयते॥**[6]

प्रकृतिं गृहित्वा चतुर्विंशतितत्वानां विवेचनादर्शनमिदं सांख्यदर्शनमीत्यभीधीयते। तद्यथा महाभारते-

**संख्याप्रकुर्वते चैव प्रकृतिं च प्रचक्षते।**

**तत्वानि च चर्तुविंशत् तेन सांख्याः प्रकीर्तिताः।**

अपि च दोषगुणपूर्वकं तत्वानां सम्यग् विवेचनात्रमहर्षिकपिलेन कृतम्। यथा उच्यते-

**दोषाणां च गुणानां च प्रमाणं प्रविभागतः।**

**कश्चिदर्थमभिप्रेत्य सा संख्येत्पुपधार्यताम्॥**

अस्मात् ज्ञायते यत् जडचेतनयोः विवेचनात्मको विचारः भवति अस्य दर्शनस्य मुख्यप्रतिपाद्यविषयोऽस्ति। शास्त्रेस्मिन् पुरुषपदं सर्वत्र चेतनस्य द्योतकः प्रतीकश्चास्ति। अनुभूयमानं त्रिगुणात्मकं च मूलतत्वं सर्वत्र प्रधानरूपेण विचार्यते शास्त्रेऽस्मिन्।

सांख्योक्तपुरुषः (आत्मा) नित्यशुद्धमुक्तस्वरूपः अस्ति। यथा सांख्यसूत्रे प्राप्यते-

**न नित्यशुद्धमुक्तस्वभावस्यतद्योगस्तहोगादृते॥**[7]

विकारराहित्यात् अपरिणामीत्वाश्च पुरुषोयं शुद्धेति उच्यते। यद्यपि बुद्धेप्रतिसंवेदी पुरुषः आत्मानं सुखिदुःखि आदिकमनुभूयते, तथा च रागद्वेषकामविचिकित्सया व्याकुलितः क्षुधातृष्णाया च पिडीतः प्रतीयते तथापि वास्तविकरूपेण सः एतेषु र्निलिप्तः भवति। यथा भागवते उच्यते कपिलमुनिना-

**प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः।**

**अविकारादकर्तुत्वानिर्गुणत्वा ज्जलार्कवत्॥**[8]

किञ्च-

**सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे संघाताः॥**[9]

किञ्च –

**जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः॥**[10]

अतः शुद्धस्वरूपोयं पुरुषेति सिद्ध्यति। अयंचात्माबुद्धोस्वरूपोऽपि अस्ति। बुद्ध इति शब्दस्य अर्थ भवति चेतनज्ञानस्वरूपञ्चेति। नित्यत्वात् बुद्धेति उच्यते। किञ्चायमात्मामुक्तोस्वभावोऽस्ति। मुक्तशब्दः भवति बन्धरहितः कस्मात् दुःखात्।

वैशेषिकाः उच्यन्ते यत् प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगजज्ञानाख्यः प्रकाशो जायते इति। तन्न, जडस्याप्रकाशस्य लोष्ट्रादेः प्रकाशोत्पत्यदर्शनेन तदयोगात् अतः सूर्यादिवत् प्रकाशस्वरूपः एव पुरुषः इत्यर्थः।

तथा च स्मृतिः-

**यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते।**

**तद्वदैक्यं न सम्भवः प्रपञ्चपरमात्मनोः॥**

**यथा दीपः प्रकाशात्मा ह्रस्व वा यदि वा महान्।**

**ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुसु॥**[11]

---

[1]सा.का.-२

[2]सा.सू.- ३.२३

[3]सा.सू.-२.२७

[4]पा.यो.सू.-३.४९

[5]पा.यो.सू.-३.५०

[6]महाभा.- १२.२२०.२१

[7]सा.सू.-१.९

[8]भा-३.२७.१

[9]वाचस्पतिमिश्रः कारिका. १९

[10]सा.सू.- ६१

[11]सा.प्र. भा - १.१४५

ज्ञान-प्रकाश-चैतन्यादिकं पुरुषास्य धर्माः न सन्ति। अपि तु सः स्वरुपतः प्रकाशात्मज्ञानात्मक चैतन्यात्मकश्चेति। निर्गुणत्वाद्विति-

**निर्गुणत्वान्नचिद्धर्मा॥**[1]

प्रकृतिपुरुषयोः अनादिसम्वन्धत्वात् बुद्धेः सुखदुःखादिकं पुरुषे प्रतिविम्बितं भवति। तान् सर्वान् बुद्धिधर्मादिन् अविवेकात् पुरुषः स्वात्मनि आरोपयति मात्रम्। एतत् पुरुषस्य अभिमानमात्रं न तु उपरागः। यथा जपापुष्पसान्निध्यात् स्फटिकं रक्तायते पुनः तस्य अपसारेण स्फटिको स्व स्वरूपं प्राप्नोति तथैव अविवेकी पुरुषः आत्मानं शरीरं मत्वा शरीरस्य धर्मान् स्वात्मनि आरोपयति। आगते विवेके पुनः स्वस्वरुपे अवस्थानं करोति अतः अवगम्यते यत् पुरुषस्य बन्धादिकं औपाधिकमिति न तु वास्तवं चेति- तद्यथा-

**जपास्फटिकयोरिव नोपरागः किं त्वभिमानः॥**[2]

तथैव महर्षि पतञ्जलिना उक्तं योगसूत्रे यत पुरुषः द्रष्टाचेतनः नित्यसुद्धोसर्वधर्मविवर्जितोऽपि बृद्धिवृतौ प्रतिफलितः भ्रमवशतः बुद्धेः धर्मान् स्वात्मन्यारोपयतीति।तद्यथा-

**द्रष्टादृशिमात्रः शुद्धोऽपि प्रत्यानुपश्यः॥**[3]

दृशिमात्र इति दृकशक्तिरेव विशेषेणापरामृष्टेत्यर्थः। स पुरुषः बुद्धेः प्रतिसंवदी,स बुद्धेर्न सरुपो नात्यन्तं विरुप इति।

ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिः। तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति। सदाज्ञातविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयति। नहिबुद्धिश्च नाम पुरुषविषयश्च स्यात् गृहीताऽगृहीता चेति सिद्धं पुरुषस्य सदाज्ञातविषयत्वं ततश्चापरिणामित्वं इति। किञ्च परार्थाबुद्धिः संहतकारित्वात् स्वार्थः पुरुष इति। तथा सर्वार्थाध्यावसायकत्वात् त्रिगुणाबुद्धिः त्रिगुणत्वादचेतनेति। गुणानां तु द्रष्टा पुरुष इति। ततो न सरुपः नान्यन्तविरूपो, शुद्धोऽप्यसौ प्रत्ययानु पश्यः यतः प्रत्ययं वोधमनुपश्यति।

**तमनुपश्यन्नतदाऽत्माऽपि तदात्मक इव प्रत्यवभाषते।**[4]

**अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद् वृत्तिमनुपतति। अस्याश्चप्राप्तचैतन्यो ग्रहरूपया बुद्धिवृतेरनुकारमात्र तया बुद्धिवृत्यविशिष्टा हि**[5]ज्ञानवृत्तिरित्याख्यायते। तावेतौ भोगापवर्गौ बुद्धिवृत्तौ बुद्धौ एव कथं पुरुषेव्यदिश्यते इति उच्यते यथा विजयो पराजयोवा योद्धुसूवर्तमानः स्वामिनि व्यपदिश्यते एवं बन्धमोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्यते। तर्हि तत्फलस्य भोक्तेति। बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बद्धः तदर्थावसयो मोक्ष इति।एतेन ग्रहणधारणोहापहतत्त्वज्ञानाभि- निवेशा बुद्धौ वर्तमानाः पुरुषेऽध्यारोपितसद्भावाः, सहि तत्फलस्य भोक्तेति-

**विविक्त दृकपरिणतौ बुद्धौ भोगऽस्या कथ्यते।**
**प्रति विम्बादयः श्वच्छे यथा चन्द्रमसोऽम्मसि॥**[6]

अत्र व्योमशिवः- विविक्तदृग् विषयाकारपरिणतेन्द्रियाकारयस्याः सा तथोक्ता तस्यां बुद्धौ भोगः सत्यामात्मनो भोगः कथ्यते। प्रतिविम्बोदयः न वास्तवः, यथाहि यन्द्रमसः प्रतिबिम्वनमम्मसि। एवं विशिष्टपरिणामोपचितायां बुद्धावात्म न इति वास्तवे हि भोगे पुरुषस्य पूर्वस्वरूपनिवृत्तौ स्वरुपान्तरापतिविकारः भविष्यति। तत्र **अचेतनत्वादनेकदूषणमिति॥**[7]

पुरुषस्यास्तित्वविषये यद्यपि शास्त्रान्तरेषु विप्रतिपतिः न दृश्यते तथाऽपि कदाचित् केषांचित् शङ्कादि भवति तर्हि तन्निवारयितुं सांखचार्य ईर्श्वरकृष्णेन केचन युक्तयः उपस्थापितं येन तन्निवारणं भवति पुरुषस्यास्तित्वञ्च सुष्टु प्रतिपादितमपि भवति तद्यथा-

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥**[8]

संधातादयः सर्वथा परार्थमेव भवन्ति। यथा रथ-गृहपर्यङ्कादि अस्माकं शरीरं भवति विभिन्नानां तथ्यानां संहतरूपम्। यस्य उद्येश्यं शरीरोयं प्रचलति सः पुरुषः। अर्थात् प्रकृतिमार-भ्यमहाभूतपर्यन्तं चतुर्विंशति तत्वानि पुरुषार्थमेव प्रवर्तन्ते भोगापवर्गरूपलक्षं साधयितुम्। यतोऽहि संहतादयः सुखदुःखमोहात्मकतया अव्यक्तादयः सर्व संघाताः।(सा.का- वाचस्पतिमिश्रः) त्रिगुणात्मकत्वं अविवेकित्वं अचेतनत्वं च धर्मादयः संहतेसु भवन्ति एव। तद्यथा- **त्रिगुणत्वादयं हि धर्माः सहनत्वेन व्याप्ताः॥**[9]

अपि चोक्तं षष्टितन्त्रे- **पुरुषाधिष्ठित प्रधानं प्रवर्तते। इति माठरः।**[10]

भोग्यसंहतादयः भोक्तापुरुषः, बुद्ध्यादयेषु दृश्यत्वं विद्यते पुरुषे द्रष्ट्त्वं विद्यते यतोऽहि द्रष्टाविना दृश्यस्य किं प्रयोजनम्। अतः दृश्यातिरिक्तोऽपि द्रष्टा अस्ति इति सिद्धयति। सः द्रष्टा पुरुषः। जड़तत्वानि दुःखस्वरुपाः सन्ति। स्वभावस्य अत्यन्त उच्छेदः असम्भवः अतः कैवल्यार्थं मुक्त्यर्थं वा कोऽपि अपरः चेतनः इच्छति प्रवर्तते वा सः पुरुषः अस्ति। एव मेव सांख्यसूत्रेषु अपि कपिलमुनिना पञ्चहेतुभिः पुरुषस्य देहादिभ्य भिन्नत्वं प्रतिपादितं वर्तते तद्यथा- **संहतपरार्थत्वात्। त्रिगुणादिविपर्ययात्। अधिष्ठानाश्चेति भोक्तृभावात्। कैवल्यार्थं प्रवृत्तेश्च।**[11]

[1]सा.सू.- ११४६
[2]सां सू- ६. २८
[3]यो. द.- २.२०
[4]यो.सू.- भा.२.२०
[5]पञ्चशिखः योगभाष्यम्(यो.भा.-२.२०)
[6]योगभाष्यम् २.१८
[7]प्रशस्तपादभाष्यम्-पृ.५२
[8]सा. का - १७
[9]तत्त्वकौमुदी- १७
[10]सा.का.- १७
[11]सांख्यसूत्रम्१५

योगदर्शनेऽपि **तदसंख्यवासनाभिश्चित्रितमपि परार्थं संहत्यकारित्वात्**[1]

यथा अत्रैव व्यासदेवः उच्यते- तदेच्चितमसंख्यभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्वकारीत्वाद् गृहादिवत्। संहत्यकारिणां चित्तेन न स्वार्थेन भवितव्यं न सुखचितं सुखार्थं न ज्ञानं ज्ञानार्थम्। उभयमप्यतत् परार्थम्।यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो, न परः सामान्यमात्रं यत्तु किञ्चित् परं सामान्यमात्रं स्वरुपेणोदाहरेद् वैनाशिकस्तत्सर्वं सहतकारित्वात् परार्थमेवस्यात्। यस्त्वसौ परो विशेषः स न संहतकारी पुरुषः इति - **देहादिव्यतिरिक्तोसौ वैचित्रात्**।[2]

किञ्च निर्गुणोयमात्मा पुरुषस्य इच्छादि तावत् अनित्या जन्यता प्रत्यक्षात्। जन्यगुणाङ्गीकारे परिणामित्वायतिः। इच्छादिकन्तु अन्वयव्यंतिरिकाभ्यां मनस्येव सिद्ध्यति। अतः आत्मानिर्गुणः तथा च योगवाशिष्ठकारः-

**असम्भवति सर्वत्र दिग्भूम्याकाशरूपिणि।**
**प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवत्॥**

आत्मनः निर्गुणत्वं श्रुतिसिद्धत्वात्- **साक्षीचेता केवलो निर्गुणश्च॥**[3]

किञ्चायमात्म साक्षी अस्ति। सुषुप्त्यादि अवस्थादयः बुद्धिनिष्टत्वात् पुरुषस्य साक्षित्वं सिद्ध्यति।
जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः - **तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः।**[4]

अयमात्मा अनेकाः इति सांख्याः प्रतिपादयन्ति।

जन्मादिव्यवस्थातः पुरुषवहुत्वम्॥[5] पुण्यवान् स्वर्गजायते, पापीनरके, अज्ञोवध्यते, ज्ञानि मुच्यते, इत्यादेः श्रुतिस्मृतिव्यवस्थायाः विभागस्यान्यथानुपपत्यापुरुषावहव इति सिद्धति। जन्ममरणेचात्र नोत्पत्तिविनाशौ, पुरुषनिष्ठत्वाभावात्। कित्वपूर्वदेहेन्द्रियादिसंधातविशेषेण संयोगश्च वियोगश्च भोग नियामकत्वेन गृह्यते।-

**क्षेत्रज्ञाधिष्ठितं क्षेत्रं क्षेत्रज्ञार्थं प्रचक्षते।**
**बहुत्वाश्च शरीराणां शरीरो बहुधास्मृतः**
**अव्युहासङ्कराच्चैव ज्योतिवच्च व्यवस्थितः॥**
**यस्मात् प्रतिशरीरं हि सुखदुःखोपलब्धिता।**
**तस्मात् पुरुषनानात्वविज्ञेयं तु विजानता॥**

जन्मादिव्यवस्थायां च श्रुतिः-

**अजामेकां लोहितशुक्तकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्यको जुषमाणोऽनुशेते जहात्येनां मुक्तभोगामजोऽन्यः**[6]

किञ्च सांख्यकारिकायां ईश्वरकृष्णेनापि उक्तं यथा- **जन्ममरणकरणानां प्रतिनियमादयुगपत् प्रवर्तते॥**[7]

अपि च यथा व्यक्ताद्विसदृशं प्रधानं तथा प्रधानमधर्मापुरूषः। तथाहि अहेतुमान् नित्यो व्यापी निष्क्रियः एकोऽनाश्रितः, अलिङ्गो निरवयवः स्वतन्त्र इति माठरः॥[8] यद्यपि सांख्यदर्शने पुरुषप्रमुखतत्त्वरूपेण भूरीविचारितमस्ति तथापि संक्षेपेण अत्र मया तत्स्वरूपं निरूपितमिति।

## अद्वैतभावनायां ब्रह्मस्वरूपविमर्शः*

ब्रह्मविषयिकी चर्च्चा मनसि यदा समायाति तदा बहुभिः प्रश्नैः व्यवहारः लोके प्रचलति। यथा हि किमिदं ब्रह्म?, किमस्य स्वरूपं?, किमस्य भेदः विद्यते न वा? वस्तुतः प्रश्नानामेषां समाधानात्पूर्वमस्माभिः ब्रह्मविषयिकी सामान्या चर्च्चावश्यं विधेया।

जगदिदं बहुभिः तत्त्वैः विधात्रा संरचितमेव। कतिषु मनोस्माकं प्रवेष्टुं शक्नोति कतिषु च मनसः तथा सामर्थ्यं नास्तीति प्रतीयते। तत्र ब्रह्म तथाभूतमेव, यस्मिन् योगिनामपि प्रगाढचिन्तनशीला बुद्धिर्न प्रसरति कदाचन। तथ्यमिदं न केवलं अजयः वदति अपि चेदं श्रूतिः डिण्डिमनादेन समुद्धोषयन् प्रदर्शयति। यथा-

**यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह।**
**आनन्दं ब्रह्मणो विद्वान्, न विभेति कुतश्चनेति॥**[1]

---

[1]पा.यो.सू-४.२५
[2]सा.सू.-६.२
[3]श्वेता.-३-३१-५४
[4]भा.-११.१३.१२७
[5]१.१५९
[6]श्वेता. - १.१५०
[7]सा.का-११
[8]सां.सा.-११

***डॉ.अजयकुमारपाण्डे, सहायकाचार्यः, सर्वदर्शनविभागः, श्रीसदाशिवपरिसरः, पुरी**

तथापि ब्रह्मचर्च्चायां बुद्धिर्मे परिशुद्धा भवेदिति आशास्य अस्यां प्रवर्ते। इदानीं किमिदं ब्रह्मेति परिप्रश्ने नानामतानि, तथ्यानि च विदुषां पुरतः समायान्ति। औपनिषदाः विद्वांसः परिकथयन्ति ब्रह्म नाम वेदः। यथा- **तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते।**[2]

विविधकोशग्रन्थानामनुशीलनेन तत्र प्रतीयते परमात्मबोधकं पदमिदं राजते सर्वत्र। व्याकरणदृष्ट्या व्युत्पत्त्यर्थं परिपश्यामश्चेत् तत्र बृंहति वर्धते निरतिशयमहत्त्वलक्षणवृद्धिमदिति विज्ञायते। अत्र ब्रह्मशब्दस्य प्रकृतिः 'बृंह्' धातुः, यस्यार्थः वर्धनपरकः, प्रत्ययश्च भवति 'मनिन्'। अस्मिन् धातोः ऋकारस्य र कारः अथापि प्रत्ययस्य न कारस्य अ कारः इत्यनेन ब्रह्मपदस्य निष्पत्तिः। इह योर्थः तमर्थमुरीकृत्य आचार्यः जगद्गुरुश्रीशङ्कराचार्यः कथयति- निरतिशयं भूमाख्यं बृहदत्वात् ब्रह्मेति विद्धि। सामान्यार्थोयमस्ति समग्रस्यास्य जगतः मूलं व्यापकञ्च तत्त्वं यत्तत् ब्रह्म। इदं बृहत्तमं तस्माद्धि ब्रह्म। एतद् ब्रह्मैव वैशेषिकाः नित्यं, साङ्ख्याः सनातनं ज्योतिरूपं, मीमांसकाः सर्वरूपं, वेदान्तिनः सर्वकारणं, योगिन अनन्तं, वैदिकाः सत्यस्वरूपं, पौराणिकाः स्वेच्छामयं भगवद्भक्ताश्च नित्यविग्रहमित्यामनन्ति।

**नित्यं वैशेषिकास्त्वन्यं वदन्ति च विचक्षणाः।**
**सांख्यो वदति तं देवं ज्योतिरूपं सनातनम्।**
**मीमांसा सर्वरूपञ्च वेदान्तः सर्वकारणम्।**
**पातञ्जलोप्यनन्तञ्च वेदाः सत्यस्वरूपकम्।।**
**स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम्।।**[3]

एवं हि शास्त्रेषु इतस्ततः तपः, सत्यं, तत्त्वं, ऋत्विग्विशेषः, विप्रः, हिरण्यगर्भादयः जीवाः इत्याद्याशयाः ब्रह्मणः परिस्फुटन्ति।किन्तूपनिषद्दृष्ट्या, तात्त्विकदृष्ट्या विद्वद्दृष्ट्या वा परिचिन्तनेन सर्वत्र परमात्मा, भगवान्, ईश्वरः वा वस्तुतः एकेन ब्रह्मशब्देनाभिधीयते। यथा हि भगवद्वेदव्यासवचने –

**वदन्ति तत्तत्त्वविदः तत्त्वं यज्ज्ञानमद्वयम्।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।।**[4]

ब्रह्मणः स्वरूपं किमिति ज्ञानात्पूर्वं स्वरूपं किमिति जानीयात्। तज्ज्ञानाय लक्षणस्य लक्षणं किमित्यवश्यं विज्ञातव्यम्। यतो हिविना लक्षणेन स्वरूपज्ञानं, विना स्वरूपज्ञानेन ब्रह्मण- स्वरूपज्ञानमसम्भवमेव। अतः लक्षणस्य लक्षण् किम्? इति प्रश्ने तत्रोच्यते –लक्ष्यते ज्ञायते अनेनेति लक्षणम्।उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः।असाधारणधर्म एव लक्षणम्। सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्ध आकारो लक्षणम्। लक्षणमिदं द्विविधम्- स्वरूपं तटस्थञ्च। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणं येन वा लक्ष्यवस्तुनः स्वरूपं ज्ञाप्यते तत्स्वरूपलक्षणम्। सहजार्थोस्यास्ति निजलक्षणमिति।यथा आकाशं विलम्। यथा मीमांसायां चोदनालक्षणार्थो धर्मः। इत्यत्र चोदनावाच्यविधिवाक्यमेव धर्मस्वरूपज्ञापकमस्ति, अर्थात् धर्मस्य स्वरूपं ज्ञापयति। तथैव ब्रह्मणः स्वरूपलक्षणमस्ति सच्चिदानन्दं ब्रह्म। अत्र श्रुतिरस्ति- **सत्यं ज्ञानमनन्तं ब्रह्म।।**[5] **निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम्।।**[6]

तटस्थलक्षणन्तु तद्भिन्नत्वे सति तद्बोधकत्वम्। उपलक्षितपदार्थभिन्नत्वे सति लक्ष्यवस्तुनः बोधः येन सम्भवति तदेव तल्लक्षणम्। यथा काकवत् देवदत्तगृहम्। अत्रोदासीनोपि काक इदं देवदत्तगृहमिति बोधयति। यथा वा पृथिव्याः गन्धो लक्षणम्। सः गन्धो हि तटस्थलक्षणमपि पृथिवीं परस्मात् भिन्नतया अनुमापयति। तथा हि पृथिवी जलादिभ्य भिद्यते गन्धवत्त्वात् यन्नैवं तन्नैवं यथा जलम्। अद्वैतवेदान्तमते तु जगज्जन्मादिकारणं ब्रह्मेति ब्रह्मणः तटस्थलक्षणम्। ब्रह्मणः तटस्थलक्षणञ्च जगज्जन्मस्थितिप्रलयानां प्रत्येकमुपादानप्रत्यक्ष-चिकीर्षाकृतिमत्त्वम्। अत्र श्रुतिः प्रमाणम्-
**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्मेति।।**[7]

तदुक्तं ब्रह्मसूत्रकारैः- **जन्माद्यस्य यतः।।**[8]

एवं हि तटस्थेनापि ब्रह्मावबोध्यते। वस्तुतः लक्षणेन कस्यापि तत्त्वस्य ज्ञानं सुकरं भवति। एदद्धि ब्रह्मणः स्वरूपम्।यत्तु सहजावगमनाय किञ्चिद्विस्तरेण चर्च्यते। अद्वैतदर्शनदृष्ट्या परमार्थदृष्ट्या च केवलं ब्रह्म हि परमतत्त्वम्। ब्रह्मातिरीच्य नेहास्ति संसारेकिञ्चन। ब्रह्म स्वयं प्रकाशरूपं, कूटस्थं, नित्यं, आकाशवत्सर्वव्यापकम्, समस्तक्रियारहितं, नित्यतृप्तं, निरवयवं, स्वयंज्योतिस्वभावञ्चैव। यथा हि शाङ्करभाष्ये-**इदन्तु पारमार्थिकं कूटस्थं नित्यं व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यवृत्तं निरवयवं स्वयंज्योतिस्वभावम्।।**

पुनरपि ब्रह्मणः स्वरूपमिति कथनेन निजभावरूपमित्यप्यवबोध्यते। भावरूपमिति कथनेन विशेषणत्वेन ब्रह्मणः स्वरूपज्ञानम्। तत्किमिति जिज्ञासायां प्रथमतः विशेषणं विज्ञातव्यम्। कस्यापि वस्तुनः स्पष्टज्ञानाय तदितरव्यावर्तकगुणो हि विशेषणम्। यथा नीलं कमलम्। अत्र नीलम् इतरकमलपुष्पेभ्यः व्यावर्तयति। अतः नीलं विशेषणमेव। तद्विशेषणं विशेषतः द्विविधमेव राजते। एकं भावरूपंयत्तु अस्त्यर्थबोधकम्, इतरञ्चाभावरूपम् तत्तु निषेधार्थबोधकम्। एतत्स्पष्टाय ब्रह्मणः भावाभावविशेषणमवश्यमवबोधव्यम्। तर्हीदानीं ब्रह्मणः भावरूपविशेषणम् अभावरूपविशेषणञ्च किम्? इति समुत्थितजिज्ञासायां क्रमशः प्रोच्यते-

अस्मज्ज्ञानं वयमेव जानीमः, अनेन अस्मत्प्रवृत्तिः विशेषेण सम्भवति। सृष्टिकर्तुः ब्रह्मणोपि ज्ञानमस्ति, यतो हि ब्रह्म जगतः निमित्तकारणम्। एवं जीवब्रह्मणोः ज्ञानभवनात् उभयोः समाना जातिः। अथापि तयोः महान् भेदोपि विद्यते। यथा हि – जीवः गृहं निर्माति, ब्रह्म जगन्निर्माति। अतः जीवः

[1]तै.उ. १२.४.१
[2]मु.१.१.९
[3]ब्रह्मवै. पु. अ.- १०८
[4]भा. १.२.११
[5]तैति. उ. – २.१.१
[6]श्वे. उ. – ६.१९
[7]तैत्तिरीयोपनिषत् ३.१.१
[8]ब्र. सू. -१.१.२
[9]शां भा – १.४

न्युनशक्तिसम्पन्नः, तदपि तत्कृपावशात् किन्तु तत्सर्वशक्तिसम्पन्नम्। एवं जीवः अल्पमेकदेशीयञ्च जानाति, तदपि तदनुकम्पया तस्मादयमल्पज्ञः किन्तु तत्सर्वं जानाति, तस्मात्सर्वज्ञम्। अस्माकं सङ्कल्पः, कामना, ईच्छा वा कदाचित्सिध्यति कदाचिच्च न सिध्यति किन्तु तस्य सर्वं सिध्यति, किमपि कथमपि व्यर्थमपार्थमसारं वा न भवति, अतः तद्ब्रह्म सत्यकामं सत्यसङ्कल्पं वास्ति। एवं ब्रह्मणः सर्वशक्तिमत्त्वं सर्वज्ञत्वं, सत्यकामत्वं, सत्यसङ्कल्पत्वं यत् विराजते तत् ब्रह्मणः भावरूपं विशेषणम्। ब्रह्मण एषां भावरूपाणां विशेषणानां न काचित्परिसीमा विद्यते।

नास्तीति प्रतीतिविषयकं विशेषणम् अभावरूपविशेषणम्। ब्रह्मणि यानि विशेषणानि न सन्ति, नापि सम्भवन्ति कदापि तान्येव ब्रह्मणः अभावरूपविशेषणानि। जीवस्य पापपुण्ययोः बन्धनमस्ति किन्तु ब्रह्म समस्तपापपुण्यरहितमेव। जीवस्य जरा मृत्युश्च विद्यते परमिह ब्रह्मणि न तत्प्रसज्यते। अस्मदादीनां चराचरजगत्प्राणभृतां क्षुत्तृषादयः वर्तन्ते परन्तु ब्रह्मण्येते न परिकल्प्यन्ते कदाचन। तस्माद्धि ब्रह्म सर्वदा पापपुण्यविरहितं, अजरम्, अमृत्यु, अशोकं, विजिघत्सम्, अपिपासम्। यथोक्तं श्रुत्याम् – **अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो अपिपासः॥**[1]

एवं हि विविधदृष्ट्या ब्रह्मणः स्वरूपं परिचिन्तयितुं शक्यते किन्तु तस्य पूर्णतः परिचिन्तनं प्रायः असम्भवम्। वस्तुतः संसारे यद्यद्दृश्यते, कल्प्यते, विलक्षणं किमपि समनुभूयते च तद् निरपेक्षं ब्रह्मैवास्ति। आदिगुरूशङ्करचार्येण ब्रह्मविषयकं तथ्यं प्राय व्यकथि- **अनेका हि विलक्षणा चेतनाचेतनरूपाः सामान्यविशेषाः। तेषां पारम्पर्यगत्या एकस्मिन् महासामान्येन्तर्भावः॥**[2]ब्रह्मास्ति सर्वव्यापिनी सत्ता। अस्याः किमपि सगुणं सरूपञ्च पूर्णतः वर्णयितुं न शक्यते कदाचन। अतः श्रुत्यां ब्रह्मविषये नेति नेति इति कथ्यते। कथनस्यास्येदं तात्पर्यं यत् – ब्रह्म समस्तविचाराणां परिधेः पूर्णतः परमेव, यतः ब्रह्म सर्वदा अवर्णनीयम्। तथापि श्रीशङ्करः नेति नेति इत्यस्याशयं स्पष्टीकृत्य प्रवदति ब्रह्मविषये कस्यापि विधेयस्य प्रयोगं कर्तुं न शक्यते कदाचित्, तथापि यदि प्रयोगकरणाय यतामहे तर्हि असीममपरिमितञ्च ब्रह्म परिमितं सीमितञ्च भविष्यति। परमार्थदृष्ट्या तस्मिन् न कश्चिदपि गुणः विद्यते, यतः ब्रह्मैका अपरिमिता सत्ता। तस्मिन् नात्र कश्चिद्गुणः न वा तत्र कश्चिद्गुणः विद्यते। इत्थं हि सर्वगुणनिषेधत्वादेकमन्ते यदवशिष्यते तदेव ब्रह्म। तदेव सर्वत्र श्रुतिषु, पुराणेषु च तद्विदः नेति नेतीत्वेन जेगीयन्ते। प्रथमोक्तोत्थितेषु प्रश्नेषु अन्तिम आसीत् ब्रह्मणः भेदो विद्यते न वेत्यस्योत्तरं नैवेति सिद्धमेव। यतो हि श्रुतिरपि निगदति एकमेव ब्रह्म बहुधा भूत्वा सृष्टिं संरचयामास। **एकोहं** बहुस्याम: इति छान्दोग्यश्रुत्यनुसारं एकमेव ब्रह्म सृष्टिसंरचनाय बहुधा जायते।यथा-

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्य स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहु॥**[3]
**एको देवो बहुधा निविष्ट अजायमानो बहुधा विजायते॥**[4]
**तद् इदम् आह अजायमानो बहुधा विजायते॥**[5]
**अजायमानो बहुधा विजायते॥**[6]
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति॥**[7]
**रूपं रूपं प्रतिरूपो बभूवतदस्य रूपं प्रतिचक्षणाय।**
**इन्द्रो मायाभिः पुरुरूप ईयतेयुक्ता ह्यस्य हरयः शता दशेति॥**[8]

अयं परमात्मा आत्मनः रूपं लोकस्य प्रदर्शनाय रूपं रूपं प्रतिरूपो अर्थात् बहुरूपेण दृश्यते। सर्वशक्तःपरमात्मा आत्मीयैः'माया' रूपैः नानोपाधिभिः नानारूपेणावभासते। अस्य उपाधिरूपाणिइन्द्रियाणि शताधिकानि दृश्यन्ते॥अत्र इन्द्रो नाम सर्वज्ञः परमात्मा परमतत्त्वं वा॥ अयमेव परं ब्रह्म। अयम् अनेकोपाधिभिः नानारूपेणअवभासते। वस्तुतः ब्रह्म एकमेव, अविद्याकल्पिताः उपाधयस्तु अनेके। एवं हि अद्वितीयं ब्रह्म एकं सत् देवतारूपेण, मनुष्यरूपेण, लोकपञ्चभूतरूपेण, कृमिकीटाद्यनेकचराचरजीवरूपेणा चापि दृश्यते।

## माहेश्वरसूत्रविमर्शः*

व्याकरणे साधुशब्दानां पुण्यजनकत्वमित्यभिधीयते। परन्तु शब्दानामानन्त्यात्तेषां प्रतिपदपाठेन ज्ञानमसम्भवं वर्तते। तस्मात्सामान्यविशेषलक्षणेन शब्दाः बोधव्याः इति कारणात्साधुशब्देषु कति वर्णा इष्टाः इति, प्रत्याहारे वर्णक्रमं कथं वर्तते इति बोधयितुं प्रत्याहारद्वारा लाघवेन सूत्रं निर्मातुञ्च भगवता पाणिनिना महेश्वरोपदिष्टोऽक्षरसमाम्नायस्स्वीकृतः। ते च अइउण्, ऋलृक्, एओङ् .....इति। एतेषां सूत्राणां माहेश्वरसूत्रत्वं बोधयितुं शिक्षायामुच्यते–

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तंतस्मै पाणिनये नमः**[1]। इति

अन्यच्च वर्तते नन्दिकेश्वरकृतकाशिकायाम्-

---

[1]छा.- ८.१.५
[2]बृ. उ.,शां. भा. – २.४.९
[3]ऋग्वेद-१.१६४.४६
[4]मुद्गलोपनिषद्- १
[5]यजुर्वेद ३१.१९
[6]घृ० उ० २, प, १९
[7]बृहदारण्यकोपनिषत् २.५.१९
[8]बृहदारण्यकोपनिषत् २.५.१९

*लेखकः- डॉ. पशुपतिनाथमिश्रः
बघौला, पलवलम्, हरियाणा, 121102
Ph no- 9466869173

**नृत्तावसाने नटराजराज ननाद ढक्कां नव पञ्चवारम्।**
**उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्**[२]॥ इति

शास्त्रस्यास्य साधुबोधकत्वाद् "अकारः साधुः, इकारः साधुः" इत्यादिक्रमेण 'अइउण्' इत्यादीनां साधुबोधकत्वमाध्यमेन क्रमबोधकत्वादेतेषां सूत्राणां विधिसूत्रत्वं सूचितम्।

**माहेश्वरसूत्राणां श्रुतित्वम्**

महेश्वराल्लब्धान्येतानि सूत्राणि। अत एव माहेश्वरसूत्राणीति तेषां व्यवहारः। यतस्सूत्राणीमानि महेश्वरादागतान्यतस्तेषां श्रुतिरूपत्वेन चतुर्दशसूत्र्याः अक्षरसमाम्नायेति व्यवहारः। अत एव भाष्यकारैः प्रोच्यते- "सोऽयमक्षरसमाम्नायः पुष्पितः फलितः चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः"[३] इति।

भर्तृहरिणोक्तम् – "अस्य अक्षरसमाम्नायस्य न कश्चित् आधुनिकः कर्ताऽस्ति, एवमेव वेदपारम्पर्येण स्मर्यमाणः"[४] इति। अनेन चतुर्दशसूत्राणामनादित्वमपौरुषेयत्वञ्च सिद्धम्। अत्र कश्चन विशेषो वर्तते। एतेषु सूत्रेष्वन्त्यवर्णानर्थात् ण् क् ङ् च् ट् ण् म् ञ् ष् श् व् य् र् ल् इत्येतान्विहायान्ये वर्णाः परमेश्वरानुग्रहप्राप्ताः। अन्त्यवर्णाः परमेश्वरेण पाणिनये उपदिष्टाः। उक्तं नन्दिकेश्वरकृतकाशिकायाम्–

**अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।**
**धात्वर्थं समुपादिष्टं पाणिन्यादिष्टसिद्धये**[५]॥ **इति।**

**माहेश्वरसूत्रेषु कुतो नेति विभक्त्युत्पत्तिः–**

अइउण् इत्यादिषु सूत्रेषु प्रत्येकं वर्णः अर्थवान् भवति । "अर्थवन्तो वर्णाः" इति भाष्येऽपि उक्तम्। अर्थवत्त्वात् "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"(अ.१/२/४५) इति सूत्रेण प्रातिपदिकसञ्ज्ञा। ततश्च "ङ्याप्प्रातिपदिकात्"(अ. ४/१/१) इति सूत्रेण सर्वेभ्यो वर्णेभ्यः सुबुत्पत्तिः स्यादिति शङ्काऽऽगच्छति। तत्समाधानरूपेण लघुशब्देन्दुशेखरे अइउण् इत्यादौ वर्णेभ्यो विभक्त्यनुत्पत्तौ अनुकरणत्वेन, सौत्रत्वादिति हेतुद्वयं प्रदर्शितम्। अइउण् इत्यादिषु सूत्रेषु येऽकारादिवर्णाः वर्तन्ते, ते प्रयोगप्राप्ताकारादिवर्णानामनुकरणवर्णाः। अनुकरणेनानुकार्यस्य बोधो जायते। तद्बोधसंपादनार्थञ्चानुकार्यानुकरणयोः पक्षद्वयं स्वीक्रियते। एकोऽभेदपक्षः। अपरो भेदपक्षश्च । अभेदपक्षेऽनुकरणेनानुकार्यस्य बोधः सादृश्यज्ञानात् सम्भवति। अतस्तत्सम्पादनार्थं शक्तेर्वा लक्षणायाः वा आवश्यकता न भवति। अत्र "वृत्तिज्ञानाधीनोपस्थितप्रयोज्यार्थविषयकबोधजनकत्वमर्थवत्त्वस्य लक्षणं वर्त्ते" इति। एतस्यार्थवत्वस्यानुकरणेऽविद्यमानत्वात्प्रातिपदिकसंज्ञा नास्ति। प्रातिपदिकसंज्ञाभावादस्मिन्नभेदपक्षे विभक्त्युत्पत्तिर्न सम्भवति।

अनुकार्यानुकरणयोः भेदविवक्षायामनुकरणेनानुकार्यबोधनार्थमनुकरणेऽनुकार्यनिरूपितबोधज-नकत्वशक्तेरारोपः क्रियते। आरोपितशक्तिजन्योपस्थित्यानुकरणेऽनुकार्यस्य बोधस्सम्भवति। तथा च "शक्तिमत्वमर्थवत्वम्" इत्यर्थवत्त्वलक्षणस्या-नुकरणे सत्वात्प्रातिपदिकसंज्ञा स्यात्, ततश्च विभक्त्युत्पत्तिः कुतो न भवति इति। अस्मिन्पक्षे प्रत्येकस्मा-द्वर्णाद्विभक्त्युत्पत्तावपि न दोषः। अकारादिस्वरवर्णानाञ्चादि-गणपाठात्तेषां निपातसंज्ञा। तत्प्रयुक्ताव्ययसंज्ञायाम् "अव्ययादाप्सुपः" (अ.२/४/८२) इति सूत्रेण विभक्तेर्लुक् भवति। ननु हल्वर्णानां चादिगणपाठाभावात्तत्र हल्वर्णेषु विभक्त्युत्पत्तिः दुर्वारिति चेत्समाहितं मूले ग्रन्थकर्त्रा– अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः। चकारो हेत्वर्थः। अनुकरणत्वेनेत्यस्याभेदा-नुकरणत्वेनेत्यर्थः।

"अइउण्" इत्येषां सूत्राणां क्रमे शक्तिर्नास्ति किन्तु वर्णस्वरूपे वर्तते। तथापि लक्षणया क्रमबोधकत्वमस्ति। क्रमस्य न शाब्दज्ञानविषयत्वमपि तु मानसज्ञानविषयत्वमिति चन्द्रिकाकारोऽभिप्रैति। तथाहि- क्रमस्य वृत्त्युपस्थितत्वमेव प्रतीयते वृत्त्यर्थस्यैव प्रातिपदिकसञ्ज्ञायाः निमित्तत्वात्। अभेदविवक्षापक्षेऽनुकरणानां प्रातिपदिकत्वाभावस्सङ्गच्छते इति चन्द्रिकाकारस्स्वाशयमाविष्चकार[६]।

**माहेश्वरसूत्रेषु सन्धिः कुतो न-**

"अइउण्" इति सूत्रे "आद्गुणः"(अ.६/१/८६) इति सूत्रेणाकारेकारयोः स्थाने गुणे एकारः प्राप्नोति। ततश्च "एचोऽयवायावः"(अ. ६/१/७७) इति सूत्रेणायादेशः प्राप्नोति। इत्थं यथाप्राप्तं सन्धिकार्यं कथं न कृतमिति शङ्का उदेति ।

वर्णेषु संहिताया अविवक्षया न संहिताकार्यमिति शेखरकृता उक्तम्। तथा हि-

**संहितैकपदेनित्या नित्या धातूपसर्गयोः।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥**

"अइउण्" इत्यादिषु सन्धिः कुतो न भवतीति विचारप्रकरणे उपजीव्यविरोधात्सन्धिर्न भवतीति कैयटः आह। तन्मतमनूद्य निराचकार शेखरकारः। नैयायिकाभिमतेष्वलौकिकसन्निकर्षेषु सामान्यलक्षणाप्रत्यासत्तिः एका वर्तते। कैयटोक्तमुपजीव्यत्वं विकारानापन्नानामकारादीनां वा अथवाविकृताकविषयकशक्तिग्रहस्य वेत्यालोचनीयम्? सामान्यलक्षणप्रत्यासत्त्या घटत्वेन निखिलघटानां शक्तिग्रहविषयत्वं यथा तथाऽनया प्रत्यासत्त्या सर्वेषामपि शक्तिग्रहविषयत्वेन "अइउण्" इत्यादाविव मालेन्द्रः, उपेन्द्रः इत्यादावपि सन्धिर्न भवतीति। अविकृताकाराणामुपजीव्यत्वमित्याद्यः पक्षो न युक्तः। शक्तिग्रहस्योपजीव्यत्वमिति द्वितीयः पक्षस्तु पुनरच्पदस्यार्थान्तरे शक्त्यग्रहणे तद्विरोधाभावादिति ग्रन्थेन मूले निरस्तः। यद्यपि सामान्यलक्षणाप्रत्यासत्त्या सर्वासामकारादिव्यक्तीनां शक्तिग्रहविषयत्वेऽपि लौकिकोदाहरणेषु न दोषः। तथाहि– सामान्यलक्षणमनङ्गी-कृत्य यत्किञ्चिद्व्यक्तौ शक्तिग्रहो भवतु। यत्र व्यक्तौ शक्तिग्रहस्ततद्व्यक्तेरेवोपजीव्यत्वं न तु व्यक्त्यन्तरस्येति। वर्णसामाम्नाये तत्तद्व्यक्तिविषये सन्धिकार्याप्रवृत्तिः भवतु, अन्येषां शक्तिग्रहाविषयत्वेन तत्रोपेन्द्रादौ सन्धिकार्यं भवत्येवेति कल्पयितुं शक्यते। तथाप्यजादिसंज्ञाग्रहकाले "आद्गुणः" (अ.६/१/८६) इत्यादीनामनिष्पत्त्या तदप्रवृत्तावजादिपदार्थोपस्थितिकालेऽविकृत-रूपापन्नस्सन्निविषयो योऽकारादिस्तदुपजीव्यप्रवर्तमानस्य "आद्गुणः" इति वाक्यार्थबोधस्यैतादृशस्योप-जीव्यविघातकत्वे निर्विषयत्वप्रसङ्ग इति भवदुक्तकल्पना न युक्ता। अतः पक्षद्वयेऽप्यविकृ-तरूपाकारादीनां विषयविधया उपजीव्यत्वं विरुध्यमानं शास्त्रप्रामण्यात्सोढ-व्यमिति[७] विशेषो दर्शितः।

**वर्णसमाम्नाये स्वरसन्ध्यप्रवृत्तौ कैय्यटकौस्तुभमतविचारः-**

माहेश्वरसूत्रेषु स्वरसन्धिः कुतो न सम्भवत्यित्याशङ्क्य वर्णोपदेशकालेऽजादीनामनिष्पादादिति समाहितवान्कैय्यटः। तथाहि- उपजीव्यविरोधात् "अइउण्" इत्यादौ सन्धिर्न भवति। उपजीव्यविरोधस्तु प्रत्याहारबोधकेन "आदिरन्त्येन सहेता"(अ.१/१/७१) इति सूत्रेणाजादिप्रत्याहारबोधसमये, अजादिपदोपस्थित्यभावाद् "आद्गुणः" इत्यादीनामनिष्पत्त्या तेषां वाक्यार्थबोधो न जायते। यतोहि- वाक्यार्थज्ञानं प्रति पदार्थज्ञानोपस्थितिः कारणमिति। तथा चाच्पदार्थज्ञानाभावे तद्विशिष्टो वाक्यार्थबोधोऽपि न सम्भवति, ततश्च "आद्गुणः" इत्यादि सन्धिसूत्राणां प्रवृत्तिर्नैव सम्भवति। अत्र तत्प्रवृतावजादिपदार्थनिष्पत्त्यभावाद् "आद्गुणः" इत्यादीनामनिष्पत्तिः कारणम्। वर्णोपदेशकालेऽजा-दिपदार्थनिष्पत्तावजादिपदार्थोपस्थितेरभावो हेतुः। प्रत्याहारनिष्पत्तिकालेऽजादि-पदार्थस्याभाव इति कैय्यटस्याभिप्रायः। एतन्मतन्दूषितवान्कौस्तुभकारः। तथाहि- कौस्तुभे वर्णोपदेशे इत्सञ्ज्ञाप्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां यणादिनां सुध्युपास्येत्यादौ तटस्थे इव वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात्। अन्यथा "तुल्यास्यप्रयत्नं सवर्णम्"(अ.१/१/९) इत्यादौ सवर्णदीर्घो न स्यादिति समाधानं प्रदाय कौस्तुभकारः कैय्यटमतं प्रत्याचख्यौ। न च सन्धौ सन्देहः। व्याख्यानतो निर्णयसम्भवादिति व्याख्यानसन्दर्भे कैय्यटकौस्तुभमतं प्रदर्शितवान्मञ्जरीकारः। तथा हि- यत्तु निर्णयसंभवादित्यनेन शास्त्रप्रारम्भ एव सन्देहोत्पादकशब्दप्रयोगः स्वकौशलोन्नायकत्वादाचार्येण पराकृत इति संहिताविवक्षायां बीजप्रदर्शनमिदमिति कैयटोपाध्यायानामिति सूचयति। अन्यथा निर्णयादित्येतावन्मात्रं वदेदिति। तन्न। वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादात्संहिताकार्याप्रसक्तौ संहितायाया अविवक्षायाः प्रयोजनाभावादजादिसञ्ज्ञासिद्ध्युत्तरमुद्देश्यतावच्छेदकाक्रान्ते तटस्थे इव वर्णोपदेशादावपि कौस्तुभोक्तरीत्या सन्धौ सति संदेहोत्पादकशब्दप्रयोगः स्वकौशलोन्नायकः स्यादिति तन्निरासाय संहिताया अविवक्षा वक्तव्या। एवमपि प्रारम्भ एव सन्धिशास्त्रस्मरण-प्रयुक्तसन्धिरहितशब्दप्रयोगस्स्वकौशलोन्नायको भवत्येवेति तन्निराकरणायाविवक्षणापत्या तत्र तस्य बीजत्वासम्भवात्। सन्धिरहितैतादृशशब्दप्रयोगेण संहितैकपदे इत्यभियुक्तोक्तावाचार्यसंमतत्वं व्याख्यानत इत्यस्यागतिकगतित्वं च लभ्यम् इति मञ्जरीकृता विशेषः प्रदर्शितः।

**कारप्रत्ययः कुतो नेति विचारः-**

वर्णबोधकात् 'अ इ उ' इत्यादीनां "वर्णात्कारः" इति वार्तिकेन कथं न कारप्रत्ययः इति पृच्छायामकारादीनां प्रयोगस्थवर्णानामनुकरणतया वर्णबोधकत्वेन विवक्षिताद्वर्णात् 'अ' इत्यादिरूपात्कारप्रत्ययस्तु न भवतीत्युच्यते। सूत्रेऽस्मिन् "रोगाख्यां ण्वुल्बहुलम्" इति सूत्राद्बहुलमित्यनुवृ-त्तिकारणात्।

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति। इति**

इत्यर्थकाद्बाहुलकादप्रवृत्त्या न कारप्रत्ययः।

**समासः कथं न-**

अकारादीनां प्रयोगस्थवर्णानामनुकरणतया वर्णबोधकत्वेनाभेदानुकरणत्वेन शक्त्याभावेन वृत्त्याऽर्थविषयकबोधजनकत्वाभावेन "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रेण प्रातिपदिकत्वाभावेन स्वादिकार्यं न भवति। स्वादिकार्याभावान्निर्विभक्तित्वादत्र न समासः। यतो हि "सुप् सुपा" इति नियमेन समासो भवति।

**प्रत्याहारनिष्पत्तिः-**

"आदिरन्त्येन सहेता" (अ.१/१/७१) अन्त्येनेता सहितादिर्मध्यगानां स्वस्य च संज्ञा स्यादिति तदर्थः। अनेन सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते। प्रत्याहारप्रयोजकानि चतुर्दशमाहेश्वरसूत्राणि द्वितीये प्रत्याहाराह्निके विवेचितानि। वर्णानां क्रमसन्निवेशोऽनुबन्धसंयोजनं, सूत्रान्तर्गततत्तद्वर्णानां प्रयोजनानि च विशेषरूपेण भाष्ये प्रस्तुतानि। कोऽयं प्रत्याहारः? इति प्रश्ने उच्यते - प्रत्याह्रियन्तेऽर्थात्संक्षिप्यन्ते वर्णाः अस्मिन्निति प्रत्याहारः। अत्र तु "आदिरन्त्येन सहेता" इति पाणिनीयं सूत्रं प्रमाणम्। तेन सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते। ताश्च संज्ञाः अण् अच् हल् इत्यादय। लघुनोपायेन साधुशब्दज्ञानाय व्याकरणमध्येतव्यम्। तदर्थमेव पाणिनिना अष्टाध्यायी विरचिता। प्रत्याहारानाश्रित्येयं सम्पूर्णाष्टाध्यायी प्रवृत्ता। प्रत्याहारप्रयोजकानि अइउण् इत्यादीनि चतुर्दशसूत्राणि। तानि सूत्राणि कानि? इति चेत् उच्यते – अइउण्, ऋलृक्, एओङ् ऐऔच् हयवरट् लण् ञमङणनम् झभञ् घढधष् जबगडदश् खफछठथचटतव् कपय् शषसर् हल्। प्रत्याहाराणां संख्याविषये वैमत्येऽपि लघुसिद्धान्तकौमुद्याः व्याख्याने श्लोकौ इमौ दृश्येते यथा-

**ङणटञ्चात् स्मृतो ह्येकः चत्वारश्च चमान्मताः।**
**शलाभ्यां षड् यरात्पञ्च षाद् द्वौ च कणतस्त्रयः।**
**केषाञ्चित् मते रोऽपि प्रत्याहारोऽपरो मतः।**
**लस्थावर्णेन वाञ्छन्त्यनुनासिकबलादिह॥**

**रप्रत्याहारविषये वैमत्यम्-**

"लण् सूत्रे अकारश्च" इति सिद्धान्तकौमुदीपङ्क्त्या ज्ञायते लण्सूत्रस्थोऽकारः इत्संज्ञको भवतीति। वस्तुतस्तेनात्र हयवरट् इति सूत्रस्थेन रकारेण सह लण् इति सूत्रस्थमित्संज्ञकमकारं यावत् "आदिरन्त्येन सहेता" (अ.१-१-७१) इति सूत्रेण आदिर्मध्यगानामपि रप्रत्याहारत्वेन संज्ञा स्यात्। अर्थात् हयवरट्सूत्रस्थेन रकारेण सह लण्सूत्रस्थाकारं यावन्मध्ये विद्यमानस्य लकारस्यापि वर्णस्य(र्+ल्) इति समुदायस्य "रः" इति प्रत्याहारसंज्ञस्स्यात्। अतो रप्रत्याहारेण र्+ल् इति वर्णयोर्ग्रहणं स्यादिति भावः इत्याचार्यदीक्षितमतम्।

आचार्यदीक्षितस्य वस्तुतो मतिर्विद्यते भगवतः पाणिनेः "उरण् रपरः" इति सूत्रे रपरः इति पदग्रहणे। अतस्तस्याभीष्टं विद्यते यत्- यदि भगवान्पाणिनिः रप्रत्याहारं नैव स्वीकुर्यात्तर्हि तस्य मतेन "कृष्णर्द्धिः" इति रूपं तु सिद्ध्यति किन्तु "तवल्कारः" इति रूपं नैव सिद्ध्येत्। यतो हि

कृष्ण+ऋद्धि इति स्थले तु अकारऋकारयोः "आद्गुणः" इति सूत्रेण गुणे तथा च ऋकारस्य गुणे सति अकारः "उरण् रपरः" इति सूत्रेण रपरस्सन्नेव(अर्) प्रवर्तते।तेन कृष्णर्द्धिः इति रूपं सिद्ध्यति। किन्तु तव लृकारः इति स्थले लृकारस्य गुणे सत्यकारस्तु प्राप्नोति, किन्तु "उरण् रपरः" इति सूत्रेण लृकारस्य लपरस्सन् न प्रवर्तेत। यतो हि सूत्रे रपरः इति गृहितं विद्यते न तु लपरः।अतः आचार्यदीक्षितस्य मतेन तु तवल्कारः इति पदसाधनार्थम् "उरण् रपरः" इति सूत्रे रपरः इत्यत्र रकारेण रप्रत्याहारस्स्वीकरणीयः, न तु केवलं रकारः, नोचेत् तवल्कारः इति पदसाधनमेव नैव शक्येत इत्येतदर्थमेवाचार्यो दीक्षितो रप्रत्याहारं स्वीकरोतीति रप्रत्याहारस्याशयः।

वस्तुतः ईदृशीं समस्यां भगवान्पतञ्जलिः आदावेवानुभूतवान्, अत आह- अथ लपरत्वं वक्ष्यामि इति।तद्वचनस्य च कैय्यटस्तथा नागेशो द्विविधतया व्याख्यानं कृतवान्-

दीक्षितस्तु लपरत्वं वक्ष्यामि इति भाष्यवचनानुसारेण "उरण् रपरः" इत्यत्र साक्षात्सूत्रे रकारेण रप्रत्याहारत्वेन लपरत्वस्य व्याख्यानं कृतवान्। किन्तु नागेशस्तु "उरण् रपरः" इति सूत्रे एव साक्षाल्लपरत्वस्य प्रयोगः कर्त्तव्य इत्येवं व्याख्यानमकार्षीत्तस्य प्रदीपटीकायाम्। तेन "उरण् रलपरः" इति सूत्रं स्यादाचार्यनागेशमतेन।

भट्टोजिदीक्षितो रप्रत्याहारं स्वीचकार। आचार्यनागेशस्य मतेन तु यदि रप्रत्याहारस्य स्वीकारः पाणिनीयव्याकरणे स्यात्तर्हि भगवान्पाणिनिः "यस्येति च" "इणो यण्" "यस्य विभाषा" तथा च "इको यणचि" इत्यादीनि सूत्राणि नैव प्रणीयात्। तत्र सर्वत्रापि लण्सूत्रस्थेनाकारेण सह प्रत्याहारे गृहिते सति यस्य इति पदस्य तथा यण् इति प्रत्याहारस्य ग्रहणं नैव कुर्यात्, पदप्रत्याहारयोः समानरूपेण गृह्यमानादिति भावः।तथैव "अतो ल्रान्तस्य" इति सूत्रेऽपि यदि महर्षिपाणिनिना रप्रत्याहारस्स्वीक्रियेत तर्हि ल्रान्तस्येति नैवोच्येत।यतो हि रप्रत्याहारश्चेद् अतो रान्तस्य इत्युच्यमान एव कार्यं सिध्यत्यतो रलयोर्ग्रहणार्थं ल्रेति नैव वदेदाचार्यः।अतः "अतो ल्रान्तस्य" इति सूत्रे ल्र इति ग्रहणाज्ज्ञायते यद्भगवान्पाणिनिरपि रप्रत्याहारं नैव स्वीचकार। अतो रप्रत्याहारो नास्तीति प्रतिपद्यते।

तथा च नागेशो रप्रत्याहरविषये दोषमुद्भावयति- प्रत्याहारेष्वितां न ग्रहणम् इति वचनानुसारेणैव भाष्यकारो हेतुत्रयं प्रदर्शयति- आचारात्, अप्रधानत्वात्, लोपश्च बलवत्तरः इति। अत्र तृतीये आनुमानिकप्रक्रियया पक्षतावच्छेदकस्य हेतुः अव्यापकः वर्तते, यदि लण् सूत्रेऽकारोऽनुनासिकः स्वीक्रियते चेत्सर्वप्रथमं हल् प्रत्याहारस्सिद्ध्यति ततश्चाच्प्रत्याहारः। अतोऽच्प्रत्याहाराभावात्तदा लण् सूत्रस्थस्याकारस्य "उपदेशेजनुनासिक इत्" इति सूत्रेणेत्संज्ञा नैव प्राप्नोति। यतो हि तत्रानुमानं प्रदर्शयति यदनुबन्धाः प्रत्याहारजन्याः बोधविषयत्वाभाववन्तो लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादिति। अनुमानेऽस्मिन् हेतुः लण् सूत्रस्थेऽकारे नैव सम्भवति। यतो हि इत्संज्ञाभावात् लण् सूत्रस्थोऽकारः "तस्य लोपः" इति सूत्रस्य उद्देश्यतावच्छेदकः इत्वेन अनाक्रान्तोऽस्ति। अतः पक्षतावच्छेदेन क्रियमानायामनुमितौ हेतुः पक्षतावच्छेदकस्य व्यापकस्स्यात्, किन्तु अत्र वस्तुतो हेतुरव्यापकोऽस्तीति दोषः प्रदर्शितः।

किन्तु अव्यापकत्वापत्तिरूपो दोषोऽपि रप्रत्याहारवादिनां मतेन न सम्भवति। यतो हि अनुबन्धस्तु स एव भवति यस्य इत्संज्ञा सम्भवति किन्तु प्रकृतस्थले तु हल्प्रत्याहारस्य सर्वादौ सिद्धेरच्प्रत्याहास्य निष्पत्त्यभावात् लण् सूत्रस्थस्याकारस्य "उपदेशेजनुनासिक इत्" इत्यनेनेत्संज्ञा न सम्भवति । अतस्तदा तु अनुबन्ध एव न तिष्ठति। फलस्वरूपं भवति यत्- यदा पक्षः एव न तिष्ठति तदा पक्षतावच्छेदका-व्यापकत्वापत्तिरूपो दोषोऽपि नोचितोऽतो न दोषः इति समासेन रप्रत्याहारविषये नागेशदीक्षितयोर्मतभेदो विद्यते।

इत्येवं रूपेण सिद्धान्तकौमुदीकारस्य भट्टोजिदीक्षितस्य तथा सिद्धान्तकौमुद्याः लघुशब्देन्दुशेखरः इति व्याख्याकारस्य आचार्यनागेशस्य मध्ये रप्रत्याहारविषये मतपार्थक्यं दृश्यते।एवञ्च न केवलं लघुशब्देन्दुकारो रप्रत्याहारं प्रत्याख्यातवान् अपि तु तत्त्वबोधिनीकारः ज्ञानेन्द्रसरस्वतीमहोदयोऽपि रप्रत्याहारं प्रत्याख्यातवानस्ति। एवंरूपेण सिद्धान्तकौमुदीकारस्य मतेन सह बहुत्र नागेशस्य वैमत्यं दरीदृश्यते।

**अणिन्ग्रहणेषु पूर्वणकारेणोत परणकारेण प्रत्याहारः-**

माहेश्वरसूत्रेषु सर्वेऽप्यनुबन्धवर्णाः सकृदेवोपदिष्टाः। णकारस्तु "अइउण्" सूत्रे "लण्"सूत्रे चोपदिश्यते। तथा च 'अण्' प्रत्याहारे 'इण्' प्रत्याहारे च किं पूर्वणकारेण प्रत्याहारः आहोस्वित्परणकारेणेति सन्देहे "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति परिभाषया ज्ञायते- अणुदित्सवर्णस्य इत्येत्परिहाराय पूर्वेणाण्ग्रहणम्, परेणेण्ग्रहणम् इति। तदुक्तम्-

**परेणेण्ग्रहाः सर्वे पूर्वेणाण्ग्रहा मताः।**
**ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु॥**इति

**प्रत्याहारेष्वनुबन्धानां ग्रहणं न–**

चतुर्दशसु सूत्रेष्वन्त्यवर्णाः सर्वेऽपि हलः अनुबन्धाः। अतस्तेऽनुबन्धाः अपि उपदेशत्वेन गृह्यन्ते। ततश्चोपदेशेऽन्त्यहलामित्स्यादित्यर्थकेन "हलन्त्यम्" इति सूत्रेण माहेश्वरसूत्रेष्वन्त्यवर्णानामित्संज्ञा भवति। तदन्तरमित्संज्ञकवर्णैः "आदिरन्त्येन सहेता" इति सूत्रेणाणादयः प्रत्याहाराः निष्पद्यन्ते। प्रत्याहारग्रहणेऽन्त्यस्येद्वर्णस्य ग्रहणं न क्रियते । तथा च, मध्ये विद्यमानानामिद्वर्णानामपि ग्रहणं न भवति। यदि एवमिद्वर्णानां ग्रहणमभविष्यत् तर्हि "अच्" इत्यनेन "ऋलृक्" इत्यस्य ककारस्यापि ग्रहणमभविष्यत्। एवमभविष्यत् चेत् "अच्" प्रत्याहारे ककारस्यापि समावेशोऽभविष्यत्। अनेन "इ+क्" इत्यत्र, तथा च "उ+क्" इत्यत्रापि "इको यणचि"(अ.६/१/७७) इत्यनेन यण्सन्धिरप्यभविष्यत्। प्रत्याहारेष्वन्त्यवर्णानामनुबन्धानां ग्रहणं कुतो न भवतीति शङ्का **आचारात् अप्रधानत्वात् लोपश्च बलवत्तरः** इति त्रिभिः हेतुभिः भाष्यकारैः समाहिता। आचारः पाणिनेः सौत्रव्यवहारः। एकमुदाहरणम्- "मुखनासिकावचनोऽनुनासिकः" (अ.१/१/८) इति सूत्रेऽनुनासिक इति निर्देशः कृतः। अनुबन्धानां प्रत्याहारेषु यदि ग्रहणं स्यात्तर्हि ककारादीनामच्प्रत्याहारान्तर्गततया तेषामप्यच्त्वादनुनासिक इत्यत्रेकारस्य ककारात्मकाच्परत्वेन "इको यणचि" इति सूत्रेण यणादेशः कर्तव्यः आसीत्। तेन अनुनास्कः इति स्यात्। तदकरणेन ज्ञायतेऽनुबन्धानां प्रत्याहारेषु ग्रहणं न भवतीति। तथा च "शिक्षा", "मुक्ति" एतादृशेषु शब्देषु संहितायां सत्यामपि सन्धिर्न भवति । अत एते शब्दाः एवास्य प्रमाणानि सन्ति, यत्प्रत्याहारग्रहणे इद्वर्णानां ग्रहणं न भवति।

**उपसंहारः-**

वैयाकरणनये प्रत्याहारसूत्राणां गाम्भीर्यमतीव महद्वर्तते। अतो माहेश्वरसूत्राणां श्रुतित्वम्, माहेश्वरसूत्रेषु कुतो नेति विभक्त्युत्पत्तिः, वर्णसमाम्नाये स्वरसन्ध्यप्रवृत्तौ कैय्यटकौस्तुभमतविचारः इत्यादिविन्दुनाश्रित्य कौमुदीदिशा, शेखरदिशा, भाष्यदिशा प्रत्याहारसूत्रविमर्शः कृतः। इति शम्।

**तथ्यसूत्राणि-**

१. पाणिनीयशिक्षा। श्लोकः-५७
२. लघुशब्देन्दुशेखरः। पृष्टाङ्कः - १४-१५
३. तत्रैव। पृष्टाङ्कः- १५
४. तदेव।
५. तदेव।
६. लघुशब्देन्दुशेखरः (चन्द्रिकाव्याख्या)। पृष्टाङ्कः- ८,९
७.तत्रैव। पृष्टाङ्कः- १०

**संकेताक्षरसूची-**

१. अ.- अष्टाध्यायी।

**परिशीलितग्रन्थसूची**


१. पाणिनिः।**अष्टाध्यायीसूत्रपाठः**।सम्पा.- सत्यनारायण खण्डुरी। कृष्णदास अकादेमी, वाराणसी। 2012
२. नागेशः। **लघुशब्देन्दु शेखरः**।सम्पा. हरिनारायण तिवारी।चौखम्बा विद्याभवन, वाराणसी। **2014**
३. भर्तृहरिः।**वाक्यपदीयम्**(ब्रह्मकाण्डम्)।चौखम्बा विद्याभवन, वाराणसी। २००६
४. भर्तृहरिः। **वाक्यपदीयम्(ब्रह्मकाण्डम्)**। सम्पा. आचार्य पं सत्यनारायण खण्डूरी। वाराणसी; चौखम्बा विद्याभवन, २००६। मुद्रितम्।
५. भट्टोजिदीक्षितः। **सिद्धान्तकौमुदी(तत्त्वबोधिनीसहिता)।** सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। दिल्ली; मोतीलाल बनारसीदास, १९६१(प्रथमसंस्करणम्)। मुद्रितम्।
६. पुष्पादीक्षितः। **अष्टाध्यायीसहजबोधः**। पाणिनीयशोधसंस्थान, छत्तीसगढ। 2004
७. नागेशभट्टः। **लघुशब्देन्दु शेखरः**।व्याख्याकारः - आचार्य विश्वनाथमिश्रः। चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली। 2012


## आत्मतत्त्वविवेकग्रन्थदिशा क्षणिकत्ववादस्य स्वरूपविचारः*

नैयायिकानां स्वमहिममाधुर्येण न्यायदर्शनमिदं सुसमृद्धं गौरवान्वितञ्च। दार्शनिका यथा प्रतिद्वन्द्विरूपेण समालोचिता भवन्ति तथा स्वदर्शनप्रतिभया श्रद्धेया अपि भवन्ति। एतेषु दार्शनिकेष्वन्यतमप्रमुखदार्शनिक उदयनाचार्यः। यथा नक्षत्रेषु सूर्यस्स्वमहिम्ना स्वगौरवं विधत्ते तथैव नैयायिकेषु वैशेषिकेषु च दार्शनिकेषूदयनाचार्यस्स्वगौरवं विधत्ते। अर्थादुदयनाचार्यो यथा नैयायिकस्तथैव वैशेषिकोऽप्यासीत्। उदायनाचार्यस्य मौलिकयुक्तिमाधुर्यं विविधसमये प्रमुखदार्शनिकानां मार्गदर्शनमकरोत्। उज्ज्वलनक्षत्रस्वरूप उदयनाचार्यः विविधग्रन्थे आत्मविषयक-चर्चायां सचेष्टपरो


*देवश्री खाँडा
सहकारी अध्यापिका,
स्वामी निःसम्बलानन्द वालिकामहाविद्यालयः, हुगली, पश्चिमवङ्गः

भवति। *आत्मतत्त्वविवेकोन्यायकुसुमाञ्जलिश्चेति* ग्रन्थद्वयं तन्निदर्शनस्वरूपम्।ईश्वरस्य मननात्मकालोचनाया आडम्बरं यथा *न्यायकुसुमाञ्जलिग्रन्थे* तथैवान्यत्रापि प्रशंसनीयम्। कुप्पूस्वामिभाषायामवश्यमेव तद्दृश्यमानम्।In the history of Indian theism, Udayan's theistic contribution is of *particular value in demonstrating the extent to which theism may press reason into service where revelation fails-as in the case of the anti-Vedic Buddhists......*[१]

उदयनाचार्यकृतेषु ग्रन्थेषु *आत्मतत्त्वविवेकोन्यायकुसुमाञ्जलिश्चेति* स्वतन्त्रग्रन्थौ वर्तेते। ग्रन्थद्वयेऽपि अत्यन्तं काठिन्यमनुभूयते चेदपि दार्शनिकतत्त्वप्रतिपादने एतयोः माहात्म्यम् अविस्मरणीयमेव। ग्रन्थद्वये क्षणिकत्ववादः प्रतिपादितः। आत्मतत्त्वविवेकग्रन्थे वर्णितस्य क्षणिकत्ववादस्य संक्षेपेण सुचारुतया आलोचनं मया निबन्धविषयम्।

प्रपञ्चेऽस्मिन्सर्वजनसंवेदनसिद्धं निसर्गप्रतिकूलस्वभावं दुःखं परिहर्तुं सर्वे तदुपायमनुसन्धित्सवः सन्ति। आध्यात्मिकदुःखनिवृत्तिविषये सर्वाध्यात्मिकवत्तत्त्वज्ञानमात्मतत्त्वज्ञानं वैव तदुपा-यरूपेणाकर्णयन्तीति हेतोः आत्मतत्त्वमस्मिन् ग्रन्थे प्रतिपाद्यते। परन्तु कस्यचिद् विषयस्य स्थापनाय यथा साधकं किञ्चिद् दातव्यं तथैव तस्य बाधकस्य खण्डनमपि कर्तव्यं भवति। अतस्तस्यात्मतत्त्वस्य साधकप्रमाणस्थापनं बाधकप्रमाणखण्डनञ्चोभयग्रन्थे प्रतिपादितम्। आदौ तावदुभयग्रन्थे क्षणभङ्ग-वादस्य खण्डनपुरःसरं कथमात्मतत्त्वस्य प्रतिपादनं वर्तते तदालोच्यते।

**क्षणभङ्गवादे क्षणिकत्वस्य स्वरूपम् –**

आत्मतत्त्वप्रतिपादनाय बौद्धसम्मतक्षणिकत्ववादस्य खण्डनं विधातव्यम्। क्षणभङ्गवाद-ज्ञानात्पूर्वं ज्ञातव्यमस्ति किं नाम क्षणिकत्वम्। शिरोमणिना क्षणिकत्वस्य लक्षणमुक्तम्- 'स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम्'[२] अथवा 'स्वाधिकरण-समयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति उत्पत्तिमत्त्वम्'।[३] स्वस्य योऽधिकरणभूतसमयस्ततः प्राक् योऽधिकरणभूतः समयः, तस्मिन् समयेऽनुत्पन्नः, परन्तु तस्मात् क्षणात्परं कदाचिद्विद्यमानोऽथवा उत्पन्नः यः पदार्थः स क्षणिकपदार्थः। तथा हि नीलपदार्थः(बौद्धमते गुणातिरिक्तद्रव्यं नास्त्यन्यत्वस्तु, वस्तुतो नीलगुणादेरेव समष्टिः घटादिपदार्थः) क्षणिकपदार्थः। तद्यथा- स्वं नीलः, स्वाधिकरणसमयः नीलपदार्थो यस्मिन् समये उत्पद्यते स समयः, तस्य प्रागभावाधिकरणक्षणो नीलपदार्थस्योत्पत्तेः पूर्वक्षणः। तस्मिन् समये नीलपदार्थस्यानुत्पन्नत्वात् किन्तु परस्मिन् क्षणे कदाचिद् विद्यमानत्वादथवा उत्पन्नत्वात् नीलपदार्थः क्षणिकपदार्थः। एतद् ज्ञेयमस्ति यद् अत्र क्षणत्वस्य लक्षणं शिरोमणिना स्वीकृतं यत् 'क्षणश्च स्वाधेयपदार्थप्रागभावानाधारसमयः'[४] इति।

दीधितिकारेण प्रागभावो नैव स्वीक्रियते इति हेतोः क्षणिकत्वस्य लक्षणमुक्तम्- 'स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं क्षणिकत्वम्'।[५] अर्थात् स्वाधिकरणक्षणे विद्यमानो यो ध्वंसः, तस्य ध्वंसस्य यत्प्रतियोगी तत्रावृत्तित्वं क्षणिकत्वम्। अर्थात् स्वं नीलादि; स्वाधिकरणक्षणवृत्तिध्वंसः तत्पूर्वकालिकपदार्थस्य ध्वंसः, तस्य ध्वंसस्य यः प्रतियोगी स एव पूर्वकालिकपदार्थः, तस्मिन् पूर्वकालिकपदार्थे परक्षणस्थितपदार्थस्यावृत्तित्वात् नीलादिः क्षणिकपदार्थ इति। अत्र 'क्षणत्वं स्वावृत्तिर्यावत्स्ववृत्तिध्वंसप्रतियोगिकत्वम्'[६] इति शिरोमणिरुक्तवान्। दीधितिकारेण क्षणस्य लघुलक्षणं कृतमस्ति यत्- 'स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं वा'[७] इति।

**बौद्धसम्मतक्षणवादस्वरूपम्–**

उपर्युक्तरूपेण क्षणिकत्वे निर्णीते सति प्रश्नोऽवश्यमागच्छेद् आत्मापि क्षणिकपदार्थो वा। तत्र न्यायवैशेषिकमते न्यायस्यावयवाः पञ्च, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। वेदान्तिमीमांसकमते न्यायस्या-वयवाः त्रयः। यथा प्रतिज्ञाहेतूदाहरणानि अथवा उदाहरणोपनयनिगमनानि। बौद्धमते न्यायस्य अवयवद्वयं वर्तते। यथा- उदाहरणम्, उपनयः। बौद्धमतेऽवयवद्वयाद् व्याप्तिः पक्षधर्मताज्ञानं च क्रमशः सम्पद्यते। ततोऽनुमितिरुत्पद्यते। बौद्धमते क्षणिकत्वविषये प्रमाणमेतादृशं वर्तते यथा-'यत् सत् तत् क्षणिकं, यथा घटः। संश्च विवादाध्यासितः शब्दादिः'।[८] अत्र 'यत् सत् तत् क्षणिकं, यथा घटः'[९] इति उदहरणवाक्यतः सत्तायां क्षणिकत्वज्ञानं, 'संश्च विवादाध्यासितः शब्दादिः' इति उपनयवाक्यतः शब्दादिपक्षधर्मताज्ञानञ्च भवति। तत एव शब्दादिः क्षणिकः इति क्षणिकत्वस्यानुमानं सिद्ध्यति। परन्तु संशयोऽत्र भवति बौद्धमतेऽवयवपुञ्जा-तिरिक्तावयवी असिद्धः खलु तर्हि कथं क्षणिकत्वानुमाने घटस्य दृष्टान्तरूपेण ग्रहणमिति। अपरश्च संशयो यत् उभयवादिसिद्धस्यैव दृष्टान्तो भवति खलु । परन्तु बौद्धमते घटस्य क्षणिकत्वे सिद्धेऽपि न्यायवैशेषिकमते तु घटोऽसिद्ध एव। अतः क्षणिकत्वानुमाने कथं घटस्य दृष्टान्तत्वेन स्वीकारो भवितुमर्हतीति।

अस्य संशयस्य समाधानं शिरोमणिना प्रतिपादितम्- स्थूलद्रव्यमत्र दृष्टान्तरूपेण दर्शितम्, अतो घटस्य क्षणिकत्वेऽसिद्धेऽपि घटस्य क्षणिकत्वसाधनात्परं दृष्टान्तो भवितुमर्हति। अथवाऽत्र घट इति कुर्वद्रूपत्वविशिष्टपरमाणुसमूहः(यस्मात्कार्यपदार्थः उपद्यते तत्कुर्वद्रूपम्)। अथवा घटः अत्र व्यतिरेकदृष्टान्तत्वेन प्रयुक्तः। यत् सत् तत् क्षणिकमिति। यत् क्षणिकं नास्ति तन्न सत् यथा घटः इति। अत्र विवादाध्यासितः इति विशेषणं अन्तिमशब्दस्य सिद्धसाधनं निषेधाय। केवलं शब्दादिः सत् इत्युक्ते सति अन्तिमशब्दोऽपि सद् भवेत्। अतः तत्र क्षणिकत्वात् सिद्धसाधनदोष आपतति। अतस्तस्य वारणाय विवादाध्यासितः इति विशेषणम्। अथवा विवादाध्यासितः इति विशेषणं पक्षस्य स्वरूपकथनमात्रम्। शब्दादिः स्वरूपतः क्षणिको न वा इति विवादविषयः। वस्तुतः स्वरूपकथनपक्षेऽन्तिमशब्दस्य ग्रहणेऽपि आपातदृष्ट्या सिद्धसाधनदोषापत्तावपि वास्तविके तथा न भवति। यतो हि पक्षतावच्छेदकावच्छेदेन साध्यसाधने पक्षस्यैकांशे साध्यसिद्धे सत्यपि यावत्पक्षं स्वीकृत्य साध्यसाधनस्योद्देश्यत्वादनुमितेः पूर्वं यावत्पक्षे साध्यसिद्धेरनुत्पन्नत्वात् सिद्धसाधनदोषो न भवेत्। अतो विवादाध्यासितपदं स्वरूपकथनपरमिति।[१०]

**आत्मतत्त्वविवेके क्षणिकत्ववादखण्डनमात्मतत्त्वप्रतिष्ठा च –**

आत्मतत्त्वस्थापनायाऽऽगतस्य बाधकस्य खण्डनाय बौद्धसम्मतस्य क्षणभङ्गस्यालोचनाऽत्र वितन्यते। वस्तुतस्तु बौद्धसम्मतेषु चतुर्षु बाधकेष्वन्यतमबाधकं क्षणभङ्गः। क्षणिकत्ववादस्य स्वरूपमुपर्यालोचितम्। तस्य खण्डनावसरे आदावेव आत्मतत्त्वविवेके उच्यते-'क्षणभङ्गो बाधकं भवितुं नार्हति प्रतिबन्धासिद्धेः'।[११] अत्र प्रतिबन्धो व्याप्तिः, व्याप्तेरसिद्धत्वात् क्षणभङ्गवादो बाधकं भवितुं नार्हतीति।

**सामर्थ्यासामर्थ्यरूपविरुद्धधर्मद्वयस्य संसर्गः –**

पूर्वपक्षिभिः क्षणिकत्ववादसमर्थनाय उच्यते क्षेत्रस्थबीजमङ्कुरमुत्पादयति किन्तु कुशूलस्थितबीजम-ङ्कुरं नोत्पादयति। अतः क्षेत्रस्थाङ्कुरोत्पादकबीजेभ्यः कुशूलस्थितबीजस्य भेदोऽवश्यं स्वीकार्यः। तद्वदेकस्मिम् कुशूलस्थितबीजेऽपि प्रतिक्षणं विभिन्नक्रिया दरीदृश्यते। अतः कुशूलस्थितबीजेष्वपि भेदोऽवश्यं स्वीकर्तव्यः। प्रतिक्षणं विभिन्नक्रिया सम्पद्यते इत्यतः विभिन्नक्रियां प्रति एकस्य बीजस्य कारणं नैव स्वीकर्तुं शक्यते। विभिन्नक्रियायामेकस्य बीजस्यैकस्मिन्क्षणे सामर्थ्ये सत्येकस्मिन् क्षण एव तेनैव बीजेन विभिन्नक्रियोत्पद्येत। अर्थादेतत्स्वीकर्तव्यमेकस्मिन् क्षणे एकस्य पदार्थस्यैकक्रियां प्रत्येव कारणं भवति, तत्क्षणेऽन्यपदार्थः तत्क्रियां प्रति कारणं न भवति। अतः तत्तत्क्रियायाः कारणेभ्यः तत्तत्क्रियायाः अकारणं भिन्नमेवेति स्पष्टं प्रतीयते। अत एकक्षणे कार्यसामर्थ्यस्य कार्यासामर्थ्यस्य इति धर्मद्वयस्य समावेशो नैव सम्भवति। एवञ्च प्रतिक्षणं विभिन्नक्रियोत्पद्यमानत्वाद् विभिन्नक्रियां प्रति विभिन्नपदार्थस्य भेदस्य स्पष्टप्रतीयमानत्वात्तेषां भेदोऽपि सिद्ध्यति। किञ्च भेदसिद्धत्वात् प्रतिक्षणं क्रियाजनकविभिन्नपदार्थानां सत्ताया गोचरीभूतत्वात्क्षणिकत्ववादोऽपि सिद्ध्यति।

**सामर्थ्यासामर्थ्यरूपविरुद्धधर्मद्वयस्य संसर्गस्यासिद्धत्वम्–**

उपर्युक्तसामर्थ्यासामर्थ्यविरुद्धधर्मद्वयस्य संसर्गखण्डनायोक्तमुदयनाचार्येण 'सामर्थ्यासामर्थ्यल-क्षणविरुद्धधर्मसंसर्गेण भेदसिद्धौ तत्सिद्धिरिति चेन्न विरुद्धधर्मसंसर्गासिद्धेः'।[१२]

अर्थात्सामर्थ्यासामर्थ्यरूपविरुद्धधर्मयोः संसर्ग एव न सिद्ध्यतीत्यत्र जिज्ञासा काचनावश्यमुत्पद्येत कथमनयोः संसर्गोऽसिद्धः इति अस्मिन्नसिद्धत्वविषये उदयनाचार्यमतस्य याथार्थ्येन स्पष्टीकरणं दीधितिकारेण कृतमुक्तञ्च-

**किञ्चित्सामर्थ्यादिकमविरुद्धं किञ्चिच्चासिद्धमिति....।**[१३]

अर्थाद्वौद्धैः सामर्थ्यं नाम किं स्वीक्रियते इति प्रश्नो भवति। सामर्थ्यं नाम किं फलोपधायकत्वमसामर्थ्यं नाम फलानुपधायकत्वं वा, अथवा स्वरूपयोग्यत्वं स्वरूपायोग्यत्वं वा। यदि सामर्थ्यासामर्थ्ययोः फलजनकत्वफलाजनकत्वे स्वीक्रियेतां तर्हि फलोपधायकत्वमर्थात्फलजनकत्वं फलानुपधायकत्वमर्थात् फलाजनकत्वमिति धर्मद्वयं विरुद्धं न भवति। यतो हि एकस्मिन्नेव तन्तौ सहकारिकारणाभावे वस्त्रस्याजनकत्वदर्शनात्कालान्तरे च सहकारिकारणसत्त्वाद्वस्त्रस्य जनकत्वदर्शनात्। अत एकस्मिन्नेव तन्तौ फलोपधायकत्वानुपधायकत्वधर्मद्वयदर्शनाद्धर्मद्वयस्य विरोधोऽसिद्धः।

एवञ्च यदि स्वरूपयोग्यत्वस्वरूपायोग्यत्वे सामर्थ्यासामर्थ्यत्वेन गृह्येते तर्हि धर्मद्वयस्य विरुद्धत्वेऽपि तयोः संसर्गोऽसिद्धः। अर्थाद्यथा घटं प्रति दण्डः कारणं भवतीत्यतो दण्डे स्वरूपयोग्यता अर्थाद्घटकारणतावच्छेदकत्वरूपदण्डत्वं विद्यते, तत्र स्वरूपायोग्यतार्थाद्घटकारणतानवच्छेदकत्वा-दण्डत्वं च नैव विद्यते। अत एकत्र द्वयोर्धर्मयोः समावेशाभावादुक्तधर्मौ विरुद्धौ वर्तेते। अतः तयोः संसर्गोऽप्यसिद्धः। यतो हि यत्र स्वरूपयोग्यता तिष्ठति तत्र स्वरूपायोग्यता न तिष्ठतीति । अतः तयोः संसर्गो न कुत्रापि सिद्ध्यति। एवं विरुद्धधर्मद्वयस्य संसर्गः सर्वथाऽसिद्ध एव। एवञ्च विरुद्धधर्मद्वयसंसर्गस्यासिद्धत्वात् कुशूलस्थितवीजेषु भेदोऽप्यसिद्धः। बीजानां क्षणिकत्वमप्यसिद्धम्।

बौद्धसम्मतक्षणिकत्ववादस्य खण्डनेन उदयनाचर्यः न्यायस्वीकृतस्यात्मनः नित्यत्वं प्रतिपादितवान्। आत्मनो नित्यत्वविषये नैयायिकयुक्तिं विनापि शास्त्रीयप्रमाणमपि वर्तते। यथा –

जीवापेतं वाव क्लि इदं म्रियते, न जीवो म्रियत इति।[१४]

**तथ्यसूत्राणि –**

१. *A Primer of Indian Logic*.Page-85.
२. *आत्मतत्त्वविवेकः*। दीननाथत्रिपाठी(सम्पा.)। पृष्ठाङ्कः-१८।
३. तदेव।
४. तत्रैव। पृष्ठाङ्कः-२७।
५. तत्रैव। पृष्ठाङ्कः-३१।
६. तदेव।
७. तदेव।
८. तत्रैव। पृष्ठाङ्कः-३५।
९. यत्सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा।
*सर्वदशनसंग्रहे बौद्धदर्शनओ जैनदर्शन*। पृष्ठाङ्कः-१५।
१०. तत्रैव। पृष्ठाङ्कः-३५।
११. तदेव।
१२. तत्रैव। पृष्ठाङ्कः-४०।
१३. तत्रैव। पृष्ठाङ्कः-४१।
१४. छान्दोग्योपनिषद् ६/११/। *उपनिषद्*। पृष्ठाङ्कः-५९१।

**परिशीलितग्रन्थसूची–**

**(क) आकरग्रन्थसमूहः-**

उदयनाचार्यः। *आत्मतत्त्वविवेकः*। दुन्दिराजशास्त्री(सम्पा.)। वाराणसीः चौखम्बा संस्कृत सीरीज अफिस,१९९७।
उदयनाचार्यः। *आत्मतत्त्वविवेकः*। दीननाथत्रिपाठी(सम्पा.)। कलिकाताः कलिकाता संस्कृत कलेज, १९८४।
उदयनाचार्यः। *लक्षणावली*। विन्ध्येश्वरीप्रसादः(सम्पा.)। वेनारसः राज-राजेश्वरी, १८९७।

**(ख) सहायकग्रन्थसमूहः-**

कणादः। *वैशेषिकदर्शनम्*। प्रद्योतकुमारमण्डलः(सम्पा.)। कलकाता: प्रग्रेसिभ पावलिशार्स,२००४।
कपिलः। *सांख्यसूत्रम्*। रामशङ्करभट्टाचार्यः(सम्पा.)। वाराणसीः भारतीय विद्या प्रकाशन, १९६६।
कुमारिलभट्टः। *श्लोकवार्त्तिकम्*। पार्थसरथिमिश्रः(सम्पा.)। वाराणसी: चौखम्बा संस्कृत सीरिज, १९१३।
गौतमः। *न्यायदर्शनम्*(प्रथमं संस्करणम्) । फणिभूषणतर्कवागीशः(सम्पा.)। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षद, २०११(१९८१ प्रथमं संस्करणम्)।
गौतमः। *न्यायदर्शनम्*। नारायणमिश्रः(सम्पा.)। वाराणसी: चौखाम्बा संस्कृत संस्थान, १९८३।
गौतमः। *न्यायदर्शनम्*(तृतीयं संस्करणम्) । फणिभूषणतर्कवागीशः(सम्पा.)। कलकाता: पश्चिमवङ्ग राज्य पुस्तक पर्षद्, २०००(१९८२ प्रथमं संस्करणम्)।
गोस्वामी, नीलकान्तः(सम्पा.)। *श्रीमद्भगवद्गीता*। १३४२(वङ्गाब्दः)।
नारायणभट्टः। मानमेयोदयः। चेन्नाइ: थियोजफिकाल सोसाइटि, १९३३।
माधवाचार्यः। *सर्वदर्शनसंग्रहे बौद्धदर्शन ओ जैनदर्शन*। सञ्जितकुमारसाधुखाँ(सम्पा.)। कलकाता: सदेश,२०११(२००५प्रथमं संस्करणम्)
रायः, सुशीलः(सम्पा.)। *शिक्षातत्त्व ओ शिक्षादर्शन*। कलकाताः सोमा वुक एजेन्सी,२००४।
विश्वनाथः। *भाषापरिच्छेदः*।अनामिका रायचौधुरी(सम्पा.)। कलकाता : संस्कृत पुस्तक भाण्डार, २००४।
विश्वनाथः। *भाषापरिच्छेदः*। हरिरामशुक्लः(सम्पा.)। चौखम्बा प्रकाशन, २०१८।
सदानन्दयोगीन्द्रः। *वेदान्तसारः*। विपदभञ्जनपालः(सम्पा.)। कलकाता : संस्कृत पुस्तक भाण्डार, १४१७ (वङ्गाब्दः)।
सेन: अतुलचन्द्रः, सीतानाथतत्त्वभूषण: महेशचन्द्रघोषश्च(सम्पा.)। *उपनिषद्*। कलकाता : हरफ प्रकाशनी, १९९८(१९७२ प्रथमं संस्करणम्)।
Dasgupta, S.N.*AHistory of Indian Philosophy* (vol.1). Delhi: Motilal Banarsidass, 1988.
Hiriyanna, M.O*utline Of Indian Philosophy*. Deihi:Motilal Banarsidass, 2009(rpt.) (1993 1st ed.).
S.Kuppuswami Sastri. A *Primer of Indian* Logic. U.S: Franklin Classics Trade Press, 2018.

## मार्कण्डेयपुराणोक्तदाम्पत्यसम्बन्धः*

अस्मिन् जगति सर्वेषां प्राणिनां कल्याणाय जीवनस्य अभ्युन्नत्यै च यत्किञ्चिदावश्यकं महत्त्वपूर्णं च आसीत् तत्सर्वम् अस्माकम् ऋषिभिः विचिन्तितम्। नास्तिकोऽप्येतादृशः विषयः यस्य वर्णनं पुराणेषु नोपलभ्यते। ऋषिभिः गहनान्वेषणेन पारिवारिकसूत्राणाम् अन्वेषणं कृत्वा परस्परसौहार्दमङ्गीकृत्य जनैः स्वस्वकर्त्तव्यानामनुपालनं कथं कर्त्तव्यं तस्य विधानं तात्कालिकसमाजाय प्रदत्तम् येन पारिवारिकसंस्थायाः उदयोऽभवत्। पुराणसाहित्यस्य अध्ययनात् तात्कालिकभारतीयसमाजस्य यत् चित्रामागच्छति तत् विश्लेषणेन ज्ञायते यत् तस्मिन् काले मानवस्य जीवनं सुखसौमनस्यपूर्णं समता-समरसतामूलकं च आसीत्। मार्कण्डेयपुराणे पतिपत्न्योः सम्बन्धिविषये विवेचनमेवमुपलभ्यते।

भारतीया संस्कृतिः पतिपत्न्योः सम्बन्धं संस्काररूपेण स्वीकरोति। सम्बन्धोऽयं न केवलं एकजन्मावधि अपितु एकजन्मानुसारी भवति संस्कृतिसम्मतम्। पुराणकाले राजपुरुषाः राजानश्च बहुवल्लभाः भवन्ति। तथापि मार्कण्डेयपुराणे व्यासः एकपत्नीत्वस्य प्रतिष्ठापनायै प्रतिबद्धो दृश्यते।

*डॉ. छोटूकुमारमिश्रः
प्रवक्ता, हरियाणासंस्कृतविद्यापीठम्
बघौला, पलवलम्, (हरियाणा)

अस्मिन् पुराणे ऋतुध्वजस्य चरित्रवर्णने एकपत्नीत्वस्य प्रतिष्ठानायै विविधाः विचाराः प्रदर्शिताः सन्ति। एकदा तालकेतुनाम्नाऽसुरेण मिथ्या वार्ता प्रसारिता यद् ऋतुध्वजः पञ्चत्वमगच्छत्। पत्युः मृत्युवार्तां श्रुत्वा ऋतुध्वजस्य पत्नी साध्वी मदालसा प्राणास्तत्याज। इमं वृत्तान्तं श्रुत्वा ऋतुध्वजो मुहुर्विललाप। तस्याः मृत्युवार्ताश्रवणोत्तरमपि सुरक्षितान्स्वप्राणान् दृष्ट्वा स आत्मानं निर्दयं, निष्ठुरं, नृशंसं च मत्वा स्वभर्त्सनाञ्चकार-

**तत्याज जीवितं साध्वी धिङ् मां निष्ठुरमानसम्।**
**मत्कृते निधनं प्राप्तां यज्जीवाम्यतिनिघृणः।।[१]**

यद्यपि ऋतुध्वजः पत्नीमनुसृत्य प्राणत्यागं न करोति तथापि स अन्ययोषितो भोगस्य त्यागं कृत्वा एकपत्नीत्वमाचरति। स उद्घोषयति यत् नान्या स्त्री मदालसायाः स्थानं ग्रहीतुमर्हति-

**अस्मिञ्जन्मनि नान्या मे भवित्री सहधर्मचारिणी।**
**तामृते मृगशावाक्षीं गन्धर्वतनयामहम्।।**
**न भोक्ष्ये योषितं काञ्चिदिति सत्यं मयोदितम्।**
**सहर्धमचारिणीं पत्नीं तां मुक्त्वा गजगामिनीम्।।[२]**

पुनः पुराणकारः स्वारोचिषः कथायामपि एकपत्नीत्वस्य प्रतिष्ठनायै विविधाः विचाराः प्रदर्शिताः सन्ति। स्वारोचेः मनोरमा, विभावरी, कलावती च तिस्रो भार्या बभूवुः। एकदा स्वभार्याभिः सह मलयाचलस्य वनोद्देशे मधुरप्रेम्णा विरहन् स कलहंसी चक्रवाक्योः संवादं श्रुतवान्। कलहंसस्योक्तम् - ''स्वभार्याभिरीप्सितान् भोगान् भुञ्जानोऽयं युवा पुण्यवान् धन्यश्च'' -

**धन्योऽयं दयिताभीष्टो ह्येताश्चातिवल्लभाः।**
**परस्परानुरागो हि ध्न्यानामुपजायते।।[३]**

स्वारोचेः तस्य भार्याणां च दाम्पत्यमनुरागयुक्तम् इति कलहंसस्य मतं चक्रवाकी न अनुमन्यते। एकस्य पुरुषस्य बह्वीषु स्त्रीषु समं प्रेम कदापि न प्रवर्तते इति मन्यमाना सा कथयति- एकस्याः स्त्रियः सामीप्ये अपि अपरां स्त्रियं भुञ्जानोऽयं स्वारोचिः मनागपि न लज्जते। इदृशो निर्लज्जः कथं धन्यो भवेत्?-

**चित्तानुरागो ह्येकस्मिन्नधिष्ठाने सखि।**
**ततोऽतिप्रीतिमानेष भार्यासु भविता कथम्।।[४]**

अत्र पुराणकारः दृढं प्रतिपादयति यत् चित्तानुरागः तु एकस्मिन्नेव भवति तर्हि नैकाभिः भार्याभिः एकस्य पुरुषस्य समानुरागः कदापि न शक्यो भवति।

चक्रवाक्यात्मानं कृतकृत्यं स्वकान्तं च धन्यं मन्यते। यतः तयोः दाम्पत्यं चित्तैक्यमयम् अद्वैतरसान्वितं च वर्तते

**कलहंसि पतिर्धन्यो मम धन्याहमेव च।**
**यस्यैकस्यां चिरं चित्तं यस्याश्चैकत्रा संस्थितम्।।[५]**

स्वारोचिः स्वविद्याप्रभावेण कलहंसीचक्रवाक्योः सम्भाषणं जानन् लज्जितोऽभवत् किन्तु कामासक्तिमूढः स तस्मात्कर्मणो न विरराम। तस्य बहुभार्यासक्तिं निन्दितुं पुराणकारः अपरं वृत्तान्तं निरूपयति।

समन्ताभिः क्रीडमाणः स सुरूपाभिः मृगीभिः परिवृत्तम् एकं मृगं ददर्श। तं मृगं जिघ्रन्त्यस्ता मृग्यः कामावेगं प्रदर्शितवत्य आसन्। मृगस्तासां प्रत्याख्यानं कुर्वन्नाह- ''अहं स्वारोचेः सदृशो निर्लज्जो नास्मि। भवत्यः तादृशान् कामुकान् प्रति गच्छन्तु। ''

**नाहं स्वारोचिस्तच्छीलो न चैवाहं सुलोचनाः।**
**निर्लज्जा बहवः सन्ति तादृशास्तत्र गच्छत।।[६]**

पुनः पुराणकारः उत्तानपादस्य नृपस्य उत्तमस्य कथायामपि एकपत्नीत्वस्य प्रतिषपनं करोति। बभ्रोः कन्या बहुला उत्तमस्य भार्या आसीत्। बहुलां प्रति अनुरक्तः सः अन्यां कामपि न कामयमास। किन्तु कर्कशा कलहप्रिया च बहुला सततं तस्य प्रतिकूलमाचरत्। तस्याः प्रतिकूलेन व्यवहारेण नितरां सन्त्रास्तः स एकदा तां तत्याज। भार्यावियुक्तः सोऽन्यां भार्यामानेतुं समर्थोऽपि एकपत्नीत्वं पालयन् काञ्चिदपि भार्यां न प्रतिजग्राह।

उत्तमस्य राज्ये निवसतः कस्यचिद् निर्धनस्य विप्रस्य भार्या केनचिदपहृता। सा कुरूपा कुलक्षणा चासीत्। विप्रः स्वपत्नीम् अन्वेष्टुं राजानं प्रार्थयत्। तां कुलक्षणां विस्मृत्य सुलक्षणां सुरूपां चान्यां भार्यां स्वीकर्तुं तस्मै विप्राय उत्तमः निवेदयामास। किन्तु तेन ब्राह्मणेन उत्तमस्य निवेदनं न स्वीकृतम्। भार्या सर्वदा रक्षणीयैव भवति इति श्रुतेः आदेशं स्मृत्वा स आह-

**पत्न्यानुकूला भाव्यं यथाशीलेऽपि भर्तरि।**
**दुःशीलापि तथा भार्या पोषणीया नरेश्वर।।[७]**

अनन्तरं द्विजभार्यायाः अन्वेषणं कुर्वन् उत्तमः कस्यचित् तापसमुनेः आश्रमम् आजगाम। तमागतं दृष्ट्वा मुनिः पूर्वं तु अर्घ्यम् आनेतुं शिष्यमादिदेश किन्तु पश्चात् किमपि विचार्य अर्घ्येण विना केवलेन सम्भाषणपूर्वकम् आसनदानेनैव तस्य स्वागतं चकार। अस्मिन् विषये उत्तमे पृष्टवति सति तेन मुनिना कथितं यत् स्वायम्भुवस्य मनोः कुले जातः त्वम् अवश्यमेव अर्घ्यमर्हसि किन्तु स्वकर्मजनितेन दोषेण त्वाम् अर्घ्ययोग्यम् अहं न मन्ये। धर्मपत्नीं त्यजता त्वया स्वधर्मोऽपि त्यक्त एव। अत्र पुराणकारः कथयति यद्यथा पत्नी विगुणमपि स्वभर्तारमनुसरति तथा विगुणापि भार्या भर्त्रा परिपालनीयैव-

**पत्न्यानुकूला भाव्यं यथाशीलेऽपि भर्तरि।**
**दुःशीलापि तथा भार्या पोषणीया नरेश्वर।।[८]**

इत्थं मार्कण्डेयपुराणे एकपत्नीत्वस्य प्रतिष्ठापनं दृश्यते। प्रणयिमिथुनस्य प्रणयो न केवलो दैहिकसम्बन्धपेक्षी किन्तु दाम्पत्यैकरसमयः सिद्धं भवति। पुराणकारः प्रतिपादयति यत् उभयोरपि परस्परावलम्बिनि निष्ठानिवार्या भवति।

**सन्दर्भः—**

1. मार्कण्डेयपुराण- अध्याय-21
2. तत्रैव
3. मार्कण्डेयपुराण- अध्याय-62
4. तत्रैव
5. तत्रैव
6. तत्रैव
7. तत्रैव

## शब्दब्रह्मः*

हानोपादानव्यापारात्मकव्यवहारेण अस्मिन् जगति मानवानां जीवनं प्रचलति। तत्र चज्ञानपूर्वक-व्यवहारः खलु मानवानां हानोपादानादिभिः तत् तत् प्रयोजनं साधयितुं शक्नुयात्। ज्ञानं च खलु न निर्विषयकं विषयः पुनः केनचित् नाम्ना असंश्लिष्टो न भवितुमर्हति। इदं जानामि एतद् जानामि इत्याकारकं सर्वत्र ज्ञानं प्रसिद्धं लोके। अयं गौः अयमश्वः इत्येवं रूपेण प्रतीयमानोऽर्थः सर्वत्रानुकूलप्रतिकूलादिभावैः अस्वितः प्रतिव्यक्तिः तत् तदर्थं साधयति। चाक्षुषादिज्ञाने तथा अनुमित्यादौ च सर्वत्रैव नामधेयेनान्वितानाम-र्थानामवभासः सुतरां सिध्यति। भर्तृहरिणा उक्तं यथा-

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते[1]॥**

वैयाकरणानां मते ध्वनिस्फोटोभयस्वरूपः शब्दः इति। अथ शब्दशब्दस्य वाच्यार्थनिरूपणानन्तरं शब्दस्वरूपविषयिनी जिज्ञासा जागर्ति। प्रथमं तावत् शब्दबिन्सते किं शब्दस्वरूपमिति विचार्यते। महाभाष्यकृता शब्दानुशासनप्रयोजनावसरे त्रयोदशगौणप्रयोजनानि निरूपितानि। तत्र 'चत्वारि' इति प्रयोजनसङ्केतेन वेदपठितं ऋग्द्वयं संगृहीतम्। यथा

**चत्वारि वाक् परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**

*श्रीलेखादासः
आचार्यः, साहित्यविभागः,श्रीसदाशिवपरिसरः, पुरी,राष्ट्रियसंस्कृतसंस्थानम्

[1] वाक्यपदीयम्, ब्रह्मकाण्डम्, श्लोकः-१२३.

**तुरीयं वाचो मनुष्या वदन्ति॥**

अन्या च –

**'चत्वारि शृङ्गा त्रयो अस्य पादा[2]'।**

अत्र चत्वारिपदसन्निवेशेन उभयत्र नामख्यातोपसर्गनिपातरूपा वाक् उद्दिष्टा। परन्तु द्वितीस्याम् ऋचि शेषोक्त पदद्वयेन एषां चतुर्विधानां पदानां प्रत्येकं परापश्यन्तीमध्यमावैखरीरूपम् अवस्थाचतुष्टयं सङ्केतितम्। अत्रेदं बोध्यम्- **वैयाकरणमते शब्दः ध्वनिस्फोटरूपोपादद्वयात्मकः[3],** शब्दशास्त्रे सार्थकशब्दस्यैव शब्दशब्दाभिधेयत्वात्।

बौद्धमते शब्दः भौतिकः एव। स च परमानूनां संघातरूपः। तत्र परमाणुसमष्टिरूपतैव ग्राह्यानां वस्तूनां न तु अवयविरूपता। अतः शब्दोऽपि परमाणुसंघात एवेति युज्यते। तथा चोक्तं- **"सञ्चिता दशरूपिनः[4]"।**

बौद्धानये रूपरसगन्धस्पर्शशब्दाः रूपस्कन्धान्तर्भूक्ता एव। तत्र वर्णानां संस्थानरूपत्वेन रूपात्वकत्वा भावे अपि सविकारित्वेन रूपस्कन्धानुर्गतत्वात् रूपस्वरूपत्वमिष्टम्। वस्तुतः तु भौतिकत्वेन शब्दस्य रूपस्कन्धानुर्गतत्वं युज्यते एव। आकाशगुणः शब्दः इति वैशेषिकप्रक्रिया न खलु वौद्धसम्मता। तन्मते शब्दस्पर्शायतनं श्रवणेन्द्रियम्। तच्च नाकाशात्मकम्। तथा च स्फुटार्थटीकायाम्- "चक्षुः स्पर्शायतनं, यावत् मनः स्पर्शायतनम्"। अत्र स्पर्शशब्दश्च अनुभवपरः। न तु त्वगिन्द्रियग्राह्यस्पर्शमात्रपरः।अतः चक्षुरादिभिरिन्द्रियैः यो न वुध्यते, केवलं श्रवणेन्द्रियेण गृह्यते स एव शब्दः।

यद्यपि बौद्धमते अभिव्यक्तिसंज्ञकः अस्फुटः कश्चित् शब्दोऽस्ति, श्रवणेन्द्रियेण स न गृह्यते, तथापि श्रवणेन्द्रियग्राह्ययोग्यतावत्त्वं तत्र शब्दलक्षणं भवितुमर्हति। तथा हि, यावत् अस्फुटतां न जह्यात् तावत् श्रवणेन्द्रियेण अग्राह्योऽपि स्फुटतामापद्यमानः, स श्रवणेन्द्रियेण गृह्यते। अतः श्रवणेन्द्रियग्राह्यतावच्छेदकधर्मवत् तु रूपं स्वरूपयोग्यत्वम् अविज्ञप्तिशब्दे अपि व्याहतम्। अतो भौतिकत्वे सति चक्षुजिह्वा घ्राणत्वग्भिः अग्राह्यत्वं शब्दत्वम् इति एवं साधारणलक्षणं भवितुमर्हति।

शब्दस्य आकाशगुणत्वं बौद्धैः स्पष्टम्। तथा हि, यदि शब्दः आकाशगुणः एव स्यात् तर्हि आकाशस्य सर्वव्यापकतया एकत्र उत्पन्नः शब्दः सर्वैः एव सर्वत्र उपलभ्यते। न च एतद् अस्ति। अतः आकाशगुणः न शब्दः। तथा चोक्तं प्रमाणवार्तिकभाष्ये- **"यद्याकाशगुणता शब्दस्य न स्यात् उत्पत्तिस्थान एव श्रुयते। आकाशगुणत्वे तु तद् योगादन्यत्रापि श्रुतिः। नैतदस्ति। तत्रैव तस्य ग्रहणाद् रूपवत् इति[5]।** तस्मात् बौद्धनये शब्दस्य केवलं क्षणिकवर्णमयत्वम्।

अर्थेन स्वाभाविकसम्बन्धाभावात् शब्दानां केवलं वक्तृ विवक्षितार्थप्रतिपादकत्वम्। तथा हि कश्चित् पुरुषविशेषः सहसा किञ्चिदभिनवं समुपस्थितं वस्तु दृष्ट्वा परत्र स्वबोधसंक्रान्तये यत् किञ्चिद् ध्वनिं व्यवहरति तादृश एव ध्वनिः तदारभ्य तत्तदर्थबोधकत्वेनपरिकल्पितो भवेत्। अतएव देशभेदे कालभेदे च एकस्य शब्दस्य विभिन्नार्थबोधकत्वं परिलक्ष्यते।

यैसु कैश्चित् शब्दानां नित्यत्वम् आस्थीयते ब्रह्मस्वरूपता च, तदपि न न युक्तम्। तथा हि तेषामाशयः पूर्वापरादिविभागरहितं सुतरामेवानुत्पन्नम् अविनाशि यत् शब्दमयं ब्रह्म तस्यैव परिणामः रूपादिर्भाव इति। तथा हि वर्णानां क्रमोच्चारितानाम् एकैकशो मिलिततया वार्थबोधकत्वासम्भवात् अर्थबोधस्य च सर्वत्र प्रसिद्धतया शब्दं विना चार्थबोधानुपपत्तेः नित्य एकोऽखण्डः शब्दः सर्वत्र तत् तद् वर्णैरभिव्यज्यमानः तत्तद र्थाकारतामादत्ते[6]।

तत्रेदमुच्यते बौद्धैः- यच्च शब्दमयत्वं जगतः साध्यते तत् किं शब्दपरिणामत्वात् शब्दजन्यत्वाद्वा भवतामिष्टम्। तत्र नाद्यः कल्पः। शब्दपरिणामस्यैव अनुपपत्तेः। तथा हि नित्यः अखण्ड एकः शब्दो नीलाद्यर्थाकारेण परिणममाणः किं स्वाभाविकं शब्दस्वरूपं परित्यज्य अर्थाकारेण प्रतिपद्यते अपरित्यज्य वा। तत्र यदि आद्यः पक्षः अभिमतः स्यात्तदा अनादिनिधनमिति नोपपद्यते। यतः शब्दस्य अक्षरत्वम् अविनाशित्वञ्च प्रतिपादितमनेन विशेषणेन। यदि तु पुनः अनित्यनीलाद्याकारः एव शब्दः स्वाभाविकं शब्दस्वरूपं परित्यज्य प्रतिपद्यते तर्हि तस्य अनादित्वम् अविनाशित्वञ्चहीयते। अथ यदि स्वाभाविकं स्वरूपम् अपरित्यज्यैव नीलाद्यर्थाकारेण शब्दस्य परिणामस्तदा नीलादिसंवेदनकाले बधिरस्यापि शब्दसंवेदनम् आपद्यते नीलादिसंवेदनवत् तदव्यतिरेकात् शब्दस्य तथा चोक्तं तत्त्वसंग्रहे

**इति सञ्चक्षते येऽपि ते वाच्या किमिदं निजम्।**
**शब्दरूपं परित्यज्य नीलादित्वं प्रपद्यते॥**
**न वा तथेति यद्याद्यः पक्षः संश्रीयते तदा।**
**अक्षरत्ववियोगः स्यात् पौरस्त्वात्मविनाशतः॥**
**अथाप्यन्तरः पक्षः तत्र नीलादिवेदने।**
**अश्रुतेरपि विस्पष्टं भवेत् शब्दात्मवेदनम्[7]॥**

ननु यथा बौद्धमते क्षणिकत्वं नीलाद्यव्यतिरिक्तं नीलादिसंवेदनैरपि न संगृह्यते तद्वत् शब्दरूपमिति चेत् न। नीलादिसंवेदनेक्षणिकत्वं न गृह्यते इति तु न। किन्तु गृहीतमपि क्षणिकत्वं निर्विकल्पेन चित्तेन भ्रान्तिवशात् गुणान्तरसमारोपात् न विनिश्चीयते। अतः अनुभवापेक्षया क्षणिकत्वं गृहीतम् एव। निश्चयज्ञानापेक्षया तु गृहीतमपि क्षणिकत्वं ज्ञानभेदेन एकस्य गृहीतत्वम् अगृहीतत्वञ्च अविरुद्धम्। न च भवतां पक्षे एवं वक्तुं युज्यते।

तथा चोक्तं तत्त्वसंग्रहे-

**अस्या वित्तौ हि नीलादेरपि न स्यात् प्रवेदनम्।**

[1] ऋग्वेद-१.१६४.४५
[2] ऋग्वेद-४.५८.३
[3] "द्वावुपादानशब्देषु..........................प्रयुज्यते॥"- वाक्यपदीयम्, ब्रह्मकाण्डम्, श्लोक-४४
[4] अभिधर्मकोशः, कोशस्थान-१, कारिका-३५.
[5] परार्थानुमानप्रकरणम्, कारिकाभाष्यम्-७१
[6] अनादिनिधनं ब्रह्मशब्दतत्त्वं.....................जगतो यतः॥– वाक्यपदीयम्, ब्रह्मकाण्डम्, श्लोक-1.
[7] तत्त्वसंग्रह श्लोकः-१२९-३१.

**ऐकात्मात् भिन्नधर्मत्वे भेदोऽत्यन्तं प्रसज्यते॥**
**विरुद्धधर्मसङ्गो हि बहूनां भेदलक्षणम्।**
**नान्यथा व्यक्तिभेद्यनां कल्पितापि भवेदसौ[1]॥**

किं बहुना शब्दानां नित्यानां भावरूपताधानाङ्गीकारे भावानामपि नित्यता प्रसज्येत। तथा हि सति सर्वकालं भावानां शब्देन सह यौगपद्यम्। अतः परिणामात् वा न प्राप्नोति। तथा चोक्तम्-

**नित्यशब्दमयत्वे च भावानामपि नित्यता।**
**तदयोगपद्यतः सिद्धः परिणामो न सङ्गतः[2]॥**

एतेन शब्दजन्यत्वपक्षोऽपि निरस्तः। यतः जन्यत्वं यदि शब्दपरिणामरूपत्वं तर्हि पूर्वोक्तदोषानुषङ्गः, यदि तु शब्दैः आरभ्यमानत्वं, तदापि शब्दार्थस्य भेदः स्वीकर्तव्यः आरम्भवादिनये कार्यकारणयो-रत्यनुभेदाङ्गीकारात्। तथा च भवति सिद्धान्तहानिः। कार्यकारणयोः अभेदपक्षम् आश्रित्यैव शब्दस्य अर्थाकारत्वाङ्गीकारात्।

अतः शब्दब्रह्मादिनां मतं नैव युक्तियुक्तमिति बौद्धानामाशयः।

जैनास्तु शब्द्यते आहूयते अनेन अभिप्रायेण इति व्युत्पत्या एकार्थप्रतिपादनेच्छया कण्ठताल्वाद्यभिधातजन्यानाम् उच्चारितानां ध्वनीनां यथाक्रमविन्यासमेव शब्दस्वरूपं मन्यन्ते। तथा चोक्तं स्याद्वादमञ्जर्याम्- 'शब्दस्तु रूढितो यावन्तो ध्वनयः कस्मिंश्चिदर्थे प्रवर्तन्ते.........शब्द्यते आहूयते अनेन अभिप्रायेण अर्थ इति निरुक्तात् एकार्थप्रतिपादनाभिप्रायेनैव पर्यायध्वनीनां प्रयोगात्।[3]' शब्दस्य परिणामित्वमेव कथमिति चेत् तत्रोच्यते, अनुमानेनैव शब्दस्य परिणामित्वसिद्धिः। तथा हि **शब्दः परिणामीजन्यत्वात् पटादिवत्।**[4] एवं प्रकारेण शब्दस्वरूपमाश्रित्य विविधानि मतानि वर्णितानि। केचित् शब्दस्य नित्यत्ववादिनः केचिदनित्यत्ववादिनः इति आलोचितानां शब्दस्वरूपविचाराणां द्वौ पक्षौ सारतया प्राप्तौ। तत्र च उच्चारणात् पूर्वं शब्दस्यानुपलब्धेः तथा उच्चारणानुरूपमपि यथोक्तं कालानन्तरं तथैवानुपलब्धेः शब्दस्य अनित्यत्वपक्ष एव रुचिकरः। पुनः लौकिकी रीतिः न युक्तिविरुद्धाः, नापि वा अर्थप्रतिपादनासमर्था इति न्यायवैशेषिकमता-लोचनावसरे विशेषतः प्रतिपादयिष्यते। तस्मात् शब्दानित्यत्वपक्षोऽत्र ग्राह्य इति।

**सन्दर्भग्रन्थसूची**

मल्लिसेना, स्याद्वादमञ्जरी, मुम्बाइ,,१९३३.
स्वामिद्वारिकादास शास्त्री, तत्त्वसंग्रहः, बौद्धभारती, वाराणसी, १९६७.
तारानाथ न्यायतर्कतीर्थ एवं अमरेन्द्रमोहन न्यायतर्कतीर्थ, न्यायदर्शन, २य संस्करण, मुंशीराम मनोहर लाल पब्लिशर्स, १९८५.
के.वी.अभ्यङ्कर एवं वी.पी.लिमये, वाक्यपदीयम्, पूना विश्वविद्यालयः, पूना, १९६५.
शालिग्राम शास्त्री, साहित्यदर्पणः, ९म संस्करण, मोतीलाल बनारसीदास, दिल्ली, १९९२.
शोभाकान्त मिश्र, शब्दार्थतत्त्व, बिहार हिन्दी ग्रन्थ अकादमी, पटना, १९८६.

## योगदर्शने ईश्वरस्य स्वरूपविचारः*

**प्रस्तावना** –

हिन्दुसंस्कृतौ ईश्वरवादः सुन्दरतया दरीदृश्यते। ईश्वरस्तु न केवलं हिन्दुसंस्कृतौ अपि ईसाईसंस्कृतौ मुसलमानसंस्कृतौअपि मन्यते। हिन्दवस्तु हरिइत्यादिभिः अभिधाभिः कथयन्ति ,कृष्णः ,रामः ,नारायणः ,परमात्मा ,ईश्वरः ,ओम् ,।खुदा इत्यादिभिः ,मुसलमानः अल्लाहः ,गाँड-ईसाई अभिधामिः कथयतंनीरःआपःइत्येतानि सर्वाणि अपि जलस्य पर्यायपदानि ,वाटरः ,।वस्तुतः सर्वेषामपि अर्थस्तु जलमेव ।तथैव ईश्वरोऽपि एक एव।

अस्माकं श्रुतित्येतेषु ग्रन्थेषु ईश्वरस्य अस्तित्वमङ्कितमस्ति-भागवत-गीता-पुराण-इतिहास-दर्शन-स्मृति-। तदत्र अहंयोगदर्शनम् अधिकृत्य ईश्वरस्वरूपं समासेन दर्शयामि।

योगदर्शने महर्षिपतञ्जलिः कथयति –

**"क्लेशकर्मविपाकशयैरपरामृष्टः पुरुषविशेष ईश्वरः[5]॥"**

---

[1] तत्त्वसंग्रहः, श्लोकः-१३४-१३५.
[2] तत्त्वसंग्रहः, श्लोकः-१३५.
[3] स्याद्वादमञ्जरी, २७ कारिकाव्याख्या।
[4] परीक्षामुखसूत्राणि, षष्ठः समुद्देशः, ३१तम सूत्रम्।

***Research scholar - Dibyendu kumar Mandal**
Rashtriya Sanskrit Sansthan (Guruvayoor campus).
Contact details – 9804506813.
Email – dibyendukumar10@gmail.com
[5]योगसूत्रम् १२४.

क्लेशो भवति अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः।[1]धर्माधर्मरूपं कर्म तेषां संस्कारः। विपाको भवतिसति मूले तद्विपाको जात्यायुर्भोगाः[2]अस्य कर्मफलस्य अनुरूपाः वासना भवन्ति आशयः। अपरामृष्टो भवति अनारोपितः असंस्पृष्टो वा। एते धर्माः ईश्वरे आरोपिता न भवन्ति। ईश्वरस्तु त्रिकालातीतः त्रिगुणातीतः पुरुषविशेषः अपरिणामी। पुरुषसूक्तस्य प्रथमो मन्त्रो भवति सहस्रशीर्षा पुरुषः। योगी याज्ञव ल्क्यस्य मतानुसारेण तु सूत्रकारस्य सूत्रानुरूपः –

**“क्लेश कर्म विपाकदैर्वासनाभिस्तथैव च।**

**अपरामृष्टमेवाह पुरुषम् ईश्वरः श्रुतिः।।“**

अस्य पुरुषस्य पूर्वमन्यत् किमपि नासीत् तदपि समर्थयन्ती श्रुतिः “आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषदिति[3]।“अयमीश्वररूपः आत्मा एव पूर्वे विद्यमानः आसीत्अन्यस्य कस्यचित् अस्तित्वं नासीत्,।तस्मात् आत्मपुरुषः एव ईश्वरः । तथा च भाष्यकारो लिखति यत् – तस्माद् यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः।[4]
गीतायामपि उक्तमस्ति यत् –

**यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।**

**तत्तदेवावगच्छ त्वं मम तेजोऽशंसम्भवम्।।[5]**

**“तत्र निरतिशयं सर्वज्ञवीजम्[6]।।“**

ईश्वरे सर्वज्ञवीजस्य अत्यन्तातिशयता विद्यते। ईश्वरस्य ज्ञानं अन्यः कोऽपि अतिक्रामतुं न समर्थो तस्माद्धेतोःतस्य ज्ञानमेव सर्वज्ञायाः साधमस्ति। तथा च अनुमानं भवति सर्वज्ञवीजः काष्ठाप्राप्तः सातिशयत्वात् परिमाणवत्। अपि च गीतायां शाङ्करभाष्यस्य उपोद्घाते दृश्यते – जगतः स्थितिकारणं प्राणिनां साक्षात् अभ्युदयनिःश्रेयस हेतुः.... सम्बभूव।[7]

**“पूर्वेषामपि गुरुः कालेनानवच्छेदात्[8]।।“**

अयमीश्वरस्तु ब्रह्मादीनां कृतेऽपि शिक्षां प्रदत्तवान् यतो हि तस्य कालेन अन्तो न भवति। मुण्डकोपनिषदि दृश्यते यत्–

**“ओं ब्रह्मा देवानां प्रथमः सम्बभूव।**

**विश्वस्य कर्ता भुवनस्य गोप्ता।**

**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्**

**अथर्वाय ज्येष्ठ्यपुत्राय प्राह[9]।।“**

तथा च शाङ्करभाष्ये दृश्यते यो असावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तसनातनः। सर्वभूतमयोऽचिन्त्यः स एषः स्वयमुद्भवौ।

योगदर्शने सूत्रमेकमस्ति यत् तस्य वाचकः प्रणवः इति। अर्थात् ईश्वरस्तु प्रणवस्य वाच्यः। प्रणवः एव श्रेष्ठः, अपि परंब्रह्म अपरब्रह्म चेति। अस्याम् अवस्थायां तु पुरुषः ब्रह्मलोके अपि महीयान् भवति। तद्यथा

**एतदालम्बनं श्रेष्ठम् एतदालम्बनं परम्।**

**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते।।[10]**

प्रणवस्य महिमा तु माण्डूक्योपनिषदि अपि विशदीकृता अस्ति। तद्यथा –

**ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव।।[11]**
तथा च दृश्यते –**ओमित्येवं ध्यायथ आत्मानम्।**[1]

[1]तत्रैव २ ३.
[2]तत्रैव २१३.
[3] ऐतेरयोपनिषत् ११.१.
[4]योगसूत्रम्, भाष्यम् – १.२४
[5]श्रीमद्भगवद्गीता ४१.१० –
[6] योगसूत्रम् १२५.
[7]गीतायाः शाङ्करभाष्येउपोद्घातम्,
[8]योगसूत्रम् २६.१ -
[9] मुण्डकोपनिषत् ११.१.
[10]कठोपनिषद् १७.२.१ –
[11]माण्डूक्योपनिषद् १ -

अपि च – **ओमिति ब्रह्म॥[2]ओमित्येतेनैवाक्षरणेन, परं पुरुषमभिध्यायीत॥[3]**

## केवलाद्वैतविशिष्टाद्वैताचिन्त्याभेदाभेददर्शनदृष्ट्या आत्मनः स्वरूपविवेचनम्*

**प्रवृत्तिबीजम्** –

विद्यते खलु भुवि प्रपञ्चसत्यत्वबुद्धिनाशिनी देहादिविलक्षणरूपा प्रत्यगात्मस्वरूपा यथार्थावबोध-रूपिणी अखिलानर्थरूपा संसारहेतुभूता अविद्याग्रन्थिभेदिनी संशयराक्षसनाशमहास्त्रयुक्ता उपनिषदिति। अनया हि ज्ञायते "अहं ब्रह्मास्मि", "तत्त्वमसि", "अयमात्मा ब्रह्म", "सर्वं खल्विदं ब्रह्म", "प्रज्ञानं ब्रह्म' चेति जीवब्रह्मैक्यम्। जीवब्रह्मणोरैक्यरूपोपनिषदर्थप्रतिपादनपरत्वात् श्रीमद्भगवद्गीताया गीतोपनिषत्त्वव्यवहारः। श्रूयते अपि "श्रीमद्भगवद्गीतासु उपनिषत्सु" इति। नैकानि व्याख्यानानि अस्याः श्रीमद्भगवद्गीतायाः सन्ति। यथा भगवच्छङ्कराचार्यकृतं केवलाद्वैतपरकं श्रीमद्रामानुजाचार्यकृतं विशिष्टाद्वैतपरकं पूज्यपादबलदेव-विद्याभूषणकृताचिन्त्यभेदाभेदपरकं श्रीमदानन्दतीर्थकृतद्वैतपरकं श्रीमद्वल्लभाचार्यकृतशुद्धाद्वैतपरकं चेत्यादीनि भाष्याणि विद्यन्ते। भिन्नरूपेण प्रतीयमानयोः जीवब्रह्मणोः सत्यत्वात् उभयोरैक्यमसिद्धमिति केचन। सर्वस्य ब्रह्माभेदत्वादविद्यया च कल्पितभेदत्वात् जीवब्रह्मैक्यं सिद्धमेवेत्येके। "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे मतम्' इति श्रुत्यनुसारेण जीवस्य ब्रह्मणः जगतश्च सत्यत्वात् तेषामैक्यमप्यसिद्धमित्यपरे। ईश्वरजीवप्रकृतिकालानां नित्यत्वन्तत्रापि च जीवेश्वरयोरचिन्त्यशक्तिप्रभावाद्भेदाभेदौ अंशांशिभावत्वञ्चेत्येके। एवं बहुषु मतेषु भारतवर्षस्य सनातनसंस्कृतौ भगवच्छङ्कर – रामानुज- बलदेवविद्याभूषणोक्तानां मतानाम् अतीवसुप्रसिद्धिःअस्ति।

आर्यमनीषिमनिषाजगत्याम् आसामेव उपनिषदां निष्कर्षो भगवद्गीताशास्त्रमस्ति। प्राच्ये पाश्चात्ये च जगति भगवद्गीतामाश्रित्य अनल्पानि आलोचनानि अदर्भाश्च लेखन्यः सञ्चालिता रराजन्ति। नैका अर्वाचीनाः टीका अत्याधुनिकञ्च रहस्योत्घाटकं रचनं समजोनि किन्तु खेदस्य अयमेव विषयो यत् भारतीयार्षमनीषिणां श्रीशङ्कररामानुजमध्ववल्लभप्रभृतीनां भाष्यग्रन्थानां टीकानाञ्च आलोचनं प्रायशो न कृतम। अर्वाचीनाः तथाकथितशिक्षिताः मूढधियः साम्प्रदायिकानि मत्वा एतानि सर्वादरयाणि मतानि परिजिहीर्षन्ति। वस्तुतः एषु भाष्येषु यथा वैदान्तिकं समीक्षणमधिकृतं तथा सामाजिको लोककल्याणकरपक्षोऽपि अवसरं लभते। अस्य लोकहितकारकपक्षस्य आविष्करणं किञ्च वर्तमानेषु मतपार्थक्येषु अपि व्यख्यानानाम् एतेषां एकवाक्यता अवश्यम्भावी वर्तते। तामेव अवशम्भावितां हृदिकृत्य केवलाद्वैतविशिष्टाद्वैताचिन्त्यभेदाभेददर्शनदृष्ट्या आत्मनः स्वरूपविवेचनम् इत्यस्मिन् विषये शोधकार्याय समीहा मे समजोनि। इदमेव शोधप्रबन्धस्य मम प्रवृत्तिबीजम्।

---

[1]मुण्डकोपनिषद् ६.२.२ –
[2]तैत्तिरीयोपनिषद् ८.१ –
[3]प्रश्नोपनिषद्५.५

***शोधार्थी – सन्दीपचटर्जी**
**विभागः - अद्वैतवेदान्तः**
**राष्ट्रियसंस्कृतसंस्थानम् श्रीसदाशिवपरिसरः, पुरी**

**आत्मनः अद्वितीयत्वम्-**

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत।**
**तद् धावतोऽन्यान्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति॥[1]**

आत्मतत्त्वम् अविचलितत्वात् अद्वितीयमस्ति, मनसः अपेक्षया अपि तीव्रगामी भवति तथा च आनिदकालादेव सर्वत्र अर्षत्। देवाः इन्द्रियाणि च एनत् प्राप्तुं न समर्थाः सन्ति। अयमात्मा स्थिरः सन् अपि धावन् अन्यान् अत्येति। तस्मिन् आत्मनि मातरिश्वा अपः दधाति। तथा च भगवती श्रुतिः कथयति-

**वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव॥**
**सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चक्षुषैर्बाह्यदोषैः।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥[2]**
**येन रूपं रसं गन्धं शब्दान् स्पर्शान् च मैथुनान्।**
**एतेनैव विजानाति किमत्र परिशिष्यते एतद्वैतद्॥[3]**
**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥**
**इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥[4]**

**आत्मनः सर्वान्तरत्वम्-**

**तदेजति तन्नैजति तद्दूरे तदु अन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः॥[5]**

अयमात्मा एजति चलति पुनः न एजसि चलति च। अयं तु दूरे अन्तिके च तिष्ठति, तथा च श्रुतिः **य आत्मा सर्वान्तरः।**[6] अयमात्मा अस्य सर्वस्य नामरूपप्रक्रियात्मकस्य जगतो बहिः अन्ते च तिष्ठति। तथा च श्रुतिः **प्रज्ञानघन एव**[7]।

**आसीनो दूरं ब्रजति शयानो याति सर्वतः॥[8]**

**आत्मनः गुणाः-**

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥[9]**

अर्थात् आत्मा तु सर्वत्र व्याप्तः तथा च भाष्ये उक्तमस्ति **पर्यगात् परि समन्ताद् अगात् गतवान् आकाशवत् व्यापी इत्यर्थः,**[10] तेजस्वी, अशरीरी, क्षररहितः, स्नाय्वादीभ्य स्थूलावयवरहितः, निर्मलः, शुभाशुभकर्मफलेन अप्रभावितः, सर्वद्रष्टा, मनसः शासनकर्ता तथा च उक्तमस्ति **मनीषा मनस ईषिता सर्वज्ञ ईश्वर इत्यर्थः,**[11] स्वयम्भूः, नित्यः सनातनः, शाश्वतः, अनादिकालात् स्थितः इति।

तथा च कठोपनिषदि दृश्यते यत् –

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति॥[12]**
**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः।**
**तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्॥[13]**

---

[1]ईशोपनिषद् ४
[2]कठोपनिषत् -२.२,१०-११
[3]कठोपनिषद् – १.२.३
[4]तत्रैव – १.३.३-४
[5]ईशोपनिषद् - ५
[6]बृ.उ.३.४.१
[7]तत्रैव - ४.५.१३
[8]कठोपनिषद् – १.२.२१
[9]ईशोपनिषद् - ८
[10]शाङ्करभाष्यम्, ईशोपनिषद् - ८
[11]तदेव
[12]कठोपनिषद् – २.२.१५
[13]श्वेताश्वतरोपनिषद् – ३.२०

मन्त्रेऽस्मिन् आत्मनः स्वरूपं विविच्य तस्य फलमपि उक्तमस्ति। आत्मा तु अणोः अपि अणुः, महतोऽपि महान्, जीवस्य अन्तःकरणे स्थितो भवति। एतस्य आत्मनः स्वरूपं यो विजानाति सः शोकरहितो भवति।

पुनश्च दृश्यते यत् –

**वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात्।**
**जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम्॥**[1]

अर्थात् आत्मा तु नित्यो विभुः सर्वगतः पुराणः जरारहितः इति इमे गुणाः आत्मनि विद्यन्ते।

**आत्मनः सर्वनियन्तृत्वम् –**

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरिमुच्य धीराः प्रेत्यास्माल्लो-कादमृता भवन्ति॥[2]

अर्थात् यः खलु श्रोत्रस्यापि श्रोत्रम्, मनसोऽपि मनः, वाचोऽपि वाक्, प्राणस्यापि प्राणः, चक्षुषोऽपि चक्षुः सः आत्मा भवति। एतादृशं तत्त्वं विज्ञाय विवेकिनः पुरुषाः संसारात् अस्मात् मुक्ताः सन्तः अमरत्वं प्राप्नुवन्ति। तथा च श्रुत्यन्तराणि दृश्यन्ते –

**आत्मनैवायं ज्योतिषास्ते,[3] तस्य भासा सर्वमिदं विभाति,[4] येन सूर्यस्तपति तेजसेद्धः।[5]**

**आत्मनः अज्ञेयत्वम् अनिर्वचनीयत्वम् –**

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे।[6]**

विषयेऽस्मिन् श्रुत्यन्तराणि दृश्यन्ते यथा –

**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता।**[7]
**विज्ञातारमरे केन विजानीयात्।**[8]

**आत्मनः एकत्वम्-**

उपनिषदि आत्मनः पादत्रयमपि प्रतिपादितमस्ति। परन्तु आत्मा तु एक एव। तर्हि कथं तर्हि पादत्रयमस्ति इति प्रश्नो जागतिरो भवति। तस्माद्धेतोः आत्मनः पादत्रयमादौ प्रतिपाद्य आत्मनः एकत्वं प्रतिपाद्यते –

आत्मनः प्रथमः पादः वैश्वानरः। विषयेऽस्मिन् भगवती श्रुतिः कथयति यत् –

**जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः॥**[9]

जाग्रदवस्था यस्य स्थानम्, यो बाह्यान् विषयान् प्रकाशयति, सप्ताङ्गविशिष्टः, एकोनविंशतिमुखः स्थूलभूग्वैश्वानर एव आत्मनः प्रथमः पादः। सप्ताङ्गस्य विषये उच्यते यत् – **तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मामा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ।**[10]

आत्मनो द्वितीयः पादो भवति तैजसः। विषयेऽस्मिन् भगवती श्रुतिः कथयति यत् –

**स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखःप्रविविक्तभुक्तैजसो द्वितीयः पादः॥**[11]

तैजस्य स्थानं भवति स्वप्नम्। तैजसस्तु सूक्ष्मविषायाणां भोक्ता भवति। तैजस एव द्वितीयः पादः आत्मनः।

आत्मनः तृतीयः पादो भवति प्राज्ञः। विषयेऽस्मिन् भगवती श्रुतिः कथयति यत् –

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः॥**[12]

प्राज्ञस्य स्थानमस्ति सुषुप्तिः। अयं तु एकीभूतः प्रकृष्टो ज्ञानस्वरूप आनन्दमयो भवति अपि च आनन्दस्य भोक्ता एवञ्च चेतनमुखविशिष्टो भवति। आनन्दभुक् इत्यस्य विषये उक्तमस्ति यत् – **एषोऽस्य परम आनन्दः।**[13]

पञ्चदश्यां तु आत्मा चतुर्धा इत्युक्तोऽस्ति। कूटस्थः, ब्रह्म, जीवः ईशश्चेति। अयं च चतुर्विधविभाग एकस्यैव आत्मनः चितिचैतन्यादि पर्यायस्यास्ति। यथा एकस्यैव आकाशस्य चातुर्विधं रूपं भवति यथा– घटाकाशः, जलाकाशः, मेघाकाशः, महाकाशश्चेति तथा च उक्तमस्ति –

**कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा।**

---

[1]श्वेताश्वतरोपनिषद् –३.२१
[2]केनोपनिषद् – १.२
[3]बृ.उ. ४.३.६
[4]क.उ.२.२.१५, श्वे.उ. ६.१४, मु.उ. २.२.१०
[5]तै.ब्रा.३.१२.९.७
[6]केन.उ. १.३
[7]श्वे.उ.३.१९
[8]बृ.उ.२.४.१४
[9]गौ.का. ३
[10]छा.उ.५.१८.२
[11]गौ.का. ४
[12]गौ.का. ५
[13]बृ.उ.४.३.३२

**घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥**[1]

**कूटस्थात्मनः स्वरूपम् –**

कूटस्थात्मा नाम कूटवत् निर्विकारः आत्मा। कूटं हि नाम अयोघनः। स्थूलदेहेन सूक्ष्मदेहेन च अवच्छिन्नो य आत्मास एव कूटस्थ इत्युच्यते। देहद्वयस्य अस्य अयमात्मा आधारो भवति। परन्तु न विक्रियते विकृतिं वा न आपद्यते, यथा कर्मारस्य अयोघनः लोहखण्डस्याधारो भवति तथापि विकारं न आप्नोति। तथैव देहद्वयेन अवच्छिन्नो आत्मा विकृतिं नाप्नोति। विकृतिस्तु देहद्वयस्य न तु आत्मनः। अतः अयमात्मा कूटस्थ इत्युच्यते। यथा लोहखण्डो विकारमाप्नोति न तु अयोघनः। अतः कूटवत् अयोघनवत् निर्विकारत्वादात्मा कूटस्थ इत्युच्यते तथा च दृश्यते –

**अधिष्ठानतया देहद्वयावच्छिन्नचेतनः।**
**कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते॥**[2]

**आत्मनः असङ्गत्वम् –**

**कर्त्रादिभावं प्रतिपद्य राजते यत्र स्वयं भाति ह्ययं परात्मा।**
**धीमात्रकोपाधिरशेषसाक्षी न लिप्यते तत्कृतकर्मलेशैः॥**
**यस्मादसङ्गस्तत एव कर्मभि र्न लिप्यते किञ्चिदु पाधिना कृतैः॥**
**सर्वव्यापृतिकरणं लिङ्गमिदं स्याच्चिदात्मनः पुंसः।**
**वास्यादिकमिव तक्षणस्तेनैवात्मा भवत्यसङ्गोऽयम्॥**[3]

गीतायाम् आत्मस्वरूपमधुना विचार्यते –

**न जायते म्रियते वा कदाचिन्नायं भूत्वाऽभविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥**
**वेदाविनाशिनं नित्यं च एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ कं घातयति हन्तिकम्॥**
**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥**
**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥**
**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥**
**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥**[4]

**भाष्याकाराणां मतम्–**

**केवलाद्वैतनये –**

आत्मा न जायते अर्थात् आत्मनो वस्तुविक्रिया न विद्यते। न म्रियते इत्यनेन तु तस्य विनाशलक्षणा अर्थात् विक्रिया निषिध्यते। श्लोके प्रयुक्तस्य कदाचित् इत्यस्य पदस्यार्थो भवति सर्वेऽपि विकाराः प्रतिषेधिताः सन्ति। यस्मात् अयमात्मा भूत्वा अर्थात् जनिक्रियामनुभूय ततः परम् अभावं न प्राप्नोति तस्माद्धेतोः न म्रियते इति विशेषणम् आत्मनः कृते प्रदत्तमस्ति। वाशब्दाद् नशब्दाच्च इदं अवबुध्यते यत् आत्मा अभूत्वा भविता वा शरीरवद् न भूयः पुनो तस्मान्न जायते इति। यो हि अभूत्वा भवति स जायते परन्तु आत्मा तादृशो नास्ति तस्मात् स न जायते। यतो हि आत्मा न जायते ततः स अजः, न म्रियते तस्मात् स नित्यः। तथापि आद्यन्तयोः विक्रिययोः निषेधे सर्वा अपि विक्रिया निषिध्यन्ते अपि च मध्ये स्थितानां विक्रियाणां स्वशब्दैः एव निषेधः कर्तव्यः तस्माद्धेतोः अनुक्तानां यौवनादीनां समेषां विक्रियाणां निषेधो यथा भवेत् तस्मात् शाश्वात इति पदं प्रयुक्तमस्ति शाश्वतपदेन तु अपक्षयरूपा विक्रिया निषिध्यते, शश्वद्भवः इति शाश्वतः। आत्मा तु अवयवरहितोऽस्ति तस्मात् तस्य स्वरूपस्य क्षयो न भवति एवञ्च निर्गुणत्वात् गुणानाम् अपि क्षयो न भवति। पुराण इति विशेषणेन तु अपक्षयविपरीता वृद्धिरूपा विक्रिया प्रतिषिध्यते। यस्य हि अवयवागमेन उपचीयते स वर्धते स एव अभिनव इत्युच्यते। अयमात्मा तु पुरा अपि नव तस्माद्धेतोः पुराण इत्युच्यते, यतो हि स पुराणः ततः स न वर्धते। शरीरस्य नाशे जाते सति विपरीतं परिणामं प्राप्य अपि अयमात्मा विनष्टो न भवति अर्थात् दुर्बलादय अवस्थाः न प्राप्नोति। परन्तु अत्र हन्ति इति क्रियायाः अर्थस्तु पुनरुक्तिदोषवशात् विपरीतं परिणामं स्वीकर्तव्यमस्ति। एतेन प्राप्तोऽर्थो भवति आत्मा कदापि तस्य स्वरूपात् न परिवर्तितो भवतीति। भाष्येऽस्मिन् विशेषो वर्तते यत् यास्काचार्येण निरुक्ते तु षड्भावविकाराः उक्ताः सन्ति तद्यथा जायते – अस्ति – वर्धते –विपरीणमते – अपक्षीयते – नश्यति इति। परन्तु आत्मा खलु सर्वैः विकारैः रहितोऽस्ति। अर्थात् आत्मनः स्वरूपो भवति अन्त्यभावरहितः, नित्यः, जन्मरहितः, अपक्षयरहितश्चेति। आत्मा तु अवयवरहितत्वत् शस्त्रेण छेत्तुं न शक्यते। अग्निरपि आत्मानं भस्कीकर्तुम् असमर्थोऽस्ति। आपः एनमात्मानं क्लेदयन्तुम् असमर्थाः सन्ति, यतो हि ये खलु सावयवा भवन्ति त एव आर्द्रीयुक्ताः भवन्ति

[1]पञ्चदशी. ६.१८
[2]पञ्चदशी ६.२२
[3]विवेकचूडामणौ – ९९ - १००
[4]गीता २.२०-२५

तस्माद्धेतोः अवयवरहितस्य आत्मनो न सम्भवति। मारुतोऽपि आत्मानं शोषयितुम् असमर्थो भवति। आत्मा सर्वकरणविषयत्वान्न व्यज्यते तस्मात् स अव्यक्तोऽस्ति। आत्मा अनिन्द्रियगोचरत्वात् अचिन्त्यो भवति। यथा क्षीरं दध्यातञ्चनादिना विकारि भवति तथा आत्मा नास्ति इति हेतोः आत्मा अविकार्यः।

**विशिष्टाद्वैतनये –**

आत्मा न जायते म्रियत इति साधारणदृष्ट्या सर्वेष्वपि शरीरेषु सर्वैरपि अनुभूयमाने जन्ममरणे क्वचिदपि आत्मानं न स्पृशतः। अयमात्मा कल्पादौ न भूत्वा कल्पान्ते भवति इति नास्ति। केषुचन प्रजापतिप्रभृतिदेहेषु कल्पस्य आरम्भे जन्म अपि च कल्पस्यान्ते मरणं प्रायः शास्त्रेषु दृश्यते परन्तु एते जन्ममरणे आत्मानं न स्पृशतः इत्यर्थः। तथा च सर्वदेहगत अयमात्मा तु जन्मरहितः तस्माद्धेतोः अयं नित्यः शाश्वतश्चेति।प्रकृते इव सङ्कुचितसूक्ष्मं परिणाममपि तस्य न भवति, तस्माद् अयमात्मा पुरातन अपि नवः अर्थात् अपूर्वद् अनुभाव्य इत्यर्थः। अतः शरीरस्य नाशत्वे सति अपि अस्यात्मनो नाशो न भवति। आत्मा तु जन्मरहितः, विनाशरहितः, व्ययरहितः तस्माद्धेतोः आत्मा नित्यः। धर्मयुद्धे शरीरं त्यजतां त्यक्तशरीराद् अधिकतरकल्याणशरीरग्रहणं शास्त्राद् अवगम्यते इति।[1] उत्तमवस्त्राणि गृह्णताम् इव हर्षनिमित्तम् एव अत्रोपलभ्यते। शस्त्र – अग्नि – जल – वायव इमे तु छेदनदहनक्लेदशोषणानि कर्माणि आत्मनि कर्तुम् असमर्थाः। आत्मा सर्वगतोऽस्ति अपि च सर्वेभ्यो तत्त्वेभ्य सूक्ष्मो विद्यते तस्माद्धेतोः एनं व्याप्तकर्तुं कोऽपि समर्थो नास्ति। अतएव अयमात्मा तु नित्यः, स्थाणुः, अचलः अप्रकम्प्यः पुरातनश्चास्ति। आत्मा तु छेद्यादिविजातीयो वर्तते कथं स एतादृशोऽस्ति भाष्याकारो रामानुजाचार्यः कथयति छेदनादियोग्यानि वस्तूनि यैः प्रमाणैः व्यज्यन्ते तैः अयमात्मा न व्यज्यते इति अव्यक्तः।[2] सर्वगतवस्तुविजायीत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमशक्यत्वात् आत्मा खलु अचिन्त्योऽस्ति। अचिन्त्यत्वात् आत्मा तु अविकार्य अर्थात् विकाररहितो वर्तते। इमानि खलु आत्मानः वैशिष्ट्यानि वर्तन्ते।

**अचिन्त्यभेदाभेदनये –**

**अथ जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यीति यास्काद्युक्तषडभावविकाराराहित्येन प्रागुक्तनित्यत्वं द्रढयति न जायते इति। चार्थे वा शब्दौ।**[3] अस्यात्मनस्तु कस्मिन्चिदपि काले जन्म मृत्युः वा न भवति अर्थात् जन्मविनाशयोः निषेधः क्रियते अनेन श्लोकेन। गुणगततया परमात्मनः अपि च परमाणुसदृशस्य जीवात्मनस्तु कस्मिन्चिदपि अंशे महत्वैसादृश्यं न विराजते। जडदेहस्य यथा परिवर्तनं भवति तथा खलु आत्मनो न भवति। तस्माद्धेतोः आत्मा कूटस्थ इत्युच्यते, अर्थात् कस्मिन्नपि काले कस्यामपि अवस्थायामस्य किमपि परिवर्तनं न भवति। जडदेहस्य षड्विधानि परिवर्तनानि परिलक्ष्यन्ते। तद्यथा मातृगर्भे जनिः लभते, तस्य वृद्धिर्भवति, किञ्चिद् कालः स्थिरो भवति अपि किञ्चिद् फलं ददाति, क्रमेण तु क्षयो भवति अन्तिमे तस्य विनाशो भवति। परन्तु आत्मन इमानि परिवर्तनानि तु न परिलक्ष्यन्ते। आत्मना कदाचिदपि न जनिः लेभे परन्तु जडदेहो धार्य्यते, तस्मादेव कारणात् देहस्य जन्म भवति एवञ्च तस्य विनाशोऽपि अवश्यम्भावी। अयमेव प्रकृतेः नियमोऽस्ति तथैव यस्य जन्म न भवति तस्य मृत्युः अपि न भवति। आत्मनस्तु जन्ममृत्यू च न भवतः तस्माद्धेतोः तस्य खलु भूतम्, भविष्यद्, वर्तमानञ्च नास्ति। आत्मा तु नित्यः शाश्वतः कदा तस्य उद्भवो जातो वर्तते तत्तु इतिहासो न जानाति। वयं देहचेतनया प्रभाविताः स्म तस्मादेव कारणात् आत्मनो जन्मेतिहासस्य अन्वेषणं कुर्मः। परन्तु आत्मा नित्यत्वात् तस्य आदिर्नास्ति। देहो यथा जराग्रस्तो भवति तथैव आत्मा न भवति तस्मात् वृद्धावस्थायामपि मनुष्यो तस्यान्तरे शैशवस्य यौवनस्योद्यमतां वा अनुभवति। देहस्य परिवर्तनं तु कदाचिदपि आत्मानं प्रवाहितं न करोति। जडदेहस्य इव आत्मनः क्वचिदपि क्षयो न भवति। देहेन यथा सन्तानसन्तय उत्पद्यन्ते आत्मना क्वचिदपि अन्य आत्मा नोत्पाद्यते। देहजाताः सन्तानसन्तयस्तु खलु प्रकृततया भिन्नाः आत्मनो भवन्ति। स्त्रीपुरुषयोः मेलनेन उत्पन्न आत्मा नवीनं देहं प्राप्नोति, सोऽयमात्मा तु कयोः विशेषयोः स्त्रीपुरुषयोः सन्तान इति मनुते। आत्मन उपस्थितिवशादेव देहस्य वृद्धि र्भवति परन्तु आत्मनः क्वचिदपि काचित् वृद्धिः परिवर्तनं वा न भवति। अनेन प्रकारेण अस्माभिः अनुभूयते यत् देहे तु षड्विधानि परिवर्तनानि भवन्ति परन्तु आत्मा तेन प्रभावितो न भवति। आत्मा खलु पूर्णज्ञानमयः सदैव पूर्णचेतनयुक्तोऽस्ति अर्थात् चेतनत्वमेव आत्मनो लक्षणमिति। उषाकाले यदा वयं गगणे रश्मेः कमपि आभासं प्राप्नुमश्चेत् कथयामो यत् आकाशे खलु सूर्यस्योदयो जातो वर्तते। तथैव मनुष्यः पशुः कीटः उद्भिवो वा स्यात् चेतनायाः विकाशं पश्यामश्चेत् अस्माभिः वक्तुं शक्यते यत् तेषु आत्मन उपस्थितिः विराजिता वर्तते। आत्मनश्चेतनायां परमात्मनश्चेतनायाञ्च बहूनि मतवैविध्यानि दृश्यन्ते, यतो हि परमात्मा खलु सर्वज्ञः। स तु सर्वासु अवस्थासु अर्थात् भूत – भविष्यद् – वर्तमानेषु सम्पूर्णतया सचेतनोऽस्ति। स्वतन्त्रस्य जीवस्य चेतना खलु विस्मृतिप्रवणा वर्तते, यदा स तस्य सच्चिदानन्दस्वरूपस्य वार्तां विस्मरति तदा सः श्रीकृष्णस्य परमोपदेशात् शिक्षालोकं प्राप्नोति। परन्तु श्रीकृष्णस्तु विस्मरणशीलस्य जीवस्य इव नास्ति। यदि स तादृक् भवति तर्हि गीतायां उपदेशस्तु अर्थहीनो भविष्यति। आत्मनो द्वौ भेदौ स्तः तद्यथा

**अणोरणीयान्महतो महीयान् आत्मास्य जन्तोर्निहितो गुहायाम्।**
**तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥**[4]

पारमाणविको जीवात्मा तु एकं देहं परित्यज्य अन्यं देहं धत्ते तत्तु सर्वजनस्वीकृतं तथ्यम्। परन्तु आधुनिकयुगे वैज्ञानिकाः आत्मनोऽस्तित्वे न विश्वसन्ति परन्तु हृदयात् काचित् शक्तिः प्रवाहिता भवति, कथं तत्भवतीति बोधयितुं न शक्नुवन्ति। परन्तु ते मन्यन्ते यत् प्रतिक्षणं तु देहस्य परिवर्तनं भवति अपि च अनेन एव परिवर्तनेन देहे शैशवयौवनवार्धक्यावस्थाः परिलक्ष्यन्ते। वार्धक्यस्य परमात्मा अन्यं देहं धरति। परमात्मनः कृपावशादेव अण्वात्मा भिन्नं देहं प्राप्नोति। बन्धुः यथा बन्धोः इच्छां पूरयति तथैव परमात्मा अण्वात्मन इच्छां परिपूरयति। उपनिषत्सु अपि दृश्यते यत् आत्मापरमात्मनोस्तु एकस्मिन् वृक्षे स्थिताभ्यां विहगभ्यां तुलना कृता वर्तते। जीवात्मा वृक्षस्य फलं खादति परमात्मा अर्थात् श्रीकृष्णः तपश्यति–

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।**
**जुष्टं यदि पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥**

[1]गीता.रामा.भाष्यम्, पृष्ठा ४७
[2]तत्रैव. पृ. ४९
[3]गीता.भू.भा. ४४
[4]क.उ.१.२.२०

असि – आग्नेयास्त्र – पर्जन्यास्त्र – वायवीयास्त्रादिभिः कैश्चिदपि अस्त्रैः आत्मनो हननं न सम्भवमस्ति। अनेन श्लोकेन इदम् अवबुध्यते यत् महाभारतयुगे खलु आधुनिकयुगस्य इव आग्नेयास्त्रमासीदिति एतद्विहाय अपि पर्जन्यास्त्रम्, वायवीयास्त्रम् इत्यादीनां अस्त्राणां व्यवहार आसीत्। एतैः आत्मा न हन्यते। अर्थात् आत्मन उत्सो भवति परमात्मा, तस्मात् आत्मनो विच्छिन्नो न सम्भवति। गीतायामात्मनः स्वरूपविचारे श्लोके तु सर्वगत इति पदं प्रयुक्तमस्ति पदस्यास्य महत्वैशिष्ट्यं परिलक्ष्यते यत् ईश्वरस्य सृष्टौ तु सर्वत्र आत्मा विराजते। आपाम्, स्थले, अन्तरिक्षे अपि च अग्नौ अपि जीवात्मा अस्ति। परन्तु आपाततदृष्टौ अस्माभिः चिन्त्यते यत् अग्नौ आत्मा नास्ति परन्तु गीतापठनेन वक्तुं शक्यते यत् धारणेयं तु भ्रान्तेति। यतो हि स्पष्टरूपेण उक्तमस्ति यत् अग्निः आत्मानं दहितुम् अशक्योऽस्ति। सूर्यलोकेऽपि उपयोगिनं देहं धृत्वा जीवात्मा विद्यते। सूर्यलोके यदि जीवात्मा न भवेत् तर्हि सर्वगत अर्थात् सर्वत्र आत्मनो गतिः अयं शब्दो न प्रयुक्तः स्यात्। अर्थात् आत्मा नित्यः अव्यक्तः सर्वगतः अविकार्यः अचिन्त्यश्चास्ति।

**सन्दर्भग्रन्थसूची**


छान्दोग्योपनिषत्(बङ्गपुस्तकम्, शाङ्करभाष्यसमेता)।(२००२)। दूर्गाचरणसांख्यवेदान्ततीर्थः, महामहोपाध्यायः (अनुवादकः सम्पादकश्च)। कलिकाता देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड।

मुण्डकोपनिषद्।(२००८)। ब्रह्मचारिमेधाचैतन्यः (सम्पादकः)। दण्डिस्वामी-दामोदर-आश्रमः।

बृहदारण्यकोपनिषत्। सं.-(२०७०)। गोरखपुर गीताप्रेस (प्रकाशक एवं मुद्रक)।

उपनिषद्भाष्यम् (प्रथमखण्डः, श्रीमदानन्दगिर्याचार्यकृतटीकया कठ-माण्डूक्य-तैत्तिरीयभाष्याणां प्रसिद्धाचार्यान्तरटीकाभिः सटीकतैत्तिरीयवार्तिकेन च समलङ्कृतम्)।(२०००)। सुब्रह्मण्यशास्त्री, सं. एस. (सम्पादकः)। वाराणसी श्रीदक्षिणामूर्ति-मठ-प्रकाशन।

ब्रह्मसूत्रशाङ्करभाष्यम् (शङ्कराचार्यविरचितम्, भामती – कल्पतरु-परिमलसहितम्), पण्डितेन अनन्तकृष्णशास्त्रिणा टिप्पण्यादिभिः उपबृंहितम्, पणशीकरोपाह्वेन वासुदेवशर्मणा संस्कृतम्, वाराणसीतः कृष्णदास अकादमीद्वारा २००० तमे संवत्सरे प्रकाशितम्।

पञ्चदशी (विद्यारण्यस्वामीविरचितम्,) स्वामीवाणेशानन्देन सम्पादिता, उद्बोधनकार्यालयेन कलिकाताद्वारा २००१ समवत्सरे प्रकाशिता।

श्रीमद्भगवद्गीता (बङ्गपुस्तकम्)।(२०१४)। वासुदेवानन्द, स्वामी (अनुवादकः व्याख्याकारश्च)। कलिकाता उद्बोधन-कार्यालयः।

शङ्करः।(२०१५)। शङ्कराचार्यकृतं श्रीमद्भगवद्गीताभाष्यम् (श्रीमदनुभूतिस्वरूपाचार्यविरचितः श्रीमदानन्दगिरिस्वामिविरचितः श्रीबेल्लङ्कोण्ड-रामरायकविविरचितश्च प्रथमः द्वितीयश्च खण्डः)। मीमांसा-वेदान्ताचार्य-श्रीमणिद्राविडः (संशोधकः)। वाराणसी श्रीदक्षिणामूर्तिमठप्रकाशनम्।

श्वेताश्वतरोपनिषद्। द्वितीयसंस्करणम्- (२००८), जानुयारिमासः। विश्वरूपानन्दसरस्वती, स्वामी (व्याख्याकार अनुवादकश्च)। मुम्बई सत्साहित्य-प्रकाशन-ट्रस्ट।

श्रीमद्भगवद्गीता (रामानुजभाष्यं बङ्गानुवादसहितम्)।(१४०६) बङ्गाब्दः। श्रीमद्यतीन्द्ररामानुजाचार्यः (अनुवादकः)। कोलकाता श्रीबलराम-प्रकाशनी।

तैत्तिरीयोपनिषत् (बङ्गपुस्तकम्, शाङ्करभाष्यसमेता)।(२००८)। दूर्गाचरणसांख्यवेदान्ततीर्थः, महामहोपाध्यायः (अनुवादकः सम्पादकश्च)। कलिकाता देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड।


## विवेकचूडामणौ शमादिषट्कसम्पत्तिः*

अधिकारी द्वितीयसाधनसम्पन्नः यदा भवति तदा तृतीयसाधनस्य मार्गः उन्मुक्तः भवति। तृतीयसाधनं भवति शम-दम-उपरति-तितिक्षा-समाधान-श्रद्धानां प्राप्तिः।

*शमः –*

“शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः” इति उक्तं वेदान्तसारे। वस्तुतः मनसः निग्रहः एव शमः। वेदान्ततत्वस्य श्रवण-मनन-निदिध्यासनेन एव तत्त्वज्ञानं जायते। येन वृत्तिविशेषेण आत्मविषयक-श्रवणादिभिन्नविषयेभ्यः बलात् मनसः निग्रहः भवति सः शमः। जीवस्य चित्तम्

[1]म.उ.३.१.२

***शोधार्थी – गोपेशपाण्डेयः,अद्वैतवेदान्तः,राष्ट्रियसंस्कृतसंस्थानम् रघुनाथकीर्तिपरिसरः**

अतिशयचपलम्। एकस्मिन् विषये दीर्घकालं यावत् न तिष्ठति। बुभुक्षोः भोजनं प्रति यथा अभिरुचिः भवति तथा एव वैराग्ययुक्तस्य पुरुषस्यमनः तत्तवज्ञाने अभिरुचिसम्पन्नं सत् अपि पूर्वसंस्कारवशात् विक्षिप्तं भवति। तस्यां दशायां येन वृत्तिविशेषेण पार्थिवंसुखम् अनित्यं परिणामे दुःखजनकम् इति बलपूर्वकं विषयेभ्यः आकर्षति सः शमः। विवेकचूडामणौ अपि उक्तम् –

**"विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः।**
**स्वलक्ष्ये नियतावस्था मनसः शम उच्यते॥"**[1]

मुहुर्मुहुः प्रतिक्षणं, दोषदृष्ट्या दोषदर्शनेन, विषयव्रातात् विषयसमूहात् विरज्य वैराग्यप्राप्त्या मनसः स्वलक्ष्ये ब्रह्मतत्वज्ञाने नियतावस्था निश्चलरूपेण अवस्थानं शमः उच्यते कथितो भवति।

*दमः –*

"दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्" इति वेदान्तसारे उक्तम्। बाह्येन्द्रियाणां चक्षु-कर्ण-नासिका-जिह्वा-त्वचां तद्विषयेभ्यः आकर्षणम्। चक्षुषः रूपात्, कर्णस्य शब्दात्, नासिकायाः गन्धात्, जिह्वायाः रसात्, त्वचः स्पर्शात् आकर्षणं येन वृत्तिवशेषेण क्रियते सः दमः। वस्तुतः दमः नाम बाह्येन्द्रियाणां निग्रहः। आदौ अन्तरिन्द्रियस्य निग्रहः कर्तव्यः। ततः बाह्येन्द्रियाणां निग्रहः। तस्मात् आदौ शमस्य निर्देशः ततः दमस्य निर्देशः। यदि मनः वशीभूतं भवति तर्हि चक्षुषादीनां निग्रहः सम्भवः। मनसः सङ्कल्पवशात् एव चक्षुषादयः रूपादिषु धाविताः भवन्ति। यदि कोऽपि पुरुषः कस्मिंश्चित् विषये मनसः नियोगं करोति तर्हि तस्य सम्मुखे सुरूपं तिष्ठति चेत् अपि न पश्यति, सुगीतं भवति चेत् अपि न श्रृणोति। अतः मनसः निग्रहः भवति चेत् बहिरिन्द्रियाणां स्वतः निग्रहः भवति। परन्तु संस्कारवशात् विक्षिप्तं भवति। तस्मात् यत्नः कर्तव्यः। विवेकचूडामणौ दमविषये उक्तम्-

**"विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके।**
**उभयेषामिन्द्रियाणां स दमः परिकीर्तितः॥"**[2]

उभयेषाम् इन्द्रियाणां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च विषयेभ्यः स्वस्वविषयेभ्यः परावर्त्य विमुखीकृत्य स्वस्वगोलके स्वस्वस्थाने स्थापनं स्थिरीकृत्य निश्चलरूपेण रक्षणं, सः दमः परिकीर्तितः कथितः।

शमदमवान् पुरुषः एव स्थितप्रज्ञः इति भगवान् श्रीकृष्णः अपि गीतायाम् उक्तवान्-

**"यदा संहरते चायं कुर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥"**[3]

यदा अयं कुर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तस्य प्रज्ञाप्रतिष्ठिता भवति इति अन्वयः। अर्थात् इन्द्रियाणि सर्वदा अपि शब्दादिषु विषयेषु प्रवृत्तानि भवन्ति। कूर्मः यथा भयात् स्वानि अङ्गानि संकोचयति तथा यदा अयं ज्ञाननिष्ठायां प्रवृत्तः जनः सर्वाणि इन्द्रियाणि शब्दादिभ्यः संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवति। स च स्थितप्रज्ञः भवति।

*उपरतिः –*

वेदान्तसारे उपरतेः लक्षणद्वयम् उक्तम्- "निवर्तितानाम् एतेषां तद्व्यतिरिक्तविषयेभ्यः उपरमणम् उपरतिः" अथवा "विहितानां कर्मणां विधिना परित्यागः"इति।

मनसः तथा बहिरिन्द्रियाणां निग्रहणेन एव तत्त्वज्ञानस्य मार्गः उन्मुक्तः न भवति। पूर्वतनवासनावशात् तानि पुनः चञ्चलानि भवन्ति। अतः निवर्तितानाम् इन्द्रियाणाम् मनसः तथा बहिरिन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यः पुनः पुनः दोषदर्शनेन उपरमणम् निवृत्तिः एव उपरतिः। अथवा शास्त्रविहितानां नित्यनैमित्तिकप्रायश्चित्तानां विधिपूर्वकं परित्यागः एवउपरतिः। विवेकचूडामणौ उक्तम्–

**"बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा॥"**[4]

वृत्तेः मनसः विषयप्रकाशकशक्तेः बाह्यानालम्बनं बाह्यानात्मनवस्त्वाकारेण अपरिणतभवनम् एव उत्तमा उपरतिः।

*तितिक्षा –*

"तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता" इति उक्तम्। अर्थात् शीतोष्णप्रभृतिविपरीतविषयान् तथा ततः उत्पन्नसुखदुःखादीनां सहनम्। सर्वे जीवाः सुखेन आनन्दम् अनुभवन्ति। आनन्देन प्रमादः न भवति। परन्तु दुःखस्य सहनं सर्वे कर्तुं न शक्नुवन्ति। अतः दुःखकारणात् प्र मादं कुर्वन्ति बहवः। परन्तु यः तितिक्षाम् अभ्यस्यति तस्य समीपे सुखं दुःखम् उभयम् अपि समानम्। सः सुखेन अत्यधिकम् आनन्दम् न अनुभवति , दुःखेन अपि दुःखितः न भवति। अतः सः अप्रमादः धैर्यवान् भुत्वा साधनातः अविचलितः न भवति। विवेकचूडामणौ उक्तम्-

**"सहनं सर्वदुःखानामप्रतीकारपूर्वकम्।**
**चिन्ताविलापरहितं सा तितिक्षा निगद्यते॥"**[5]

सर्वदुःखानां सर्वविधदुःखानां चिन्ताविलापरहितं चिन्तां विलापं च त्यक्त्वा अप्रतीकारपूर्वकम् प्रतीकारं न कृत्वा सहनंस्वीकारः एव तितिक्षा निगद्यते उच्यते इत्यर्थः।

वस्तुतः शमदमोपरतिभ्यः बहिर्विषयेभ्यः निवृत्तिः भवति। तितिक्षायां तु अन्तर्विषयेभ्यः चित्तस्य निवर्तनं भवति।

*समाधानम्-*

[1]विवेकचूडामणौ - २२
[2]विवेकचूडामणौ - २३
[3]श्रीमद्भगवद्गीता – २.५८
[4]विवेकचूडामणौ - २३
[5]विवेकचूडामणौ - २४

"निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्।" अर्थात् विषयेभ्यः प्रत्याहितस्य चित्तस्य आत्मनः विषये श्रवण-मनन-निदिध्यासने तथा तस्य अनुगुणविषये गुरुशुश्रुषादौ अवस्थानम् एव समाधानम्। अस्याम् दशायाम् एवं किमपि न कर्तव्यं येन आत्मविषयस्मृतिधारायाः विच्छेदो भवति।आत्मविषयकप्रत्ययप्रवाहस्य उत्पादनम् एव समाधिः, तदेव समाधानम्। विवेकचूडामणौ उक्तम्-

**"सम्यगास्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वथा।**
**तत्समाधानमित्युक्तं न तु चित्तस्य लालनम्।।"**[1]

शुद्धे निर्गुणे ब्रह्मणि ब्रह्मविषयकतत्त्वज्ञाने बुद्धेः चित्तस्य सम्यक् यथार्थतया आस्थापनं स्थिरीकरणम् एव समाधानम् इत्युक्तम्। तु किन्तु चित्तस्य लालनम् कौतुहलात् वेदान्ततत्त्वस्य आलोचनेन मनसः तृप्तिलाभः न समाधानम् इत्यर्थः।समाधिं विना आत्मसाक्षात्कारः न भवति।

<u>श्रद्धा</u>-

केवलेन श्रवणादिना तत्त्वसाक्षात्कारः न भवति तदपि श्रद्धापूर्वकं कर्तव्यम् एव। श्रद्धा नाम का इति चेत् उच्यते- "गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा"इति। गुरुवचनेषु तथा गुरूपदिष्टशास्त्रवचनेषु दृढतरनिश्चयः एव श्रद्धा। आत्मतत्त्वजिज्ञासोः श्रद्धा एव मेरुदण्डः। श्रद्धा न तिष्ठति चेत् शतशः उपदिष्टः अपि अर्थस्य अवधारणं न भविष्यति। अतः आत्मजिज्ञासोः श्रद्धायाः अवलम्बनम् अनिवार्यम्। विवेकचूडामणौ उक्तम्-

**"शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्।**
**सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते।।"**[2]

गुरुवाक्यस्य गुरुणा उपदिष्टस्य वाक्यस्य,तथा शास्त्रवाक्यस्य वेदान्तवाक्यस्य, सत्यबुद्ध्यवधारणं सत्यतया ग्रहणं, यया येन निश्चयेन वस्तूपलभ्यते आत्मनः उपलब्धिः भवति सा श्रद्धा कथिता सर्वैः उक्ता।एवं शमादिशट्कसम्पत्तिः ग्रहणीया भवति।

<u>मुमुक्षुत्वम्</u> -

मुमुक्षुत्वस्य अर्थः मोक्षे इच्छा। आत्मज्ञानप्राप्तये एतत् एव प्रधानं साधनम्। यदि पुरुषस्य मोक्षप्राप्तये इच्छा न भवति तर्हि मोक्षोपायस्य अन्वेषणं न करोति। तस्मात् आत्मदर्शनं अपि न करोति। आत्मदर्शनं मोक्षस्य मार्गः इति वेदान्ततत्त्वश्रवण-मनन-निदिध्यासनम् आत्मदर्शने कारणम् इति बोद्धुं न शक्नोति। अतः वेदान्ते तस्य प्रवृत्तिः एव न स्यात्। तेन वेदान्तैकवेद्यस्य आत्मनः ज्ञानम् अपि तस्य न भवति। अतः अधिकारिणः मोक्षेच्छा अवश्यं भवितव्या। विवेकचूडामणौ शङ्कराचार्येण उक्तम्-

**"अहंकारादिदेहान्तान् बन्धानज्ञानकल्पितान्।**
**स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता।।"**[3]

अहंकारादिदेहान्तान् सूक्ष्मात् अहंकारात् आरभ्य स्थूलदेहपर्यन्तम्, अज्ञानकल्पितान् अज्ञानात् उत्पन्नान् बन्धान् बन्धसहमूहान् स्वस्वरूपाबोधेन आत्मज्ञानेन मोक्तुम् इच्छा एव मुमुक्षुता इत्यर्थः।

एवं साधनचतुष्टयं निरूपितम्। यावत् नित्यानित्यवस्तुविवेकः न भवति तावत् अनित्ये वस्तुनि वैराग्यं न उत्पद्यते। वैराग्यं विना शमादीनाम् अपि आचरणं न सम्भवति। शमादीनाम् अभावे मोक्षविषयिणी इच्छा एव न सम्भवति। मोक्षे इच्छां विना ब्रह्मजिज्ञासा अपि न स्यात्। तस्मात् आदौ नित्यानित्यवस्तुविवेकः ततः इहामुत्रफलभोगविरागः ततः शमादिषट्सम्पत्तिः ततः मुमुक्षुत्वम् इति क्रमेण तेषामुल्लेखः।

एवं सर्वैः गुणैः युक्तः प्रमाता वेदान्तविद्यायाम् अधिकारी भवति। अत्र श्रुतेः प्रमाणम् अपि प्राप्यते-

"शान्तो दान्त उपरतिस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्यति"इति।

अर्थात् यस्य मनः शान्तम्. इन्द्रियाणि न चञ्चलानि, यः सन्न्यासदीक्षां प्राप्तवान्, यः सुखदुःखेषु समानमनाः तिष्ठति सः समाहितः भूत्वा एकाग्रभावं प्राप्य आत्मनि एव आत्मानं पश्यति।

अस्य श्रुतेः समर्थनं करोति उपदेशसाहस्रीगतं वाक्यम् इदम्-

**"प्रशान्तचित्ताय जितेन्द्रियाय च**
**प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्विताय अनुगताय सर्वदा**
**प्रदेयमेतत् सततं मुमुक्षवे।"**[4]

प्रशान्तचित्ताय यस्य मनः शान्तं तस्मै, जितेन्द्रियाय यस्य इन्द्रियाणि चञ्चलानि न भवन्ति, प्रहीणदोषाय यः त्याज्यकर्म परित्यज्य नित्यादिकर्मणाम् अनुष्ठानं करोति तस्मै, गुणान्विताय विवेकवैराग्यादिगुणविशिष्टाय, यथोक्तकारिणे अनुगताय सर्वदा यः गुरोः तथा शास्त्रवचनं निर्देशानुसारं पालयति सर्वदा आचार्यस्य अनुगतः एव तिष्ठति तस्मै, सततं मुमुक्षवे मोक्षप्राप्तये यस्य अदम्यः उत्साहः तस्मै एतत् ब्रह्मविद्या प्रदेयं दातव्यम् इति।

एतादृशः अधिकारी जनन-मरणादि-संसारानल-सन्तप्तः दीप्तशिरा जलराशिम् इव उपहारपाणिः श्रोत्रियं ब्रह्मनिष्टं गुरुम् उपसृत्य तमनुसरति "समित्पाणिः श्रोत्रियं ब्रह्मिनिष्ठम्"[5]इत्यादिश्रुतेः।

[1]तत्रैव - २६
[2]तत्रैव - २५
[3]विवेकचूडामणौ - २७
[4]उपदेशसाहस्रम्, ३२४,१६/१२
[5]मुण्डकोपनिषद्

## राघवेन्द्रचरिते श्रीरामचन्द्रः*

**प्रस्तावना –**

वाल्मीकिना विरचिते आदिकाव्ये रामायणे लौकिकसंस्कृतसाहित्यस्य मुख्यः चरित्रस्तु श्रीरामचन्द्रः समीचिनतया चित्रितो वर्तते। आदिकवेः वाल्मीकेः रामायणमिति अधिकृत्य अनेकाः ग्रन्थाः परवर्तीनि काले प्रणीता दृश्यन्ते। विंशतितमे शताब्दे रामकिशोरत्रिपाठिना राघवेन्द्रचरितमिति महाकाव्यं रचयामासे। महाकाव्यमिदं तु अद्भूतं विद्यते। तस्माद्धेतोः विदुषां परामर्शेण मया शोधप्रबन्धस्य विषयत्वेन राघेन्द्रचरितमहाकाव्यस्य समीक्षात्मकमध्ययनम् इति अङ्गीकृतं वर्तते।

राघवेन्द्रचरितमहाकाव्यस्य उपरि डाँ.दशरथद्विवेदिमहोदयेन एका टीकाऽपि विरचिता अस्ति। महाकव्यमिदं तु षोडशसर्गेषु विभक्तं दृश्यते। महाकाव्यस्यास्य महत् वैशिष्ट्यं परिलक्ष्यते, इदं तु अतीवरूचिकरम्, ज्ञानप्रदम्, साहित्यदृष्ट्या च विलक्षणं विद्यते।

मर्यदापुरुषोत्तस्य श्रीरामचन्द्रस्य विषये राघवेन्द्रचरिते कविना इत्थम् ऊचे –

**लीलाविग्रहवान् समस्तजगतो धर्ता स्वराज्यस्य च**
**कृच्द्रे कृत्यमसौ प्रदर्श्य बहुशो धृत्वा वपुर्मानवम्।**
**लोके स्थापयितुं स्वकीर्तिमतुलां भक्तार्तिनाशाय च**
**श्रीमन्तं पवनात्मजं समयुनक् रामः प्रभुः शाश्वतः॥[1]**

दूती तु महाराजाय दशरथाय श्रुतिसुखदं संवादमुक्तवती, तथा च कविना नवजातस्य शिशोः सौन्दर्यं सुन्दरतया प्रतिपादितमस्ति।

**नहि दृष्टिचरः पुरेदृशः शिशुरेको जगतीतले पुनः।**
**रविरेव रवेस्तुल्य सदा किमु कञ्चिद् भजतेऽरुणोपमा॥[2]**

राजा तु तस्यै पारितोषकं ददौ तद्यथा –

**निवेदिन्यै सुतोत्पतिं हर्षदुत्फुल्ललोचनः।**
**आनपत्योद्धृतिं मत्वा ददौ हारं हृदि स्थितम्॥[3]**

अन्ये अपि द्वे राण्यौ शिशोः जन्म प्रदत्तवत्यौ आस्ताम्। जातकर्मणः परं दशमे दिवसे तु नामकरणस्य संस्कारः प्रदत्तः। रामः, भरतः, लक्ष्मणः, शत्रुघ्न इमे राजगृहे समागताः। तदा कविना एतेषां चतुर्णां दिगम्बराणां कुञ्चितकेशराशिनां बालकानां पुनः सुषमायां मुग्धो जातः–

**पित्रोर्निराशातमसाप्लुते हृदि प्रकाशरेखामभिरेखयन्तम्।**
**प्रकृष्टदिष्ट्याः परिणामरूप विभ्रा जमानं नवपत्रकोपमम्॥**
**दिगम्बरं कुञ्चितकेशराशिं चन्द्राननंश्यामवपुर्ललामम्।**
**सम्यग्विभक्तावयवं शुभेक्षणं नीलत्विषा निर्जितमिन्द्रनीलम्॥**
**प्रसूशुभाङ्के समवस्थितं तं क्षिप्तन्तमारान्निजपाणिपादम्।**
**मनो मुनीनामपि लोभयन्तं मुदा नृपोन्वैक्षत तत्र रामम्॥**
**चतुःसुतानाञ्च निरीक्षणान्तं चतुर्गुणं मोदमिहाभिरक्षितुम्।**
**पर्याप्त एकार्थमसौ नृपस्य स्वान्तावकाशो लघुरेव जातः॥**
**परं पुमासं नररूपधारिणं सम्प्राप्य जाता प्रकृतिर्मुदन्तम्।**
**स्वजन्मसाफल्यमवाप्तये सा तत् कारणं सेवितुमुन्मुखीव॥[4]**

मातुः कौशल्यायाः मनहरस्य रामस्य सुषमां वर्णयति, नवीनस्य छन्दसः, नूतनाः कल्पनाः वर्णिताः सन्ति तद्यथा–

**कस्मिंश्चिद्दिवसे काचित्पुरन्ध्री समुपागता।**
**उवाचात्मदशां प्रौढा नत्वा श्रीराममातरम्॥**
**अर्जितमोदं प्रशमिततपनं जृम्भितहासं धवलितककुभम्।**
**निर्जितकामं जलधरवपुषं कुञ्चितकेशं कुसुमितवदनम्॥[5]**

माता कज्जलं प्रददाति शिशवे–

**यस्मान्नाप्नोति खे चन्द्रो हानि बहुभिरीक्षितः।**
**तद्धेतोः कज्जलं माताऽकराच्चन्द्रमुखे शिशोः॥[6]**

---

***शोधार्थी - काशीनाथद्विवेदी**
विभागः - साहित्यम्
राष्ट्रियसंस्कृतसंस्थानम् लखनउ परिसरः।

[1]रा.च. १६.६४
[2]रा.च. ४.७
3 रा.४.१०
4रा.च. ४. १८-२२
5रा.च. ४. २५-२६
6रा.च. ४.३१

बालकानां बालक्रीडा, राज्ञो दशरथस्य आनन्दः, अन्नप्राशनसंस्कारः इमे विषयाः परिलक्ष्यन्ते। बालकस्य रामस्य चपलता विषये माता अभोयोगं करोति तद्यथा–

**अगारवस्तून्यपसारितानि स्वस्थानतोऽनेन भवत्प्रियेण।**
**कार्यावरोधे नियतोऽवरोधे किं श्रीमताऽयं चपलोर्भको मे॥**[1]

काकभुशुण्डेः लीला –

**कणान्तण्डुलस्य स्वहस्ते गृहीत्वा त्वमायाहि काक त्वमायाहि काक।**
**वदन्नेवमस्यानुगतोऽसौ यदाऽभूदकार्षीत्तदा स्वानुगां लोकदृष्टिम्॥**
**अरिष्टेन साकं समीर्ष्यां दधानाः शशंसुस्तदानीं नभःस्था दिविस्थाः।**
**श्रुतिर्यं सदान्वेति काकानुगतोऽसौ न काकस्य भाग्यं कदाचिन्निरूप्यम्॥**
**क्व काकेनशीते तपस्याऽन्वकारि क्व पञ्चाग्निनाऽदाहि गात्रं स्वकीयम्।**
**कृता तीर्थयात्रा क्वचिद् वामुनैवं यदस्यागतो बालरूपः परमात्मा॥**
**अवश्यं महात्माऽस्ति रामानुगम्यः**
**सकृत्सन्ततिं वायसोऽयं ददाति।**
**अयं त्वात्मघोषे सदैवावसक्तो**
**न दृष्टौ विभेदोऽस्त्यतश्चैकदृष्टिः॥**[2]

हनुमतः वानरलीला, प्रातःकाले नगरे स्थितानां महिलानाम् आगमनम्। रामस्य दर्शनं तथा च अन्याभिः स्त्रिभिः रामस्य वर्णना। अन्याः नागरिकाः समगताः एवञ्च रामाय आशीर्वादं प्रदत्तवत्यः

**प्रातर्गता नृपगृहं सखि कार्यहेतोर्दृष्टं मयोदितमपूर्वमहः स्वरूपम्।**
**पूर्वे रविं तदनु पश्चिमदिग्विभागे चन्द्रं नृपाङ्गणगतं च विचित्रनीलम्॥**

विद्यारम्भः, चूडाकर्म, यज्ञोपवीतसंस्कारः, समावर्तनसंस्कारः इमे विषया वर्णिताः सन्ति। बालकाः सभायाम् उपविशन्ति। राज्यस्य कर्माणि पश्यति अपि च प्रजानां प्रशंसां करोति।

**विद्यारम्भोऽभवत्तेषां तोषाय पुरवासिनाम्।**
**शासकाः शिक्षिताः स्युश्चेत्प्रजाभाग्यं व्यनक्ति तत्॥**
**सम्प्राप्ते पञ्चमे वर्षे स्वपुत्राभ्युदयेच्छया।**
**चूडाकर्म ततो राजा कर्णवेधमकारयत्॥**
**संस्कारा अभवन्तेषां कर्तव्यत्ववशाद् ध्रुवम्।**
**संस्काराः संस्कृता यैस्तु तेषां ते सन्ति निष्फलाः॥**
**यज्ञोपवीतकृत्यानि कृत्वा दशरथो नृपः।**
**निश्चिन्तोऽभूत् शिशून्सर्वान्दत्वा संरक्षणे गुरोः॥**
**अल्पकालात् समस्तानि विद्यास्थानानि भूतये।**
**यथाविधि गृहीतानि पुण्यश्लोकैर्नृपात्मजैः॥**
**समावर्तनसंस्कारे व्यतीते वचसो गुरोः।**
**राजनीतेः प्रयोगार्थं योजितास्ते स्वकर्मसु॥**[4]

## उपनिषद्दिशा श्रीमद्भागवत्पुराणे ईश्वरस्वरूपविमर्शः*

हिन्दुसंस्कृतौ ईश्वरवादः सुन्दरतया दरीदृश्यते। ईश्वरस्तु न केवलं हिन्दुसंस्कृतौ अपि ईसाईसंस्कृतौ मुसलमानसंस्कृतौअपि मन्यते। हिन्दवस्तु हरि, ओम्, ईश्वरः, परमात्मा, नारायणः, रामः, कृष्णः, इत्यादिभिः अभिधाभिः कथयन्ति। ईसाई-गाँड, मुसलमानः अल्लाहः, खुदा इत्यादिभिः अभिधामिः कथयति। यथा जलं,नीरः, पानी, आपः, वाटरः, इत्येतानि सर्वाणि अपि जलस्य पर्यायपदानि। वस्तुतः सर्वेषामपि अर्थस्तु जलमेव। तथैव ईश्वरोऽपि एक एव।

---

[1]रा.च. ४.५१
[2]रा.च. ४. ६०-६३
[3]रा.च. ४.७६
[4]रा.च. ४.९७-१०२

***शोधार्थी - अमित सरकार, राष्ट्रियसंस्कृतविद्यापीठम्**
**विभागः – अद्वैतवेदान्तः, amitsarkar9883368137@gmail.com.**

अस्माकं श्रुति-स्मृति-दर्शन-इतिहास-पुराण-गीता-भागवत-रामायणमित्येतेषु ग्रन्थेषु ईश्वरस्य अस्तित्व-मङ्कितमस्ति। तदत्र मया समासेन प्रतिपाद्यते।

**श्रुतौ ईश्वरः –**

**"ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।[1]"**

अत्र तु ईश्वरस्य सर्वव्यापकता तथा च जगन्नियन्तृता प्रतिपादिता अस्ति। वास्तवे तु ईश्वरस्य सृष्टिः व्याप्ता अस्ति, तेन एव जीवाः जीवनं धार्य्यन्ते, प्रत्येकस्मिन् श्वासे तु स वायुरूपेण स्पन्दितो भवति। अस्माकं जीवनस्य मूलाधारभूतानि पञ्चभूतानि ईश्वरस्यैव विविधरूपाणि। सर्वेषु रूपेषु अभिव्यक्तोऽस्ति, सर्वेषां नियन्तापि अस्ति। तस्य नियमानुसारेण एव सूर्यचन्द्रनक्षत्रपृथिव्यः स्वेषां कक्षायाम् अहर्निशं गतिशीलाः भवन्ति यस्य परिणामस्वरूपेण ऋतुपरिवर्तनं भवति। श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णः अर्जुनाय बहुत्र उपदेशं करोति–

**"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव[2]॥**
**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु[3]॥"**

श्रीमद्भागवतेऽपि कथयति –

**"खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।**
**सरित् समुद्रांश्च हरेः शरीरं यत् किञ्च भूतं प्रणमेदनन्य[4]।**
**अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।**
**पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्[5]॥"**

कठोनपिषदि तु दृश्यते –

**"एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति[6]॥"**

निखिलमिदं जगत् तु भगवत एव उत्पन्नमस्ति तस्माद्धेतोः भगवतरूपमिदम्। शास्त्रे तु भगवतः एकस्मात् अंशात् अस्य जगतः उत्पत्तिः इति कथ्यते –

**"अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्[7]॥"**

विष्णुपुराणे कथ्यते –

**"स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपोऽप्रकटस्वरूपः।**
**सर्वेश्वरः सर्वदृक् सर्वविच्च समस्तशक्तिः परमेश्वराख्यः[8]॥"**

ईश्वरस्तु समष्टिव्यष्टिरूपः, व्यक्ताव्यक्तस्वरूपविशिष्टः, सर्वेषां स्वामी, साक्षी, अपि च सर्वं जानाति स एव सर्वशक्तिमान् परमेश्वर इत्युच्यते।

श्रीमद्भगवद्गीतायाम् उच्यते –

**"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः[9]॥"**

क्षराक्षराभ्याम् उत्तमपुरुषस्तु भिन्नः, य त्रिषु लोकेषु प्रविश्य सर्वेषां धारणं पोषणं करोति अपि च अविनाशी भवति स एव परमेश्वरःपरमात्मेति कथ्यते।

इदमेव समर्थयति भगवती श्रुतिः। कठोपनिषदि श्वेताश्वतरोपनिषदि उक्तमस्ति –

**"नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्[10]॥**
**नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।**
**तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः[11]॥**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया[1]॥"**

1ईशोपनिषत् -१
2श्रीमद्भगवद्गीता ७.७
3तदेव ७.८
4श्रीमद्भागवतम् ११.२.४१
5तदेव २.९.३२
6कठोपनिषद् २.२.१२
7श्रीमद्भगवद्गीता १०.४२
8 विष्णुपुराणे ६.५.८६
9 श्रीमद्भगवद्गीता १५.१७
10 कठोपनिषद् २.२.१३
11 श्वेताश्वतरोपनिषत् ६.१३

परमेश्वरो भगवान् सर्वेषां जीवानां हृदयेऽवस्थानं कृत्वा सर्वान् अपिजीवान् देहरूपे यन्त्रे आरोहणं कारयित्वा मायया भ्रामयति। श्रीभागवत्कारः कथयति –

**"जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्**
**तेन ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।**
**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा**
**धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि[2]॥"**

यस्मात् जगतः उत्पत्तिस्थितिसंहारो भवति, यस्तु अन्वयव्यतिरेकाभ्यां सत्यमस्ति, यस्य सत्तया जगतः सत्ता अपि च जगतो राहित्येऽपि तस्य अस्तित्वम् अक्षुण्णं तिष्ठति, स तु जगतः सर्वेष्वपि पदार्थेषु व्याप्तो भवति, सर्वज्ञो भवति तथा च अखण्डः, अबाधः, ज्ञानसम्पन्नत्वात् स्वयं प्रकाशोऽस्ति। सर्गस्य आदिकाले सः सङ्कल्पेन ब्रह्मणो हृदये वेदानां ज्ञानं दत्तवान् तस्योपरि ऋषिमुनयः मोहिता भवन्ति। सत्यस्वरूपवशात् इयं त्रिगुणामयी सृष्टिः तस्य सत्तया सत्यमस्ति परन्तु भिन्नाभि अभिधाभिः दृष्ट्या असत्यमस्ति। यथा तेजोमयसूर्यरश्मिभिः काँचादयः, मृत्तिकायाः विकारैः जलम् अपि च अप्सु स्थलस्य भ्रान्तिः भवति। यस्मिन् स्वस्य ज्ञानमयप्रकाशेन मायाछलकपटादयः सदा निरस्ताः भवन्ति, तादृशस्य सत्यस्वरूपस्य परमेश्वरस्य वयं ध्यानं कुर्मः।

**"यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः।**
**तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः[3]॥"**

यथा ऊर्णनाः मुखेन तन्तुं निष्काष्य प्रसारयन्ति पुनश्च तेन सह विहारं कृत्वा पुनो मुखे संस्थापयन्ति तथैव सर्वेश्वरः परमात्मा अपि जगतो रचनां कृत्वा स्वस्मिन् एव तस्य जगतः लयं कारयति। भगवती श्रुतिः अपि इदं समर्थयति –

**"यथोर्णनाभिः सृजते गुह्णन्ते च यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्[4]॥"**

निष्कर्षः –

ईश्वरं मन्यमानाः मनुष्याः ईश्वरभयात् पापं न आचरन्ति अपि ईश्वरस्य उपरि एव निर्भरशीला भवन्ति। तेन तस् हृदये तु निर्भरता-धीरता-वीरता-गम्भीरतेत्यादीनां गुणानां समन्वयो भवति। ईश्वरस्य चिन्तनेन सर्वेऽपि दुर्गुणाः दुराचारास्तु नाशिता भवन्ति। दुर्गुणे नाशे सति पूर्णतया सद्गुणः सदाचारस्तु आगतो भवति। तथा च परमा शान्तिः प्राप्यते। परमानन्दे प्राप्ते सति मृत्योः परम् उत्तमा गतिः लभ्यते। जगत् इदम् ईश्वरेण आच्छादितमस्ति। ईश्वर एव अस्य निखिलस्य प्रपञ्चस्य कारणमस्ति। सर्वस्य अभिन्नं निमित्तोपादानकारणमपि एक एव परमात्मा। येन वस्तुनो निर्माणं भवति तदस्ति तस्य उपादानं कारणम्, अपि यो निर्माति स भवति निमित्तकारणमिति, यथा घटस्य निमित्तकारणस्ति कुम्भकारः, उपादानकारणं भवति मृत्तिका। संसारेऽस्मिन् निमित्तोपादानकारणमस्ति परमात्मा एव। यथा उर्णनाभिः सृजते गृह्णते अर्थात् स एव निमित्तोपादानकारणं तथैव परमात्मा जगतः निमित्तोपादानकारणम्।

## अद्वैतवेदान्तदर्शने सृष्टिप्रक्रियायाः महत्त्वम्*

**उपोद्धातः-**

'वेदान्त' शव्दस्तु उपनिषद् – शब्देनपराविद्याशब्देन वा अभिधीयते। वेदान्तसारकारः सदानन्दः आह,"वेदान्तो नामोपनिषत्प्रमाणम्"।अर्थात्उपनिषदेवप्रमाणम्उपनिषत्प्रमाणम्।उपोनिषदोयत्रप्रमाणमितिवा।उपनिषद्शब्दस्यअर्थसामान्यंनिरुपयन्शङ्कराचार्यःआह,'उप'शब्दोहिसामीप्यमाह।'नि'शब्दश्चनिश्चयार्थः।तस्मादैकात्म्यंनिश्चितम्। साविद्यासहेतुंसंसारंसादयतिइत्युपनिषदुच्यते। वेदान्तदर्शनंतुवेदानामन्तिमंभागमुपनिषदमाधारीकृत्यप्रणीतत्वाद्वेदान्तसंज्ञांलभते। भगवताकृष्णद्वैपायनेनउपनिषदांपरस्परविरुद्ध-प्रतीयमानानांवचसांसमाधानायब्रह्मसूत्राणिप्रणीतानि एताशंवेदान्तसूत्राणांप्रपञ्चमाधारीकृत्यएवविविधमतानिप्रादुर्भूतानि। तत्रभगवताशंकराचार्येण-शारीरकभाष्यमिदंप्राचीनतमत्वाद्तर्कसहत्वाच्चविशिष्टंस्थानंभजते। अत्रैववेदान्तदर्शनंसम्यक्प्र-पञ्चितम्इतिमहर्षिणःस्वीकुर्वन्ति।वस्तुतःशङ्कराचार्येणप्रतिपादितम्अद्वैतमार्गमेववेदान्तेस्वीकृतम्। एवंवेदान्तेउपनिषद्ब्रह्मसूत्र-गीतानाम् अनन्तरं शङ्कराचार्यकृत-भाष्याणिस्तोत्राणिवैशिष्ट्यंभजन्ते। शंकरप्रणीतः शारीरकभाष्ये प्रयुक्ताः शास्त्रीयसिद्धान्ताः यथा – मायासिद्धान्तः, ईश्वरसिद्धान्तः, जीवसिद्धान्तः, ब्रह्मसिद्धान्तः, आत्मसिद्धान्तः, सृष्टिप्रक्रिया, जगत्सिद्धान्तः अध्याससिद्धान्तः, अध्याससिद्धान्तः, आभासवादः, विम्वप्रतिविम्ववादः, मोक्षसिद्धान्तः पञ्चीकरणप्रक्रिया इत्यादयः। उपर्युक्तसिद्धान्तेषु पञ्चीकरणमन्यतमम्। आचार्यः शङ्करः जगत्सृष्टिप्रक्रिया व्याख्या प्रसङ्गे पञ्चीकरणप्रक्रिया-विषये आलोचनां कृतम्।

**पञ्चीकरणशब्दस्य व्युत्पत्तिः-**

'पञ्चीकरणम्' इति शब्दः पञ्चशब्दात् अभूत तद्भावे 'च्वि' प्रत्ययो तथा 'कृ' धातोः 'ल्युट्' प्रत्यययुक्ते निष्पन्नोऽस्ति। अस्यार्थः 'न पञ्चीकृतानीति अपञ्चीकृतानि'तेषां अपञ्चीकृतानां समूह पञ्चीकरणमिति पञ्चीकरणम्। अर्थात् यत् तु पञ्च नास्ति तस्मै पञ्च इति समुह रूपप्रदानस्य नाम 'पञ्चीकरणम्'। पञ्चभूतेषु पञ्चभूतानां मेलनं पञ्चीकरम् इत्युच्यते। तदित्थं निम्निलिखितेषु रूपेषु

1 श्रीमद्भगवद्गीता १८.६१
2 श्रीमद्भागवतम् १.१.१
3 तदेव ११.९.२१
4 मुण्डकोपिनषत् १.१.७

***श्यामसुन्दरसाधुखाँ**
शोधच्छात्रः, अद्वैतवेदान्तविभागःश्रीसदाशिवपरिसरः

विशदीक्रियते। वस्तुतः पञ्चीकरणस्य अर्थः भवति आकाशादिपञ्चसूक्ष्मभूतानां प्रत्येकं समानतया भागद्वयं कृत्वा तेषां दशधा विभजीकरणम्, पुनः तस्मिन् दशभागे प्रथ-मस्य पञ्चभागस्य प्रत्येकं चत्वारभागं विभज्य पुनः तस्मिन् चतुर्षु भागेषु एकं एकं भागं स्वस्य भागार्धं परित्याज्य अन्येषां चतुर्णां भागानां अपरि अर्धभागे मेलनस्य नाम एव पञ्चीकरणम्। अर्थात् प्रत्येकं भूते अन्येषां चतुर्णां भूतानां मिश्रणं नाम पञ्चीकरणम्।

पञ्चीकरणप्रक्रिया-वेदान्तसार कर्ता सदानन्दः यति पञ्चीकरणस्य स्वरूपं स्पष्टयितुं विद्यारण्यविरचितपञ्चदशीग्रन्थतः श्लोकमिदमुधृतवान्-

**"द्विधा विधाय चैकेकं चतुर्धा प्रथमं पुनः।**
**स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चते।।"[1]**

अस्याभिप्रायः यत् प्रत्येकं भूतं भागद्वये विभज्य प्रथमभागद्वयं चतुर्षु भागेषु विभज्य अपरेऽस्मिन् चतुर्णां भूतानां द्वितीयभागे संयोगे कृते एतानि पञ्च आकाशादिभूतानि पञ्चात्मकानि भवन्ति। एतदेव पञ्चीकरणम्।

अर्थात् पञ्चीकृताकाशे आकाशस्य एकार्धभागः वायोः एकाष्टमांशभागः अग्नेः एकाष्टमांशभाग; जलस्य एकाष्टमांशभागः, पृथिव्याः एकाष्टमांशभागश्च विद्यन्ते। पञ्चीकृतवायौ वायोः एकार्धभागः आकाशस्य एकाष्टमांशभागः अग्नेः एकाष्टमांशभागः जलस्य एकाष्टमांशभागः पृथिव्याः एकाष्टमांशभागश्च विद्यन्ते। पञ्चीकृत अग्न्यां अग्नेः एकार्धभागः आकाशस्य एकाष्टमांशभागः वायोः एकाष्टमांशभागः जलस्य एकाष्टमांशभागः पृथिव्याः एकाष्टमांशभागश्च विद्यन्ते। पुनः पञ्चीकृतजले जलस्य एकार्धभागः आकाशस्य एकाष्टमांशभागः वायोः एकाष्टमांशभागः अग्नेः एकाष्टमांशभागः पृथिव्याः एकाष्टमांशभागश्च विद्यन्ते। पञ्चकृतपृथिव्याम् पृथिव्याः एकार्धभागः आकाशस्य एकाष्टमांशभागः वायोः एकाष्टमांशभागः अग्नेः एकाष्टमांशभागः जलस्य एकाष्टमांशभागश्च विद्यन्ते। रेखाचित्रमाध्यमेनपञ्चीकरणप्रक्रिया तथा सृष्टिप्रक्रिया स्पष्टीक्रियते –

पञ्चीकृतसूक्ष्मभूतानि अपञ्चीकृतसूक्ष्मभूतानि स्थूलभूतेषु उपलब्धाः गुणाः

आकाशः-½ आकाशः+ 1/8 तेजः+1/8 वायुः+1/8जलम्+1/8पृथिवी - शब्दः
वायुः- ½ वायुः + 1/8 तेजः+1/8आकाश+1/8जलम्1/8पृथिवी - शब्दः स्पर्शश्च
तेजः-½ तेजः + 1/8 आकाशः+1/8 वायुः+1/8जलम्1/8पृथिवी - शब्दः स्पर्शः रूपञ्च
जलम्-½ जलम् + 1/8 तेजः+1/8 वायुः+1/8आकाशः+1/8पृथिवी - शब्दः स्पर्शः रूपं रसश्च
पृथिवी-½ पृथिवी+1/8 तेजः+1/8वायु+1/8जलम्+1/8पृथिवी -शब्दः स्पर्शः रूपं रसः गन्धश्च

पञ्चीकरणप्रक्रियायां प्रत्येकं सूक्ष्मभूतानाम् एकम् एव रूपं भवति। वस्तुतः एतत्प्रक्रियायानुसारं आकाशः न केवलम् आकाशः अपि तु तत्र अर्धभाग आकाशस्य तथा अन्येषां चतुर्णां भूतानाम् एकाष्टमांशभागं संयोगेन स्थुलः आकाशः उत्पद्यते। अनेन प्रकारेण अन्येषां चतुर्णां भूतानामोतपत्तिः भवति। अस्याः पञ्चीकरणप्रक्रियायाः एतद् अपि एकः परिणामो भवति यत् पूर्वभूतस्य गुण उत्तरेषु भूतेषु समागच्छति। परन्तु यस्मिन् भूते यस्य अंशस्य अधिकं वा प्राधान्यं भवति तस्याधारेण तस्येव नामकरणं भवति। वेदान्तसारकर्ता सदानन्दयतिः पञ्चीकरणसम्बन्धे एकां शङ्का प्रस्तुतवान्। सा शङ्का अप्रामाणिकी एव। इदं पञ्चीकरणं कथम् इति चेत् श्रुतौ अस्य किमपि प्रत्यक्षरूपेण उल्लेखो नास्ति। वेदान्तानां इयं कल्पना अतः अग्राह्या। अस्मिन् प्रसङ्गे एतदपि उक्तं यत् त्रिवृतकरण-प्रक्रियायाः तु उल्लेखः अस्ति परन्तु पञ्चीकरणस्य न कुत्रापि कोऽपि उल्लेखः विद्यते। अतः पञ्चीकरणं यदि स्वीक्रियते तर्हि श्रुतेः विरोधो जायते एतदपि वक्तुं न शक्यते कारणं यत् पञ्चीकरणप्रक्रिया त्रिवृतकरणप्रक्रियायाः परिपूरकबृहत् रूपमस्ति। त्रिवृतकरणप्रक्रियायां अग्नि-जल-पृथिवी पदार्थत्रयम् विद्यते। तत्र अग्न्यामेकार्धभागः अग्निः एकचतुर्थांशभागः जलः एकचतुर्थांशभागः पृथिवी च विद्यन्ते। जले एकार्धभागः जलम् एकचतुर्थांशभागः वायुः एकचतुर्थांशभागः पृथिवी च विद्यन्ते। पृथिव्यां एकार्धभागः पृथिवी एकचतुर्थांशभागः जलः एकचतुर्थांशभागः वायुः च विद्यन्ते। एषा प्रक्रिया त्रिवृतकरणप्रक्रिया रूपे विख्यातः। यत्किमपि भवतु प्रकृतपक्षे वेदान्तदर्शनस्य प्रतिकुलोऽयं सिद्धान्तः। यतो हि वेदान्ते श्रुति एव गरीयसी। अस्याः शङ्कायाः समाधानं कृत्वा सदानन्दः कथमपि यत्- पञ्चीकरणस्य सम्बन्धेऽस्मिन् न कापि अप्रामणिकता वर्तते। यतो हि श्रतौ प्रतिपादिता त्रिवृत्करणप्रक्रिया पञ्चीकरणमेव उपलक्षयति। छान्दग्योपनिषदि वर्तते यत्-"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्यकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवता तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्। "[2]अस्य भावोऽयं यत्– सृष्टेः प्रारम्भे तन्नामधेयं देवतैक्षत यत् अहम् इदानीं जीवात्मारूपे तेजोसि, जले तथा च अन्ये अनुप्रविष्टस्सन् नामरूपे व्याकरवाणि तथा तासां त्रिवृतं त्रिवृतम् एकैकां करवाणि इति। तदा सेयं देवता इमा तिसृ देवता अनेन एव जीवेनात्मनानि प्रविश्य नामरूपे व्याकरोत्। अयमेव पञ्चीकरणसिद्धान्तः श्रुत्युपलक्षितः।

**सृष्टिप्रक्रिया-**

जगतः उत्पत्तौ प्रलये च एका सुव्यवस्था परिदृश्यते अस्माभिः। प्रलयः सृष्टेः विपरीतक्रिया वर्तते। जगत् मायायाः उत्पद्यते माययाश्च विलीयते। माया ईश्वरस्य शक्तिः विद्यते। अतः वक्तुं शक्यते यत् जगत् ईश्वरात् उत्पद्यते ईश्वरे च विलीयते। ईश्वरः जगतः कर्ता

[1]पञ्चदशी. तत्त्वविवेकप्रकरणम्-27
[2]छान्दग्योपनिषद्– 6.3.2-3

धर्ता संहर्ता च अस्ति। मायां नामरूपयोः आश्रयभूता वर्तते। नामरूपे ईश्वरस्य अधीने भवतः। यदा सृष्टिः जायते तदा ईश्वरात् उभावपि अभिन्नौ भवतः। नामरूपयोः बीजरूपेण अव्यक्ता सती विराजते। जगत् ईश्वरात् अभिन्नं वर्तते। सृष्टेः अनन्तरं तत् कार्यावस्थायां तिष्ठति प्रलयानन्तरं कारणावस्थाम् आप्नोति। ईश्वरः जीवानां भोगाय लौकिकवस्तुनां निर्माणं करोति। तानि क्षेत्राणि क्षेत्रज्ञानां पुण्यपापानुसारं विचारयति। जगत् कर्मफलानाम् अधिष्ठानं वर्तते। जगत् नैतिकव्यवस्था वर्तते। ईश्वरः नैतिकः व्यवस्थापकः वर्तते।
"भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमाभ्यां भवत इत्युक्तम्। आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तम्।"[1]

ईश्वरः आकाशं वायुम् अग्निं जलं पृथ्वीं च क्रमशः निरमात्। आकाशः एकः जडः वर्तते। शङ्कराचार्यः आकाशं प्रतिबन्धस्य भावरूपं नैव मन्यते। शब्दगुणेन एव आकाशस्य भावपदार्थत्वेन चिन्तनम्। आकाशः अनित्यः अस्ति। आकाशस्योत्पत्तिः मायातः एवास्ति। आकाशात् वायुरूत्पन्नः, वायोः अग्निः बभूव, अग्नेः जलं बभूव, जलात् पृथ्वी सञ्जाता। आदिशङ्करः सूक्ष्मं महाभूतं च स्वीचकार। उपनिषत्सु पञ्चतन्मात्राणाम् उल्लेखः लभ्यते। सृष्टेः क्रमः इत्थं विविच्यते अव्याकृतनामरूपयोः अधिष्ठात्रीमायातः शब्दतन्मात्रं जायते। शब्दतन्मात्रम् आकाशस्य सूक्ष्मतत्त्वं वर्तते। अस्मिन् केवलं शब्दगुणो भवति। अस्मात् सूक्ष्मवायुः स्पर्शतन्मात्रं जायते। अस्मात् सूक्ष्माग्निः रूपतन्मात्रमभिजायते। तस्मात् सूक्ष्मजलं नाम रसतन्मात्रं सञ्जातम्। ततः सूक्ष्मपृथ्वी तन्नाम गन्धतन्मात्रं सञ्जायते। आकाशस्य गुणः शब्दः एवः। वायोः द्वौ गुणौ शब्दः स्पर्शश्च वर्तते। अग्निः शब्दस्पर्शरूपगुणयुक्तः। जलस्य शब्दः स्पर्शः रूपः सरञ्तेति चत्वारो गुणाः सन्ति। पृथ्वी शब्द-स्पर्श-रूप-रस-गन्धेति पञ्चगुणविशिष्टा वर्तते। महाभूतस्य उत्पत्तिः एषां सूक्ष्मभूतानां पञ्चीकरणप्रक्रियया भवति। प्रत्येकं सूक्ष्मभूतं भागद्वये विभक्तं भवति। प्रत्येकार्धभागोऽपि चतुर्षु भागेषु विभक्तः भवति। एकस्य सूक्ष्मभूतं भागद्वये विभक्तं भवति। एकस्य सूक्ष्मभूतस्य अर्द्धांशभागः अवशिष्टसूक्ष्मभूतस्य प्रत्येकम् अष्टमांशेन संयुक्तं सत् महाभूतम् उत्पद्यते।

शङ्कराचार्यस्य मतानुसारं महाभूतं सूक्ष्मभूतानां संयोगेन सञ्जायते। वेदान्तम् अणुम् अविभज्यतत्त्वरूपेण न स्वीकरोति। अपि तु जडद्रव्यस्य अल्पतमं रूपमेव अणुः वर्तते। ईश्वरः स्वयं स्वसङ्कल्पेन स्थूलसूक्ष्मभूतानां निर्माणं स्वीयमायया अकरोत्। प्रलयसमये पृथिव्याः जले, जलस्य अग्नौ, अग्नेः वायौ, वायोः आकाशे, आकाशस्य ईश्वरस्य मायायां लयः भवति।

स एव परमेश्वरस्तेन तेनात्मवशिष्टमानोऽभिध्यायस्तं तं विकारं सृजतीति। कुतः। तल्लिङ्गात्। तथाहि शास्त्रम् "यः पृथिव्या अन्तरो यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति,"[2]"इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति।"[3]

भूतानामुत्पत्तिक्रमश्चिन्तितः। अथेदानीमप्ययक्रमश्चिन्त्यते। किमनियतेन क्रमेणाप्यय उतोत्पक्रमेणाथवा तद्विपरीतेनेति। त्रयोऽपि चोत्पत्तिस्थितप्रलयाः भूतानां ब्रह्मायताः श्रुयन्ते –"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति,"[4]इति। "तत्रानियमोऽविशेषादिति प्राप्तम्। अथवोत्पतेः क्रमस्य श्रुतत्वात् प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादिति।"[5]

स्थूलं शरीरं पञ्चमहाभूतैः निर्मितं वर्तते। महाप्राणाः ईश्वरेण सृष्टाः। प्राणाः स्थूलशरीरस्य शक्तयः वर्तन्ते।

**उपसंहारः-**

पञ्चीकरणप्रक्रयायाः महत्त्वं आधुनिककाले तथा वर्तमानसमाजे विद्यते। एतद् महत्त्वं तु पञ्चीकरणप्रक्रियामन्तर्गता पञ्चभूतेषु विद्यते। पञ्चभूतानि यथा आकाशः, वायुः, तेजः, जलम्, पृथिवी। प्रत्यकस्मिन् भूते भिन्न भिन्न अवदानमस्ति। यथा आकाशे शब्दगुणः विद्यते, शब्दं विना अस्माकं वार्तालापं कदापि न भविष्यति, तदर्थं तस्य अवदानं अपरिसीम्। वायौ शब्दस्पर्शौ द्वौ गुणौ विद्येते। वयं जानीमः वायुं चक्षुषा द्रष्टुं न शक्यते, तत्तु स्पर्शेन शब्देन वा उपलब्धुं शक्यते। अग्न्यां शब्दः स्पर्शः रूपञ्च विद्यते। वस्तुतः यदा अग्नि वेगेन प्रज्जलति तदा तस्य शब्दगुणः एवं साधारणावस्थायां तस्य स्पर्शः रूपञ्च उपलभ्यते। प्रवाहमानजले शब्दगुणः एवञ्च पानसमये तस्य रस-स्पर्श-रूपाणि उपलब्धुं शक्यते।

इतोऽपि वक्तुं शक्यते यत् आधुनिककाले नूतनतथ्यानि आविष्करणावसरे एषा प्रक्रिया उपयोगी भवति। वस्तुतः पञ्चीकरणप्रक्रियया सह वर्तमानसमाजस्य तथा आधुनिकवैज्ञानिकसिद्धान्तस्य किञ्चित् सादृश्योपलभ्यते। पञ्चीकरणप्रक्रियया वायोः अग्नि भवति, आधुनिकवैज्ञानिकमते वायोः विना तथा $0_2$ विनाअग्निः न प्रज्जलति। आकाशात् वायोरोत्पत्तिः भवति। आधुनिकमते वायस्तरः आकाशात् उर्धे न गन्तुं शक्यते। पञ्चीकरणप्रक्रियायाम् अग्नितः जलस्योत्पत्तिः भवति। आधुनिकदृष्ट्वा अग्निप्रभवात् जलीयवास्पः भवति। इतोऽपि अस्ति यत् जलात् पृथिवी भवति, आधुनिकमते पृथिव्यां जलम् अस्ति तदर्थं प्राणिनां आश्रयस्थलं भवति। वैज्ञानिकमते जले द्वे अणू हाइड्रजेन एकानु अक्सिजेन स्तः। पञ्चीकरणप्रक्रियायां जले एकचतुर्थांशः वायुः विद्यते। एवंरूपेण आधुनिकवैज्ञानिकतथ्यावष्करणाय एषा प्रक्रिया अनस्वीकार्या।

**सहायकग्रन्थसूची**

ईशादिनौ उपनिषद्- शंकराचार्यभाष्यार्थः,गीताप्रेस,गोरक्षपुर-1930
कठोपनिषद्- गीताप्रेस,गोरक्षपुर-1930
छान्दग्योपनिषद्- गीताप्रेस,गोरक्षपुर-1930

[1]ब्रह्मसूत्र-शाङ्करभाष्यम् 2.3.15
[2]बृहदारण्यकोपनिषद् -3.7.3
[3]ब्रह्मसूत्र-शाङ्करभाष्यम् - 2.3.13
[4]तैत्तिरीयोपनिषद् - 3.1.1
[5]ब्रह्मसूत्र-शाङ्करभाष्यम् - 2.3.14

दर्शनसंग्रहः- दीवानन्दचन्दः,चौखम्वा,वाराणसी-1980
अद्वैतवेदान्तसिहत्यकोशः-माद्रासविद्यालयविभागः, माद्रास-1980
आत्मनात्मविवेकः- श्रीशंकराचार्यः,वसुमतीसाहित्यम्,कलिकाता-1994
बृहदारण्यकोपनिषद्- सुरेश्वराचार्यः,चौखम्वासंस्कृतसिरीज, वाराणसी- 1994
ब्रह्मसूत्रशंकरभाष्यम्- श्रीमच्छङ्कराचार्यः,चौखम्वासुरभारती प्रकाशन,वाराणसी- 2012
वेदान्तपरिभाषा- धर्मराजाध्वरिन्द्रः, चौखम्वाविद्याभवनम,वाराणसी-2005
पञ्चदशी- श्रीविद्यारण्यमुनि,चौखम्वासंस्कृतसिरीज आफीस्,वाराणसी- 1998
शंकराचार्यग्रन्थमाला- श्रीमच्छङ्कराचार्यः,वसुमतीसाहित्यम्,कलकाता-1994
वेदान्तमञ्जुषा- दामोदरशास्त्री, कलिकाता, संस्कृतसिरीज-2002
वेदान्तसिद्धान्तः- प्रकाशानन्दः, अच्युतग्रन्थमालाकार्यालयः, काशी-1936
पञ्चपादिकाविवरणम्-श्रीप्रकाशात्मप्रणीतम्,केन्द्रीयसंस्कृतविद्यापीठम्,तिरुपतिः-1984
वेदान्तविवेकः- स्वामी निगमानन्दः,सारस्वतपाठागार,पुरी-2009
वेदान्तविनर्शः- डाँ अभिमुन्यु, परिमलपब्लिकेशन्स,दिल्ली-2006

## अलंकारशास्त्रदृष्ट्या रसः*

भाषासु मुख्या मधुरा देवगीर्वाणभारती तस्यां साहित्यमेव। अयं साहित्यं पुर्णतया रसमवलम्वैव अधितिष्ठति। रसप्रस्थानकाराकाः रसमेव काव्यात्मा रुपेण मन्यन्ते। अतः यस्य एतादृशः प्रयोगः सर्वत्र तस्य स्वरुपविषये आलोचयामोवयम्।

रसशव्दार्थनिर्णयः- रससिन्धोःविन्दुरपि रस एव। यथा तथैव सोपाधिकोऽपि आत्मा रसएव। आवृतपरमानन्दत्वेन अत्यातन्दः साकांक्षा रसप्रेप्सुर्भवति। तदर्थमेवरसप्रतिपाद्यते। पुनः वेदान्तवेद्यः निर्विशेषभगवदुपःरसःसाहित्यशास्त्रे स्थायिविशिष्ठतया वर्ण्यते। यद्यपि सर्वशास्त्रमहातात्पर्य्यविषये रसभिन्नेप्रत्यक्षचैतन्याभिन्ने परब्रह्मणि एव। सः स्थायी अत्यवच्छिन्न भग्न आवरणचैतन्ये प्रयुक्त रसशव्दः काव्यप्रकाशादिशास्त्रे रसगङ्गाधारादौ प्रयोगः। अतएव रसइत्युक्ते सः प्रकृत्याद्यतीत स्वरूपतटस्थाशक्ति ब्रह्म एव। यतो हि उपनिषद्ष्वपि "रसो वै रसः"इति।

रसो वै रसः पदव्याख्या सः इति पदेन उपमेयं द्योत्यते। रसेति उपमानं वै इति औपम्यवाचक शव्दः। अत सः इति पदेनब्रह्मं द्यौतते। वेदान्तादि शास्त्रे सच्चिदानन्दद्वयं ब्रह्ममिति वर्णितमस्ति यद् नित्यशास्वतसनातन ज्ञानमयमानन्दमयामिति स एव ब्रह्मः। स च अद्वयं एकमेव। यतो हि उच्यते-

**"एकं सद्विप्रा वहुधावदन्ति"।**

इत्यत्र ब्रह्मणो रसरूपत्वं च तदवाप्तौ आनन्दोपलव्धिर्भवति। कथमानन्दः? अस्यत्तरे तैत्तिरीयोपनिषदि उच्यते-

"सः एषानन्दस्य मीमांसा भवति। युवा स्यात् साधुयुवाऽध्यायक आशिष्टो द्रढिष्ठो वलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णास्यात्। सएको मानुषानन्दः।

***शोधार्थी – चिरञ्जितरायः, विभागः- साहित्यम्।**
राष्ट्रियसंस्कृतसंस्थानम् एकलव्यपरिसरः, अगरतला

**ते ये शतं मानुषानन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं मानुष्यगन्धर्वाणामानन्दाः।स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं देवगन्धर्वाणामानन्दाः। स एको पितृणां चिरलोकोलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं पितृणां चिरलोकोलोकानामानन्दाः। स एको आजानजानामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं आजानजानामानन्दाः। स एको कर्मदेवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं कर्मदेवानामानन्दाः। सएकोदेवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतंइन्द्रस्यानन्दाः। स एको वृहस्पतेरानन्दः श्रोत्रियस्य चाकाम्हतस्य।**
**ते ये शतं वृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।**
**ते ये शतं प्रजापतेरानन्दाः सएको ब्रह्मणः आनन्दः श्रोत्रियस्य चाकामहतस्य"।**
**अयमेवानन्दः रसेति।**

ब्राह्मीस्थिति- देहप्रपञ्चापगमे चित्तस्य ततश्चेदं ब्रह्मेति ज्ञानं युगपद अहमानन्दोऽहमान्दोऽहमानन्देति वोधो भवति। तदा स रसो स्थायी भावमुपलभ्यमानानन्दमनुभूपते इति।

रससिद्धान्तस्रोतः-भरतमुनिना रस सिद्धान्तस्याविस्कारो नैव कृतः। प्रत्युतः श्रुतिस्मृति पुराणादिष्वपि कालेषु एव रससुधाधारा प्रचलिता। परन्तु नाट्यशास्त्रे वैज्ञानिकप्रायोगिक स्वरूपतां प्रापितः। महर्षिणा भरतेन निर्दिष्यिते रस इति कः पदार्थः? उच्यते आस्वाद्यमानत्वात्। कथमास्याद्यते रसः? यथा हि नानाव्यञ्जनसंस्कृतान्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषाहर्षादीञ्चाधिगच्छन्ति। तथैव–नानाभावाभिव्यञ्जनात् स्थायिभावात् सहृदया आस्वादयन्ति। दर्षं चानुभवन्ति। रसभावयोश्च परस्परं पोषकत्वं– यतो हि नाट्यशास्त्रे-

**"न भावहितोस्ति रसःन भाव रसवर्जितः।** इति।

रसः सर्वेषां भावानां मूलम् यथा- वीज वृक्षपुष्पादेः सम्वन्धः

**यथावीजाद्भवेद्वृक्षोवृक्षात्पुष्पफलं तथा।**
**तथामूलं रसाः सर्वे तेभ्योभावाः व्यवस्थिताः**इति।

आचार्य विश्वनाथः साहित्यदर्पणे रसं ब्रह्मस्वादसहोदरेति व्याचष्टे-

**वेदान्दरस्पर्शशुन्यो ब्रह्मस्वादसहोदरः।**
**स्वाकारवदभिन्नत्वे नामास्वाद्यते रसः। ।**

रसस्य आश्वाद्यत्वम् अनुभूतिविषयत्वं च मम्मटेन वर्ण्यते पानकरसत्योपेन चर्व्यमाणः हृदयमिव प्रविशन् अन्यत्सर्वमिवातिरोदधत् ब्रह्मास्वादमिवानुभावयत् अलोकिक चमत्कारी शृङ्गारादिको रसः। अपि तु भरतेन नाट्यशास्त्रे उच्यते-

**न हि रसादृते कश्चिदर्थः प्रवर्तते। । इति।**

कथं रसनिष्पत्तिरिति जिज्ञासायां तेनोच्यते विभावानुभाव्यभिचारिसंयोगाद्रसनिष्पत्तिः। अत्र विभावाः कारणानि अनुभावाः कार्य्यानि व्यभिचारिणाश्च सदकारिणः एषां संयोगाद् रसस्य निष्पत्तिः।
उक्तं च मम्मटेन –

**कारणान्यथ कार्य्याणि सदकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके चान्नाटककाव्ययोः। । इति।**

विभावानुभावास्तद् कथ्यन्ते व्याभिचारिणः। व्यक्तः सर्वेभिभावाव्यैः स्थायीभावोरसः स्मृतः। विभावानुभावव्यभिचारि एते सर्वे भावाः। तर्हि भावानां संयोगात् रसनिष्पत्तिः। अत्राह भाव इति कस्मात्? किं भवन्ति इति भावाः? किं वा भावयन्तीति भावाः। प्रश्नमिदं नाट्यशास्त्रे वर्तते। भावशव्दस्य निष्पत्तिः अनेन रूपेण भवितुमर्हति भू धातोः घञ् प्रत्यये यस्यार्थः उत्पद्यते। पुनः भू+णिच्+घञ् अनेन रूपेण भवितुमर्हति। तदर्थं भरतेनोक्तं यत् –

वागङ्गसत्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। इति।

महर्षि भावप्रकरणस्योपसंहारे भावानां संख्या एकोनपञ्चाशदित्युक्तम्। एतेषु भावेषु अष्टस्थायिभावाः। यथा-

**रतिर्हासश्चशोकश्चक्रोधोत्साहौ भयं तथा।**
**जुगुप्साविस्मयश्चेति स्थायिभावाः प्रकीर्तिताः। । इति।**
**तद्वत् अष्टसात्त्विकभावाः त्रयत्रिंशत्व्यभिचारिभावाः।**
**स्तम्भः स्वेदोऽथरोमाञ्चः स्वरस्वादोऽथवेपथुः।**
**वैवर्ण्यमश्रुप्रलयमित्यष्टौ सात्त्विकाः स्मृताः। । इति।**

पुनश्च, त्रयत्रिंशत् व्यभिचारिभावाः। तदर्थमुच्यते-

**"नानाभिनयसम्बद्धान् भावयन्ति रसानिमान।**
**यस्मात्तस्मादमी भावा वीज्ञेया नाट्ययोत्कृभिः॥"ना..शा**

1. विभावः- अथः विभावः इति कस्मात्? उच्यते-"विभावो नाम विज्ञानार्थः। विभावः कारणं निमित्तं हेतुरिति पर्यायः" इति अपेक्षायाम् अभिनवगुप्तस्य विचारः-"तत्र यद्यपि प्रकरणाच्चित्तवृत्युद्भवहेतुर्विषयो विभावशव्द-स्यार्थ इति ज्ञातं तथापि तत्र प्रवृत्तिनिमित्तं जिज्ञास्यमानस्तदेव प्रश्नयति-विभाव इतीति। तस्मादृतुमाल्यदयोऽत्र विभावशव्देन किमिति व्यपदिष्टा इति भावः"। विभावप्रसङ्गे नाट्यशास्त्रे भरतेन प्रतिपादितम्-"विभाव्यतेऽनेन वागङ्गसत्त्वाभिनय

इति विभावः। यथा विभावितं विज्ञातमित्यनर्थावन्तरम्'। अत्र च अभिनवगुप्तेन - अत्रोत्तरं विभाव्यन्त इत्यादि। वागादयोऽभिनया येषां स्थायिव्यभिचारिणां ते वागाद्यभिनयसहिता विभाव्यन्ते विशष्ट- तया ज्ञायन्ते। तदर्थं नाट्यशास्त्रे महर्षिणा-

**"वहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः।**
**अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥'**

2. अनुभावः- अथः अनुभावः इति कस्मात्? उच्यते- अनुभाव्यतेऽनेन वागङ्ग सत्त्वकृतोऽभिनय इति। यस्मात् अनेन वागङ्गाभिनयेन सत्त्वकृतऽभिनय इति। यस्मात् अनेन वागङ्गाभिनयेन शाखाङ्गोपाङ्गसंयुक्तः अनुभाव्यते तद् हेतु एव अनुभावः नाम्ना प्रसिद्धः-

**"वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।**
**शाखाङ्गोपाङ्गसंयूक्तस्त्वनुभावस्ततः स्मृतः॥' ना.शा.**

शाखाङ्गरप्रभृतयः तित्य अभिनयश्च अङ्गश्च। "अङ्ग" इत्युक्ते शिरः-हस्त- वृक्षः- पार्श्वः- कटि- पादादयः षडविधानाम् अङ्गानाम् आङ्गिकाभिनयः। तस्य उपाङ्गश्च स्कन्ध-दृष्टि-भ्रू- अक्षिपुट – अक्षितारका- कपोल – नासिका- हनु- अधर – दन्त – जिह्वा-चिवुकादयः। "अत्र विभावानुभावौ लोकप्रसद्धावेव लोकस्वभावानुगतत्वाच्च तयोलक्षणं नोच्यतेऽहतिप्रसङ्गनिवृत्त्यर्थम्"। भवति चात्र श्लोकः-

**"लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः।**
**अनुभावा विभावाश्च ज्ञेयास्त्वभिनये वधैः॥" ना. शा.**

3. व्यभिचारिभावः-"व्यभिचारिण इति कस्मात्? उच्यते- वि- अभि इत्येतावुपसर्गो चर इति गत्यर्थो धातुः। विविधमाभिमुखेन रसेषु चरन्तीति व्यभिचारिणः। वागङ्गसत्त्वपेतान प्रयोगे रसान्नयन्तीति व्यभिचारिणः।
अत्राह- कथं नयन्तीति?उच्यते- लोकसिद्धान्त एषः- यथा सूर्यः इदं दिनं नक्षत्रं वा नयतीति। न च तेन वाहुभ्यां स्कन्धेन वा नीयते। किन्तु लोकप्रसिद्धमेतद् यथेदं सूर्यो नक्षत्रं दिनं वा नयतीति। एवमेते प्रयोग नयन्तीति व्यभिचारिण इत्यवगन्तव्या नाम।
व्यभिचारि भावानां संख्या त्रयत्रिंशत्। "निर्वेद दारिद्यव्याध्यवमाना विक्षेपाक्रुष्ट क्रोधताडनेष्टजनवियोगतज्ञाना-दिभिर्विभावैः समुत्पद्ये। स्त्रनीचकुसत्वानां रूदितनिःश्वसितोच्छासितसम्प्रधारणादिभिरनुभावैस्तमभिनयेत्। "
4. स्थायीभावः-अष्टवादीनां मते स्थायिभावमपि अष्टः। ते यथा-

**"अविरूद्धविरूद्ध वा य तिरोधातुमोक्षमा।**
**आस्वादाङ्कुरेऽसौ चतैष्टौ स्थायिनो मताः॥"**

अविरूद्ध विरूद्ध वा कोऽपि प्रकारः सञ्चारभावोऽपि वा। यस्य भावस्य तिरोधातुम् अक्षमा इह अश्वादं कुरस्व स्कन्दस्वरुपः स एव स्थायी भाव। स च अन्तकरणस्य तृत्तिविशेषः,अतः ते उत्पद्यते विनश्यते च। विनाशशीलमपि ते संस्काररूपेण अन्तकरने चिरं तिष्ठति। तस्मात् कारणात् प्रतीतिकाले ते अनुभवयोग्या। एतस्मात कारणात् एते स्थायीभावा इति क्ष्यातः। काव्यार्थश्च,आस्वाद्यरसस्य भावकः निष्पादकः वा इति भावः। आदौ ते संस्काररूपे अनास्वाद्य तिष्ठन्ति। विभावादी कारणात् साधारणीकरण प्रकृयया ते क्रमास्वाद्यमानम् यदा भवति तदा एव रसनिष्पत्ति।
5. सात्विकभावः- किमनो भावाः सत्वेन विनाभिनीयन्ते यस्मादुच्यन्ते एते सात्विक इति। इह हि सत्त्वं नाम मनःप्रभवम्। तच्चसमाहितमनस्त्वादुच्यते मनसः समाधौ सत्वानाष्पात्तिरभवतीति। तस् च योऽसौ स्वभाव रामाञ्चाश्रूवैवर्ण्यादिलक्षणो यथाभावोपगतः,स न शक्योऽन्यमनसा कर्त्तुमिति। लोकस्वभावानुकरणाच्च नाट्यस्य सत्तमीप्सितम्। को दृष्टान्तः- इह हि नाट्यधर्मी प्रवृत्ताः सुखदुखकृता भावास्तथा सत्त्वविशुद्धाः कार्याः यथा स्वरूपा भवन्ति। अत्राह को दृष्टान्त इति चेत, अत्रोच्येते- इह हि नाट्यधर्मः प्रवृत्तः सुखदुःखकृतो भावः तथा- सत्त्वविशुद्धाधिष्ठातः कार्यो यथा स्वरूपो भवति। दुःखं नाम रोदनात्मकं तत् कथमदुःखितेन सुखं च प्रहर्षात्मकमसुखितेनाभिनयेत्?एतदेवास्य दुःखितेन प्रङष्टेन वास्नरोमाञ्चौ प्रदर्शयितव्याविति कृत्वा सात्त्विका भावा इत्यभिव्याख्यातः। स्तम्थ – स्वेद – सेमाञ्च – स्वरभेद – वेपथु- वैवण्य – अश्रु-प्रलय च इति अष्टः सात्तिकभावः।

एवं साहित्यदर्पणकारेन विश्वनाथेन रसास्वादं ब्रह्मस्वादसदृशं भणितं -

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेदान्तस्पर्शशून्य ब्रह्मास्वादसहोदरः॥**
**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥सा. द. 3/2,3**

पण्डितराजजगन्नाखेनापि रसस्वरूपानिरूणावसरे रसो नाम भग्नावरणाचिद्विशिष्टो रत्यातिः रत्याद्यवच्छिन्ना वा भग्नावरणचित् इत्यभिप्रेत्य उपसंहारो व्यधीयत। एवं रसस्य चैतन्यरूपत्वे अर्थात् ब्रह्मरूपत्वे सिद्धिः। अतः तैत्तिरीयोपनिषदि रसं ब्मसदृशत्वेन स्वीकृत्यउच्यते यत्- रसो वै सः रसं लब्धैवायमानन्दीभवति। महर्षिभरतस्य रससूत्रमवलम्व्य विभिन्ना पण्डिताः भिन्नानि मतानि जगदुः। ततः वादचतुष्ट्यं बभुवुः। ते सन्ति –
१) भट्टलोल्लटेन मीमांसादर्शनमाश्रित्य उत्पत्तिवादः,
२) शङ्कुकेन न्यायदर्शनमाश्रित्य अनुमितिवादः,
३) भट्टनायकेन सांख्यदर्शनमाश्रित्य भुक्तिवादः,
४) अभिनवगुप्तेन च वेदान्तदर्शनमाश्रित्य अभिव्यक्तिवादः चेति।

तत्व दृष्ट्या विचारेण भग्नावरणस्य रत्यादि विषयकस्यात्मचैतन्यसैव वस्तूतः स्वरूपतया रसः वै सः श्रुत्या काव्यरसस्य सामञ्जस्यं जायते। स एवायमात्मा तैत्तिरीयोपनिषदो व्रह्वल्यां रसरूपेण भूयोभूयः प्रतिपादितः।

**ग्रन्थसूचीः-**

१. तैत्तिरीयोपनिषद् (वांला) – गीताप्रेस।
२. साहित्यदर्पणः(वांला) – विमलकुमारमुख्योपाध्यायः।

३. वैदिक साहित्यस्य रुपरेखा(वांला) – ड. शान्तिवन्धोपाध्याय।
४. नाट्यशास्त्रदिशा(हिन्दी)– प्रो. ड. कुसुमरेड्डि।
५. उपनिषद्(वांला) – गीताप्रेस।
६. संस्कृतसाहित्यस्येतिहासः(वांला) –धीरेन्दनाथवन्धोपाध्यायः।
७.साहित्यदर्पणः(वांला)डा.उदयचन्द्रवन्धोपाध्यायः।

## क्रममुक्तिः*

वेदान्तनये अन्यतमो मुख्यविषयस्तावत्क्रममुक्तिः। अतो वेदान्तदिशा प्रपञ्चार्थं ममायं प्रयासः। वेदान्ते जीवन्मुक्तिविदेहमुक्तिरित्येतयोरूर्ध्वं का नाम क्रमविमुक्तिरिति तन्निरूपितम्। तत्र प्रतिपादितं यत्-यः खलु ब्रह्मोपासकोऽस्मिन्देहे वर्त्तमाने सति पूर्णं ब्रह्मज्ञानं प्राप्य देहान्ते भगवत्प्रसादान्मुक्तो भवति, तस्य सद्यमुक्तिः, किन्तु यस्य तु न तथा, स देहपातानन्तरमस्माच्छरी-रदुत्क्रान्तस्सन्पुण्यवशाद्ब्रह्मलोकान्प्राप्नोति चेन्न ततः पुनरस्मिन्संसारे आवर्तते। तत्रैव स्थित्वा साधनद्वारा पूर्णं ब्रह्मज्ञानं प्राप्य मुक्तो भवति। सैव क्रममुक्तिः। किन्त्वस्मिन्सन्दर्भे साम्प्रदायिकानां मतभेदो नितरां दृश्यते एव। तत्रापि श्रुतिवाक्यानामर्थनिर्धारणे समन्वयाभाव एव कारणमिति मन्ये। अतो भगवता ब्रह्मसूत्रकारेण क्रमविमुक्तिविषये सिद्धान्तसमन्वयो यथा उपन्यस्तस्तत्सर्वमिदानीं सविस्तारमालोच्यते।

जीवस्य देहान्ते सप्तदशावयवविशिष्टसूक्ष्मशरीरं पञ्चभौतिकात्स्थूलदेहादुत्क्रामति। तत्रादौ सूक्ष्मशरी-राङ्गभूतवाङ्मनसि सम्पद्यते[1]। वागेन्द्रियस्यैव मनसि सम्पादनं बोध्यम्, न तु वाग्वृत्तेः, "वक्त्युपरमे वागिन्द्रियस्य प्रमाणान्तरेणानुपलभ्यमानत्वात्"[2] इति। ततो वाचमनु चक्षुरादिसर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते। तत्रापि श्रुतिः, "तस्मादुपशान्तस्तेजः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः"[3] इति। अत्र सम्पत्तिस्तु न लयरूपा, अपि तु संयोगरूपा ज्ञेया, यतोऽनुपादानभूते मनसि वाचो लयो न सम्भवति। अपि च "अविदुषा देहान्तरप्रतिपत्तौ वागाद्यनुवृत्तेरपेक्षितत्वात्, विदुषो वागादीनां लयस्य परमात्मनि वक्ष्यमाणत्वाच्च"[4] अत्र सम्पत्तिशब्दस्य न लयरूपोऽर्थो विवक्षित इति। ततः वागिन्द्रियसंयुक्तमनः प्राणे सम्पद्यते। एवं सर्वाणि इन्द्रियाणि प्राणे एव संयुज्यन्ते। प्राणश्च स्वाध्यक्षभूते जीवात्मनि संयुज्यते। ननु "प्राणस्तेजसि"[5] इत्यादिनां प्राणानां तेजसि एव विलय इत्युक्तवात् श्रुतिविरोध एवेति चेत्, उच्यते, तन्न। तत्र तु जीवविशिष्टप्राणानां तेजसि लयस्य विवक्षितत्वात्। अतः आदौ जीवात्मनि संयुक्ताः सन्तः ततः प्राणास्तेजसि समवलीयन्ते इति स्वीकार्यम्[6], अन्यथा, "तमुत्क्रान्तं प्राणोऽनूक्रामति"[7] इति श्रुतेर्विरोधापत्तिः स्यात्। अपि च "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति"[8] इत्यादिश्रुतिवाक्यादपि प्राणस्य जीवे एव लयः स्पष्टतया प्रतीयते। उक्तञ्च श्रीमच्छङ्कराचार्येण, "एवमेवममात्मानं भोक्तारमन्तकाले मरणकाले सर्वे प्राणा वागादयोऽभिसमायान्ति"[9] इति। अतो विशीर्णे देहे जीवस्योत्क्रान्तिर्येन क्रमेणाऽभिसम्पद्यते तदेवं ज्ञातव्यम्, म्रियमाणस्य वाङ्मनस्यादावुपसंह्रीयते ततो मनः प्राणे सम्पद्यते ततः प्राणाः स्वाध्यक्षभूते जीवात्मन्यवलीयन्ते, जीवस्तेजसि पुनस्तेजो देवतायां प्रशाम्यतीति। एतावता उक्तमुत्क्रान्तिप्रकारं सर्वेषां विदुषामविदुषामेव समानमिति द्वैताद्वैतसिद्धान्तः।

ननु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"[10], इत्यादिषु कठश्रुतिषु विदुषोऽत्रैवाऽमृतत्वप्राप्तिश्रवणादविदुष एवोत्क्रान्त्यादि स्यादिति चेत्, उच्यते, मैवम्। यतः श्रुतिष्वेव एवमप्युच्यते, "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते, स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां

*शुभङ्करसामन्तः
शोधच्छात्रः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः ५१७५०२, फोन नं-8926367243 Gmail id– shusa142013@gmail.com

[1] "अस्य सोम्य पुरुषस्य प्रथतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजाः परस्यां देवतायाम्।"- छान्दोग्योपनिषत् (६/८/६)
[2] अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता-संस्करणम्(पृष्ठम्- ८९०)
[3] प्रश्नोपनिषत् (३/९)
[4] ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ (४/२/१)
[5] छान्दोग्योपनिषत् (६/८/६)
[6] "प्राणो जीवेन संयुज्यते।.......जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरित फलितार्थः"- ब्रह्मसूत्रम्, वेदान्तपारिजात्सौरभ-भाष्यम् (४/२/४)
[7] बृहदारण्यकोपनिषत् (४/४/२)
[8] बृहदारण्यकोपनिषत् (४/३/३८)
[9] तदेव, शाङ्करभाष्यम्।
[10] कठोपनिषत् (२/३/१४)

प्रपतनं निरोधोऽविदुषाम्"[1] इति; अपि च "तस्य हैतस्य हृदयाग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्द्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः"[2] इति, पुनरपि "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानामाभिनिःसृतैका। तयोर्द्ध्मायान्नमृतत्वमेति विष्वङ्ङुत्क्रमणे भवन्ति....."[3] इति। अतो मृत्युकाले यदा जीवात्माऽस्मा-च्छरीरान्निर्गच्छति तदाऽब्रह्मज्ञवैदिककर्मचारी यथोक्तं सूर्यरश्मादिमार्गमनुसृत्य ऊर्ध्वं स्वर्गादिलोकं प्राप्नुवन्ति, एवञ्च ब्रह्मज्ञपुरुषाः ओम्कारमनुध्यायन्तत ऊर्ध्वं गत्वाऽचिरमेवादित्यमाप्नुवन्ति। आदित्य एव ब्रह्मज्ञपुरुषस्य ब्रह्मलोकप्राप्तिविषये द्वारभूतः, पुनरब्रह्मज्ञपुरुषस्य ब्रह्मलोकमार्गे प्रतिबन्धककपाटस्वरूप इति। अपि च एकोत्तरशतनाड्यः सन्ति हृदयदेशे यास्वेकोर्ध्वं मूर्द्धानमभिगच्छति। तेन पथा ब्रह्मविदूर्ध्वं गच्छन्नमृतत्त्वमाप्नोति। इतरास्तु संसाराभिमुखिनाड्यः यासु सञ्चरन्तोऽब्रह्मज्ञा जीवा अस्मिन्संसारे एव पुनरावर्त्तन्ते। तत्रापि मूर्द्धन्-उत्क्रान्तिर्विदुषामेव, इतरेषान्तु चक्षुरादिभ्य इति विशेषः। तेन 'शतञ्चैका...' इति छान्दोग्यश्रुतिभिरितरेषां समन्वयः स्यात्। अतः 'अत्र ब्रह्म समश्नुते'- इत्यादिश्रुतिषु यथा उक्तं, यत् जीवो यदा पूर्णतया निष्कामो भवति तदा मर्त्योऽपि अमृतो भवति, अस्मिन्देहे जीवन्नेवामृतत्त्वमाप्नोति, अथ ब्रह्मसाक्षात्कारजनितमानन्दमस्मिन्देहे एवानुभवति इति[4], तेन ब्रह्मज्ञपुरुषस्य उत्क्रान्तिनिषेधस्तु नाभिव्यज्यते, तत्रैवाऽनन्तरश्रुतिषु ब्रह्मज्ञपुरुषस्याप्युत्क्रान्तेरुपदेशश्रवणात्, "शतञ्चैका..."[5] इत्यादिछान्दोग्यश्रुतेः पुनरुल्लेखत्वाच्च। अतोऽस्मिन्देहे ब्रह्मावाप्तिर्यदुक्तं तत्र तस्य ब्रह्मोपासकस्योपासनाकाले एव देहेन्द्रियसम्बन्ध-नाशराहित्येऽपि पूर्वोत्तरयोरघयोर्लोके सति ध्रुवास्मृत्याख्यब्रह्मानुभूतिरेव लक्षिता, ध्रुवास्मृतेर्बृहत्त्वात्। उक्तञ्च भगवता ब्रह्मसूत्रकारेण, "समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य"[6] इति। अत्र 'अनुपोष्य' इति 'उष दाहे' इति धातोः रूपम्। अतोऽस्य 'अदग्ध्वा देहसम्बन्धः' इत्येवार्थः। तस्माल्लिङ्गशरीरस्य दाहात्प्राक् न परममोक्षोपपत्तिरिति बोध्यम्। तत्रापि श्रुतिः, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य"[7] इति। पुनो देशविशेषं प्राप्यैव लिङ्गशरीरस्य लयः श्रुतिषूपदिष्टः "इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति"[8] इत्यादिना। उक्तञ्च मुण्डकोपनिषदि "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे"[9] इति।

अतः ये खलु संन्यासिनः शुद्धसत्त्वाः, वेदान्तविज्ञानं येष्वधिगतम्, ते मुमुक्षवो देहपरित्यागकाले ब्रह्मलोकान्समेत्यामृतत्वं प्राप्य मुच्यन्ते इति। किन्त्वस्य मन्त्रस्य भाष्ये श्रीमच्छङ्कराचार्येण एवमुक्तम्— "......बहुत्वात् ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवत् दृश्यते प्राप्यते च। अथः बहुवचनं ब्रह्मलोकेष्वत ब्रह्मणीत्यर्थः। ......परिमुच्यन्ते परिसमन्तान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते...। देशान्तरपरिच्छिन्ना हि गतिः संसारविषयैव। परिच्छिन्नसाधनसाध्यत्वात्। ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम्...."[10] इति। अत्र वेदान्तविज्ञानप्राप्तेन विदुषा कथमेकोऽपि ब्रह्मलोकोऽनेकवत् दृश्यते इत्येतच्चिन्त्यम्। एकस्मिन्विषये बहुत्वदर्शनं त्वाध्यासिको भ्रम एव। पुनर्यदि विदुषैव बहुत्वं दृश्यते प्राप्यतेऽपि कथं तर्हि ब्रह्मणो बहुत्वाङ्गीकारेऽनुपपत्तिरित्यद्वैतवादिभिर्वक्तव्यम्। श्रुतेः स्वाभिमतं क्लेशकल्पितं व्याख्यानं तु न युक्तमिति मन्ये। अतो विदुषामप्युत्क्रान्त्यादि समानमेवेति सिद्धान्तः।

किञ्च, यद्यपि "यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुजं गच्छति"[11] इत्यादिना श्रुतिवचनेन दक्षिणायनमृतस्य चन्द्रमण्डलप्राप्तिरेव श्रूयते, किन्तु दक्षिणायने मृतस्यापि विदुषो न पुनरावृत्तिरिति भगवतो ब्रह्मसूत्रकारस्याभिमतम्, "अतश्चायनेऽपि दक्षिणे"[12] इति सूत्रितात्। नन्वत्र "शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुनः"[13]इति गीतोक्तवचनेन विरोध इति चेदुच्यते, तन्न। शास्त्रवचनमिदं त्वविद्वद्विषयकमिति ज्ञेयम्, न तु विद्विद्विषयकम्। विदुषान्तूत्तरपूर्वयोः शुभाशुभयोः ब्रह्मज्ञानेन विनाशसम्भवात्पुनो देहपाते सति प्रारब्धकर्माणामप्यभावान्नास्ति पुनरागमनाशङ्का, अतो न मार्गविशेषे फलविशेषोऽपि शङ्क्यः। ननु कथं तर्हि भीष्मस्य उत्तरायणप्रतीक्षा इति चेत्, उच्यते, "धर्मप्रवर्तनार्थं स्वच्छन्दमरणशक्तिज्ञापनार्थं च"[14] इति। अपि च, गीतावचनेषु ब्रह्मनिष्ठान्प्रति देवयानाख्यसृति, पुनः कर्मनिष्ठान्प्रति पितृयानाख्यसृति यत्र दृश्येते, तत्रापि गतिद्वयस्यावबोधनमेव इष्टम्,न तु विदुषां कृते कालविशेषावधारणम्। उक्तञ्च श्रीनिवासाचार्येण, "यतश्चैते स्मार्ते स्मृतिविषयभूते ज्ञानाङ्गत्वकर्माङ्गत्वाभ्यां स्मरणार्हे 'नैते सृती पार्थ! जानन्योगी मुह्यति कश्चने'त्युपसंहारात्"[15]। अपि च कालशब्देनात्र स्मृतौ न समयविशेषो बोध्यः, कालाभिमानिदेवतायुक्तो मार्ग एवात्र कालशब्दस्यार्थः, अग्निधूमयोः कालत्वासम्भवात्।[16]

---

[1]छान्दोग्योपनिषत् (८/३/५)

[2]बृहदारण्यकोपनिषत् (४/४/२)

[3]छान्दोग्योपनिषत् (८/६/६)

[4] "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"॥ अपि च
"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम्"॥ कठोपनिषत् (२/३/१४,१५)

[5]तदेव (२/३/१६)

[6]ब्रह्मसूत्रम् (४/२/७)

[7]छान्दोग्योपनिषत् (६/१४/२)

[8]प्रश्नोपनिषत् (६/५)

[9]मुण्डकोपनिषत् (३/२/६)

[10]तदेव, शाङ्करभाष्यम्

[11]महानारायणोपनिषत् (२५/१)

[12]ब्रह्मसूत्रम (४/२/१९)

[13]श्रीमद्भगवद्गीता (८/२६)

[14]ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ (४/२/१९)

[15]ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ (४/२/२०)

[16]तदेव

श्रुतौ त्ववमप्युक्तं यद्ब्रह्मज्ञपुरुषाणां देहान्ते शवकर्माभावेऽपि तेऽर्चिराभिमानिनीं देवतामेव प्रतिपद्यन्ते। अतोऽर्चिर्देवताया अहरभिमानिनीं देवताम्, ततः शुक्लपक्षदेवताम्, तत उत्तरायणदेवताम्, ततः संवत्सरदेवताम्, ततः आदित्यं प्राप्नुवन्ति। अस्मिन्पथि गच्छन्तो न पुनरिह संसारे आवर्तन्ते। उक्तञ्च बृहदारण्यकेऽपि

"ते य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते....परावतो वसन्ति तेषां न पुनरावृत्तिः"[1]।

नन्वर्चिरादिना ब्रह्मप्राप्तिर्यच्छ्रुतिषु विधीयते किं सा कार्यब्रह्मविषयिका उत परब्रह्मविषयिकेति जिज्ञासा नितरामापतेत्। तत्र बादरिमुनिना एवमुक्तम् यदर्चिरादिदेवताः उपासकान्कार्यभूतहिरण्यगर्भमेव प्रापयति, यतः कार्यब्रह्म एव देशविशेषवत्वेनाऽवगम्यते, न तु परब्रह्म। पुनः "पुरुषोऽमानव एत्य ब्रह्मलोकान्गमयति" इत्यादौ ब्रह्मलोकपदे बहुवचनदर्शनादप्येतदेव ज्ञायते यदर्चिरादिदेवताः कार्यब्रह्म एव गमयन्तीति। स्यादेतत् कथं तर्हि 'नावर्त्तन्ते', 'अमृतत्वमेति' इत्यादिना अपुनरावृत्तिश्रवणं संगच्छेदिति चेदुच्यते बादरिमुनिना, न ह हिरण्यगर्भप्राप्तावपि अपुनरावृत्तिरनुपपन्ना, यतो महाप्रलये हिरण्यगर्भस्यापि लये सति तदध्यक्षेण हिरण्यगर्भेण सह तल्लोकवासिनः सर्वे परब्रह्मभावमाप्नुवन्ति। अथ महाप्रलयात्प्राक् पुनरावृत्तिस्मृतिः, पुनो महाप्रलयान्ते अपुनरावृत्तिश्रुतिरुपपद्यते। तत्रापि "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चारे। परस्यान्ते कृतात्मनः प्रविशन्ति परं पदम्"[2], इति स्मृतिः प्रसिद्धा।

आचार्यजैमिनिस्तु तद्विपरीतमेव मन्यते। अर्चिरादिदेवता विद्वान्पुरुषान्परब्रह्म एव प्रापयन्तीति तस्य मतम्। यतो ब्रह्मशब्देनात्र ['य एनान् ब्रह्म गमयति'] परब्रह्मैवाऽभिधीयते "तस्यैव शक्यत्वेन तत्रैव वृत्तित्वादन्यथा गौणत्वप्रसङ्गः, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्"[3] इति, अतो ब्रह्मशब्दस्यात्र कार्यब्रह्मपरत्वेऽभिधानं चेद्गौणत्वमेव स्वीकार्यम्, अन्यथा तु 'ब्रह्मणं गमयति' इत्येव स्यात्। अत उक्तं भगवता ब्रह्मसूत्रकारेण, "परं जैमिनिर्मुख्यत्वात्"[4], "दर्शनाच्च"[5] इति। ननु "ते ब्रह्मलोके तु परान्तकाले" इत्यादौ लोकशब्दे बहुवचनप्रयोगात्पुनो देशविशेषस्योल्लेखादत्र कार्यब्रह्म एव विशेषितमिति चेदुच्यते लोकप्रदे-शबाहुल्यविवक्षयाऽत्र बहुवचनस्य प्रयोगो न दोषाय, "ये लोका मम विमलाः सकृद्विभान्ति ब्रह्माद्यैः"[6] इत्यादि-श्रीभगवद्वचनात्। पुनो देशविशेषवर्त्तित्वेनापि परब्रह्मणः कार्यब्रह्मत्वं नाशङ्कितव्यम्, "योऽस्याध्यक्षः परमे व्योमन्तिष्ठति तद्विष्णोः परमं पदम्"[7] इत्यादिश्रुत्या सर्वगतस्यापि परब्रह्मणो देशविशेषवर्त्तित्वावगमात्। ननु "प्रजापतेः सभायां वेश्म प्रपद्ये"[8] इति श्रुत्या कार्यब्रह्मविषयकसङ्कल्पप्राप्तिरेवाऽवगम्यते इति चेदुच्यते मैवमियं श्रुतिरपि परब्रह्मविषयिका एवेति ज्ञेया, "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा"[9] इत्यादिना परब्रह्मण एवाधिकारात्, अपि च "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि"[10] इत्यादिना सम्भाव्यमानस्य ब्रह्मलोकस्याऽकृतत्वस्य सर्वबन्धविमुक्तत्वस्याप्यवगमादिति। स्यादेतत्, ननु कथं तर्हि "तं वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति"[11] इत्यादौ ब्रह्मलोकनित्यत्र बहुवचनव्यपदेश इति चेदुच्यते, यथा 'निषादस्तपति' इत्यत्र 'निषादानां स्तपति' इति षष्ठीसमासस्वीकारे पूर्वपदे तत्सम्बन्धिलक्षणापत्या 'निषाद एव स्थपतिः' इति कर्मधारय एव स्वीकार्यः, तथैव, 'ब्रह्मैव लोकः' इति इहापि कर्मधारये स्वीकृते सति न विरोधापत्तिः। पुन एकवचनार्थे निश्चितेऽपि बहुवचनस्य प्रयोगो न दुर्लभो यथा 'अदितिः पाशान् प्रमुक्ते'ति अत्र पाशस्य एकत्वेऽपि बहुवचनप्रयोगदर्शनात् इति। [12]

अद्वैतवादिन एवं मन्यन्ते यत्, निर्गुणब्रह्मविदो गतिर्नोपपद्यते, निर्गुणब्रह्मणः सर्वगतत्वात् नित्यप्राप्तत्वात्, प्राप्तस्य पुनः प्राप्त्ययोगात्। अतः क्रममुक्तिस्तु सगुणब्रह्मविद एव भवति। ब्रह्मलोकेषु ब्राह्मी-ऐश्वैर्योपभोगान्ते कल्पक्षये सद्यमुक्तिः लभ्यते इत्यतः सा क्रममुक्तिरित्युच्यते। किन्तु यदि कोऽपि सगुणब्रह्मोपासको ब्रह्मलोकेषु स्थितोऽपि भोगवितृष्णः सन् निर्गुणब्रह्मविद्यानुशीलनद्वारा निर्गुणब्रह्मज्ञानमाप्तुं समर्थो भवेत्, तर्हि कल्पान्तात्प्रागपि तस्य सद्यो मुक्तिः भवितुमर्हति। अपि च न केवलं मानवाः, देवाऽपि महेन्द्रलोकतः सत्यलोकपर्यन्तनिवासिनो यदि ब्राह्मी-ऐश्वर्यभोगवितृष्णाः सन्ति शमादिसाधनचतुष्टयमनुसृत्य निर्गुणब्रह्मविद्यां प्राप्नुवन्ति, तर्हि तत्रैव तेषामपि सद्यमुक्तिर्भवेत्। किन्तु सगुणब्रह्मोपासनायां कञ्चिद्वैल-क्षण्यमस्ति। तदेतत् उपासनायाः सम्यक्तया परिपाकेऽपि सर्वाङ्गयुक्तत्वेऽपि सिद्धसाधकेन सायुज्यमुक्ति एव लभ्यते। अथ पूर्णकल्पान्ते हिरण्यगर्भेणोपदिष्टः सन् निर्गुणब्रह्मविद्याप्राप्त्यन्ते चरममुक्तिं प्राप्नोति। सायुज्यमुक्तिप्राप्तस्य तु न पुनरावृत्तिः। किन्तु सगुणब्रह्मोपासकस्योपासनायाः सर्वाङ्गयुक्तत्वाभावे सालोक्य - समीप्यादि मुक्तिरेव भवति, अतस्तेषां पुनरावृत्तिरपि भवत्येव। सगुणब्रह्मविदः पञ्चविधो मुक्तिप्रकारः, तद्यथा सालोक्यसामीप्य-सारूप्य-सार्ष्टि-सायुज्येति भेदात्। तत्र इष्टदेवतया सहैकस्मिन्नेव लोके निवासः सालोक्य-मुक्तिः। समानविग्रहवत्त्वात्तन्नाम इष्टदेवतासदृशचतुर्भुजादिरूपता सारूप्यमुक्तिः। इष्टदेवतायाः पार्षदरूपेण तस्य समीपेऽपस्थानं सामीप्यमुक्तिः। सार्ष्टिस्त्वाराध्यदेवतायाः समानैश्वर्यवत्त्वम्। सायुज्यं नाम सयुग्भावं समानदेहेन्द्रियाभिमानत्वमिति।[13] सायुज्यमुक्तिरेव सगुणब्रह्मविदः सर्वोच्चगतिः। तत्प्राप्तस्य न पुनर्बाधाशङ्का, अतः क्रममुक्तिरपि तस्यैव भवति, नेतरेषाम्।

अपि चाऽद्वैतमते संसारिजीवस्यापि स्वरूपतो गतिर्नोपपद्यते। तत्रापि लिङ्गशरीरस्य गमनमेव गतिपद-वाच्यम्। यतोऽद्वैतमते जीवात्माऽपि स्वरूपतः सर्वगतः, तस्य विभुपरिमाणत्वात्, अत एव अपरिच्छिन्नोऽपि। न ह्यपरिच्छिन्नस्य गतिरुपपद्यते। ननु, यद्येवमुच्यते, संसारीपुरुषः परमात्माभास

---

[1]बृहदारण्यकोपनिषत् (६/२/१५)
[2]कूर्म पुराण, पूर्वार्धम् (१२/२६९)
[3]अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता- संस्करणम्(पृष्ठम्- ९०५)
[4]ब्रह्मसूत्रम (४/३/११)
[5]तदेव (४/३/१२)
[6]महाभारतम्, द्रोणपर्वम्।
[7]वेदान्तकौस्तुभविधृता श्रुतिः, ब्रह्मसूत्रम् (४/३/११)
[8]छान्दोग्योपनिषत् (८/१४/१)
[9]तदेव,
[10]छान्दोग्योपनिषत् (८/१३/१)
[11]बृहदारण्यकोपनिषत् (६/२/१५)
[12]द्रष्टव्यम् : अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता-संस्करणम्(पृष्ठम्- ९०७)
[13]शाङ्करभाष्यम्, छान्दोग्योपनिषत् (२/२०/२), बृहदारण्यकोपनिषत् (१/३/२२, १/५/२३)

एव, अतः परिच्छिन्नोऽपि, तत्रापि विकल्पद्वयमुपपद्यते, आभासस्याऽवस्तुभूतत्वं वस्तुभूतत्वं वा इष्टमिति। तत्राद्ये जीवात्मनोऽधिकारित्वासम्भवात् शशशृङ्गवत्। "द्वितीये तु असम्भवात्। यतो जीवस्याऽणुपरिमाणत्वं मध्यमपरिमाणत्वं वाऽद्वैतमते नाङ्गीक्रियेते, अतः गत्युपपत्त्यर्थमौपा-धिकमणुत्वं तु स्वीकार्यमेव स्यात्। तथात्वे च लिङ्गशरीरस्यैव गतिर्न स्वरूपस्येति"[1] गतिश्रुतीनां बाध एव स्यात्।

किन्तु जीवात्मनोऽर्चिरादिगतिः श्रौतमानसिद्धा, न तु कस्यापि स्वकपोलकल्पिता। अतोऽद्वैतमतमिदं न समीचीनं मन्ये। अपि च श्रुतौ न केवलं सगुणब्रह्मोपासकस्य गतिरुक्ता किन्तु निर्गुणब्रह्मोपासकस्यापि[2]; अतः सगुणनिर्गुणब्रह्मोपासनाभेदेनाऽर्चिरादिगतिरूपणं न युक्तमिति द्वैताद्वैतसिद्धान्तः। भगवता ब्रह्मसूत्रकारेण चोच्यते "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्", "अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्"[3] इति। अस्यार्थः, स्थूलशरीरत्यागकाले सर्वकर्मक्षयेऽपि सूक्ष्मशरीरस्य लयेऽपि देवयानपन्था उपपद्यते एव, यतो विदुषोऽपि "स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्यादिषु श्रुतिषु देहादिसम्बन्धलक्षणार्थ उपलभ्यते। स्थूलसूक्ष्मश-रीरापगमेऽपि विद्याप्रभावेनैव गत्युपयोगिशरीरं तस्य तदानीमेवोत्पद्यते। किन्तु अत्र श्रीमच्छङ्कराचार्येण एवं भाष्यं कृतम् "सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायाम्"[4] इत्यादि। किन्तु तन्मतं न सूत्रकारसम्मतमिति मन्ये।

ननु "तेषामिह न पुनरावृत्तिः" इतिश्रुतौ 'इह' इति विशेषणप्रयोगादस्मिन्कल्पे एवाऽपुनरावृत्तिरुक्ता, न तु कल्पान्तरे इति चेदुच्यते, तन्न, असम्भवात्। उक्तनिर्देशस्य सर्वकल्पव्याप्तत्वात्, यथेह कल्पेऽनावृत्तिस्तथैव कल्पान्तरेष्वऽपि बोध्या। तत्रापि मीमांसकविचारमुपस्थापयत्याचार्यैः यथा— 'राजसूये ब्रह्मणो गृह्ये महिष्या' इत्यादिना द्वादशहवींषि विहितानि कर्त्तव्यानि। तत्र 'श्वोभूते निर्व्वपेत्' इति निर्दिष्टम्। तन्निर्देशानुसारत एकस्मिन् कृते पुनोऽनन्तरदिवसेऽपि तेनैव विधिमूलेनाऽनन्तरस्यापि प्राप्तिर्भवेत्, 'श्वोभूतवदनुवादात्' इति मीमांसासूत्रात्, तथैवाऽत्र प्रकृतप्रस्तावे 'इह' शब्दस्य सर्वकल्पव्यापकत्वात् कल्पान्तरेऽपि अनावृत्तिर्बोध्या।

आचार्यवल्लभप्रणीते शुद्धाद्वैतवादे ज्ञानकर्मसमुच्चयादेव मोक्षप्राप्तिरित्यभिप्रेयते। तन्मते औपनिषत्- ज्ञानस्यापि कर्मोपयोगित्वं यथाऽस्ति तथा उपासनाया अपि ज्ञानरूपत्वं प्रत्यक्षम्। [5] अतस्तन्मते मुमुक्षवो द्विधा विभज्यन्ते, ज्ञानिनो भक्ताश्चेति। तयोर्मुक्तिप्रकारोऽपि द्विविधः, सद्यमुक्तिः क्रममुक्तिश्चेति। तत्र ज्ञानिनां मध्ये ये 'त्वमेवाहं अहमेव त्वम्' इति अहंग्रहात्मकव्यतिहारध्यानेषु सिद्धा भवन्ति ते हि परमेश्वरानुग्रहात्प्राक्सत्त्वादिगुणत्रयातीता भूत्वा निर्गुणब्रह्मतत्त्वमारोहन्ति, ते प्रारब्धक्षये निर्गुणब्रह्मणि प्रविशन्ति। तेषां लिङ्गशरीरं नोत्क्रामति। सैव ज्ञानिनः सद्यमुक्तिः। अस्यां मुक्तौ निर्गुणाऽक्षरब्रह्मणि प्रवेशरूपं सायुज्यं लभ्यते, किन्तु तथाऽपि जीवस्य मधुपिष्टस्वर्णरेणुवत्पृथगस्तित्वं तु तदानीमपि भवत्येव। [6] पुनः ये खलु निर्गुण ब्रह्मतत्त्वोपासका अस्मिन् जन्मनि सर्वाणि प्रारब्धकर्माणि न अभुञ्जत, तेषां शिष्टकर्माणि ब्रह्मलोकेषु पूर्णतया नश्यन्ति। ततः मुच्यन्ते, अतः तेषां क्रममुक्तिः। ते हि आतिवाहिकादिना वाहिता देवयानादिना ब्रह्मलोकानेत्य प्रारब्धक्षयात्तत्रैवाऽक्षरनिर्गुणब्रह्म प्रविशन्ति। ब्रह्मलोकात्तु तेषां न पुनरावृत्तिर्भवति।

भक्तानां मध्ये ये पुष्टिमार्गीयसिद्धसाधकाः, तेषां न उत्क्रान्तिगत्यागतिरस्ति। श्रीभगवतोऽत्यन्तानुग्रहभा-जनानां तेषां लिङ्गशरीरं हृदयगुहायां प्रकटिते पुरुषोत्तमे विलीयते। तस्मिन्नेव क्षणे तदात्मकदिव्यदेहं प्राप्य पुरुषोत्तमेन सह लीलात्मकं दिव्यभोगञ्च प्राप्नुवन्ति। उक्तञ्चाऽणुभाष्ये, "अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति, ततोऽस्मिन्नेव शरीरे ब्रह्म सम्यगश्नुते। भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः"[7]। कृत्स्नवैकुण्ठलोकस्तेषां हृदयगुहायामेव प्रकटितं भवति। तेषामपि सद्योमुक्तिरिति विशेषः। किन्तु ये खलु मर्यादामार्गीयसिद्धभक्तास्तेषां क्रममुक्तिः। प्रारब्धक्षये स्थूलशरीरादुत्क्रान्तास्ते देवयानेन वैकुण्ठाख्यं लोकमभिगच्छन्ति। [8] तत्र साक्षात्प्रकटितेन पुरुषोत्तमेन सह तेषां साक्षात्कारोऽतस्तस्मिन्नेव विलयोऽपि भवति। अनन्तरं श्रीभगवता स्वकीयात्स्वरूपान्निष्काशितास्सन्तस्ते पुरुषोत्तमात्मकन्दिव्यन्देहं प्राप्नुवन्ति ततः पुरुषोत्तमेन सह लीलात्मकं भोगमपि प्राप्नुवन्ति।[9]

आचार्यभास्करप्रणीते औपाधिकभेदाभेदवादेऽपि क्रममुक्तिविषये एवमुक्तं यत्— ये खलु परब्रह्मोपास-कास्ते सद्यमुक्तिं लभन्ते, किन्तु ये हिरण्यगर्भोपासकास्ते उपासनाप्रभावेनैव ब्रह्मलोकमेत्य तत्र ज्ञानोत्कर्षानन्तरं हिरण्यगर्भेण सह कल्पान्ते मुच्यन्ते, सा क्रममुक्तिः। ब्रह्मलोकेषु विदुषो ज्ञानोत्कर्षं यद्भवति तत्तु "छायातपयोरिव ब्रह्मलोके"[10] इत्यादिना श्रुतिवचनेनैवागम्यते इति।

अथेदानीं अर्चिरादिगतापुरुषैः किं प्राप्यते इति विचार्यते। तत्र भगवता ब्रह्मसूत्रकारेण एतन्मन्यते यत्, 'नाम ब्रह्मेत्युपासीत' इति श्रुत्युक्तोपासका ये खलु नामादिप्रतीकमुपासन्ते तान्वर्जयित्वा आत्मानं परब्रह्मात्मकरूपेण ये उपासन्तेऽपि च ये पञ्चाग्निविद्यावन्तः परब्रह्मोपासकास्ते उपासनानुसारेण परब्रह्म एव प्राप्नुवन्ति, "अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च"[11] इति सौत्रप्रमाणात्। आचार्यबाद-रिर्यदाह, कार्यब्रह्मोपासकानेवाऽर्चिरादिदेवता नयति, न तु निर्गुणपरब्रह्मोपासीनानेवेति, न तद्युक्तं मन्ये, "अस्माच्छरीरात् समुत्थायं परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते"[12] इति श्रुतिविरोधात्। पुनः आचार्यजैमिनिना यदुच्यते, परंब्रह्मोपासीनानेवाऽर्चिरादिदेवता नयति, न तु कार्यब्रह्मोपासकान्, तदपि न

---

[1]अध्यास (परपक्ष) गिरिवरज्रम्, कलिकाता-संस्करणम्(पृष्ठम्- ९०८)

[2]"नापि सगुणविद्यायामेव श्रुता अपि तु निर्गुणायाम्, तथा च श्रुतिमुखेनैव सिद्धा विदुषां गतिरिति।" अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता- संस्करणम्(पृष्ठम्- ९०९)

[3]ब्रह्मसूत्रम् (३/३/३०,३१)

[4]ब्रह्मसूत्रम्, शाङ्करभाष्यम् (३/३/३१)

[5]"उपासनाया.....ज्ञानरूपत्वात्", - ब्रह्मसूत्रम्, अणुभाष्यम्(१/१/१)

[6]"जीवस्य सर्वात्मना ब्रह्मभेद.......नास्ति"– ब्रह्मसूत्रम्, अणुभाष्यम्, भाष्यप्रकाशः। "मुक्तिदशायामपि साम्यमात्रबोधनाच्च, जीवब्रह्मैक्यस्यापि तादात्म्यरूपत्वम् एव न तु सर्वात्मना अभेदरूपत्वम्, अभेदस्य तादात्म्यात्मकत्वात्" (तदेव १३६१-१३६३ पृ.)

[7]ब्रह्मसूत्रम, अणुभाष्यम्(४/२/१)

[8]ब्रह्मसूत्रम्, अणुभाष्यम्(४/३/७)

[9]ब्रह्मसूत्रम्, अणुभाष्यम्(४/४/१)

[10]कठोपनिषत् (२/३/५)

[11]ब्रह्मसूत्रम् (४/३/१४)

[12]छान्दोग्योपनिषत् (८/३/४)

युक्तम्, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तदपि इत्युपासते तेऽर्चिषमभिसम्भवन्ति"[1] इति श्रुतिविरोधात्। अत एवोक्तं वेदान्तकौस्तुभकारैः "न तु कार्यं ब्रह्मोपासीनान्नयति, न वा परं ब्रह्मोपासीनानेव नयतीति नियमः। कुतः? उभयथा दोषात्।"[2] अत उभयविधान्ब्रह्मोपासकान्नयतीति सिद्धान्तमाह भगवान्ब्रह्मसूत्रकारः "तत्क्रतुश्च" इत्यादिना। अस्यार्थो यस्य यथा क्रतुस्तन्तथैव नयति, "यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"[3]ति श्रुतेः, अपि च "तं यथा यथोपासते तदेव भवती"[4]त्यादिश्रुतेश्च। यस्तु परब्रह्मक्रतुः स परं ब्रह्म प्रतिपद्यते। [5]

ननु प्रतीकालम्बनोपासनायामपि ब्रह्म एवोपासीतम्, अथ प्रतीकोपासकानामप्यर्चिरादिगतिस्तु स्यादेव इति चेदुच्यते, तन्न। श्रुतौ तु प्रतीकोपासकानां कृते नाऽर्चिरादिगतिर्विहिता, अपि च तेषामुपासनानुरूपा गतिरेव इति, तद्यथा, "यावन्नाम्ना गतं तत्रास्य यथाकामचारो भवति"[6] इतिश्रुतिः। तेषु प्रतीकेषु प्रकाशितस्य ब्रह्मणः यादृशी शक्तिर्भवति, तदुपासकास्तान्सर्वान् प्राप्य तदनुगुणं कामाचारा भवन्ति। तेषां ध्येयत्वेन प्रतीकानामेव प्राधान्यान्न परब्रह्मोपासकत्वं, अतो नाऽर्चिरादिगतिरपीति। अतः "नामादिप्राणपर्यन्तस्य प्रतीकोपासनस्य गतिनिरपेक्षं परिमितं च फलं दर्शयति[7] इति। अपि च, "वाग् वाव नाम्नो भूयसी" इत्यादिना श्रुत्या प्रतीकोपासनायाः फलविशेषोऽपि प्रदर्शितः। अतोऽद्वैतमतमाचार्यमाधवमुकुन्देन एवं निराकृतम् "ये तु दुराग्रहमाश्रित्य सगुणनिर्गुणभेदं वदन्तो निर्गुणब्रह्मविदो गत्यनुपपत्तिं सगुणब्रह्मविदश्च गत्या कार्यब्रह्मप्राप्तिमभ्युपगच्छन्ति, ते उपेक्षणीयाः बादरिपक्षान्तःपातित्वात्सूत्राकारपक्षविरोधात्, श्रुतिहीनत्वाच्च। न हि ब्रह्मभेदे कार्यब्रह्मप्राप्तौ च श्रुतिरुपलभ्यते क्वचित्"[8] इति।

द्वैताद्वैतसिद्धान्ते मोक्षस्तु न निर्गुणब्रह्मप्राप्तिलक्षणम्, अपि तु भगवद्भावापत्तिस्स्वस्वरूपानन्दवाप्तिश्च इति। अतः ब्रह्मप्राप्तिरूपा मुक्तिर्याऽद्वैतवादिभिरुपपद्यते सा तु न सिद्धान्तसम्मता। अतः कार्यब्रह्मोपासकपरंब्रह्मोपासकाः अविशिषेण सर्वेषां ब्रह्मोपासकानामुत्क्रा-न्तिगतिरूपपद्यते। अद्वैतमते ब्रह्मणो विभुस्वभावत्वात् तत्प्राप्त्यर्थं देशविशेषं गमनं न अपेक्षते। अतो विदुषो गतिस्तत्र निराकृता।किन्तु द्वैताद्वैतसिद्धान्ते यतो मोक्षे निर्गुणब्रह्मभावप्राप्तेः प्रसङ्ग एव नास्ति, अतो ब्रह्मणस्सर्वव्याप्तित्वेऽपि गत्यागतेरनुपपत्तिप्रसङ्गोऽपि नास्ति। जीवात्मना ब्रह्मणः अंशाशिसम्बन्धो भेदाभेदसम्बन्धो वा। सोऽपि स्वाभाविकः। अद्वैतमते तु जीवो ब्रह्मस्वरूपः सन्नपि विस्मृतस्वरूपः। स्वकण्ठस्थविस्मृतमणिहारस्य पुनः प्राप्तिवज्जीवस्य मोक्षः। अथ तन्मते मोक्षे ब्रह्मप्राप्तिरुपपद्यते एव। किन्तु तथा सत्येतदङ्गीकर्त्तव्यं यत्, जीवस्य बद्धावस्था न अनादिः। जीवात्मा एकदा मुक्त एव आसीत्, ततो बद्धोऽभवत्। अन्यथा एतद्विस्मृतितत्त्वं नोपपद्यते, यतः पूर्वज्ञातविषयस्यैव विस्मरणं सम्भवेत्, न तु अज्ञातस्य, पुनोऽनादिविस्मृतस्य ज्ञातत्वं कथं स्वीकुर्यात्? अतोऽद्वैतमतानुसारेण बन्धनमोक्षयोः क्रमपर्यायः स्वीकर्त्तव्यः। अस्यार्थो मुक्त एव बध्यते, पुनो बद्ध एव मुच्यते इति। द्वैताद्वैतमते तु जीवस्य ब्रह्मभावो न विस्मृतोऽपि तु आवृत एव[9]। मोक्षे तु तदावरणनाशः, अतः स्वस्वरूपवाप्तिर्भगवद्भावापत्तिश्चेति। भगवद्भावस्य सर्व्वव्यापकत्वाप्रसङ्गाद्देशान्तरगमनेन तत्प्राप्तावनुपपत्तिर्नास्ति।

**उपसंहारः**

एवं वेदान्तिनां प्रसिद्धस्य क्रममुक्तिविषयस्य चर्चा इतस्ततो बहुत्र दरीदृश्यते अस्मिन्विषये पण्डितानाञ्च वादोऽपि बहुत्र दरीदृश्यते, अतः क्रममुक्तिरिति विषयमिममवलम्ब्य केषाञ्चन मतानां खण्डनं केषाञ्चन मतानाञ्च सयुक्तिपूर्वकं समर्थनं विधाय सरलरीत्या प्रास्तावि शोधप्रबन्धोऽयमिति शम्।

**परिशीलनग्रन्थसूची**

१. अनन्तकृष्णशास्त्री। **ब्रह्मसूत्रशाङ्करभाष्यम्**(शङ्कराचार्यविरचितम्, भामती– कल्पतरु-परिमलसहितम्)।पण्डितेन अनन्तकृष्णशास्त्रिणा टिप्पण्यादिभिः उपबृंहितम्, पणशीकरोपाह्वेन वासुदेवशर्मणा संस्कृतम्।वाराणसी: कृष्णदास अकादमीद्वारा, २००० तमे संवत्सरे प्रकाशितम्।

२. गीताप्रेस (प्रकाशकः)।**बृहदारण्यकोपनिषत्**। गोरखपुर: गीताप्रेस (प्रकाशक एवं मुद्रक), सं.-२०७०।

३. दूर्गाचरणसांख्यवेदान्ततीर्थः (सम्पा.)। **छान्दोग्योपनिषत्**(बङ्गपुस्तकम्,शाङ्करभाष्य-समेता)। कलिकाता: देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड,२००२।

ब्रह्मचारिमेधाचैतन्यः (सम्पा.)।**मुण्डकोपनिषद्**। दण्डिस्वामी-दामोदर-आश्रमः,२००८।

४. दूर्गाचरणसांख्यवेदान्ततीर्थः (सम्पा.)।**तैत्तिरीयोपनिषद्** (बङ्गपुस्तकम्,शाङ्करभाष्य-समेता)। कलिकाता: देव-साहित्य-कूटीर-प्राइभेट-लिमिटेड,२००२।

५. यतीन्द्ररामानुजाचार्यः(अनुवादकः)। **श्रीमद्भगवद्गीता**(रामानुजभाष्यं बङ्गानुवादसहितम्)। कोलकाता: श्रीबलराम-प्रकाशनी, १४०६।

६. वाणेशानन्दः(सम्पा.)।**पञ्चदशी**(विद्यारण्यस्वामीविरचितम्)।कलिकाता:उद्बोधनकार्यालयः, २००१।

[1]छान्दोग्योपनिषत् (५/१०/१)

[2]ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ (४/३/१४)

[3]छान्दोग्योपनिषत् (३/१४/१)

[4]वेदान्तकौस्तुभविधृता श्रुतिः, ब्रह्मसूत्रम् (४/३/१४)

[5]"परब्रह्मात्मकतया प्रकृतिवियुक्तप्रत्यगात्मक्रतुस्तादृशस्वरूपप्राप्तिपूर्वकपरमात्मानं प्रतिपद्यते" – ब्रह्मसूत्रम्, वेदान्तकौस्तुभ-भाष्यम् (४/३/१४)

[6]छान्दोग्योपनिषत् (७/१/५)

[7]अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता-संस्करणम्(पृष्ठम्- ९११)

[8]अध्यास (परपक्ष) गिरिवज्रम्, कलिकाता-संस्करणम्(पृष्ठम्- ९१२)

[9]"अनादि माया परियुक्तरूपां"- वेदान्तकामधेनुः २

७. वासुदेवानन्दः(सम्पा.)।**श्रीमद्भगवद्गीता**(बङ्गपुस्तकम्)। कलिकाता: उद्बोधनकार्यालयः,२०१४।
८. विश्वरूपानन्दसरस्वती(व्याख्या.)। **श्वेताश्वतरोपनिषद्**। मुम्बई: सत्साहित्य-प्रकाशन-ट्रस्ट, (२००८)।
९. शङ्करः। **शङ्कराचार्यकृतं श्रीमद्भगवद्गीताभाष्यम्**(श्रीमदनुभूतिस्वरूपाचार्यविरचितः श्रीमदानन्दगिरि-स्वामिविरचितः श्रीबेल्लङ्कोण्ड-रामरायकविविरचितश्च प्रथमः द्वितीयश्च खण्डः)। मीमांसा-वेदान्ताचार्य-श्रीमणिद्राविडः (संशोधकः)। वाराणसी: श्रीदक्षिणामूर्तिमठप्रकाशनम्, २०१५।
१०.सुब्रह्मण्यशास्त्री, सं. एस.(सम्पा.)। **उपनिषद्भाष्यम्**(प्रथमखण्डः, श्रीमदानन्दगिर्याचार्यकृतटीकया कठ-माण्डूक्य-तैत्तिरीयभाष्याणां प्रसिद्धाचार्यान्तरटीकाभिः सटीकतैत्तिरीयवार्तिकेन च समलङ्कृतम्)। वाराणसी: श्रीदक्षिणामूर्ति-मठ-प्रकाशन, २०००।

## **शुद्धाद्वैतनये ब्रह्मस्वरूपम्***

शुद्धाद्वैतमार्तण्डग्रन्थे आचार्यैः स्वयमेव कारिकाद्वयेन शुद्धाद्वैतपदस्यार्थः प्रतिपादितः, तद्यथा –

**शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः।**
**अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः॥**
**माया सम्बन्धरहितं शुद्धमित्युच्यते बुधैः।**
**कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्॥**

शुद्धाद्वैतपदे शुद्धं च तदद्वैतं शुद्धाद्वैतं, शुद्धयोरद्वैतं शुद्धाद्वैतमिति वा। शुद्धशब्दस्यार्थस्तु मायासम्बन्धरहितं ब्रह्मेति ग्राह्यः। तथा च मायासम्बन्धरहितस्य शुद्धस्यैव ब्रह्मणः कार्यकारणरूपेणांशांशित्वेन रूपेण वाऽद्वैतं शुद्धाद्वैतपदवाच्यमिति विभावनीयम्। तल्लक्षणं त्वितरसम्बन्धानवच्छिन्नकार्यकारणादिद्वित्वप्र-कारकज्ञानप्रतियोगिताकाभाववत्त्वम्। तथा च सच्चिदानन्दलक्षणं जगत्कर्तृत्वादिलक्षणं वा सत्यं ज्ञानमनन्तं ब्रह्म, नित्यं विज्ञानमानन्दं ब्रह्म, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, यथाऽग्नेः विस्फुलिङ्गा इत्यादिभिः श्रुतिभिः प्रतिपाद्यते। शुद्धस्यैवानन्दमयस्य ब्रह्मणः कार्यकारणरूपेणां-शांशित्वेन रूपेण वा जगद्ब्रह्मणोर्जीवब्रह्मणोरद्वैतम्। तदेतत् सविस्तरं दर्शयिष्यामः।

अस्मिन् मते ब्रह्म सर्वधर्मविशिष्टमङ्गीक्रियते। सर्वश्रुतिप्रामाण्यात् सर्वधर्मोपपत्तेश्च[1],सर्वोपेता च तद्दर्शनात्[2] इति ब्रह्मसूत्रप्रामाण्याच्च। अतो ब्रह्म सर्वधर्मविशिष्टमेवाङ्गीकर्तव्यम्। रामानुजाद्यादृतनियत-धर्मवादस्वीकारे ब्रह्मणि इयत्ताप्रसङ्गः। तथा च देशकालवस्तुपरिच्छेदरहितं ब्रह्मेति प्रतिपादकसर्व-श्रुतिसूत्रव्याकोपः तथा च शाङ्करमतवन्निर्धर्मकत्वस्वीकारे निर्धर्मकपदार्थज्ञानस्य लोकेऽदृष्टत्वाद् ब्रह्मणो ज्ञानाभावप्रसङ्गः। अतः श्रीमद्भगवद्गीताव्याससूत्रश्रीमद्भागवतन्यायवलम्ब्य तदेकवाक्यतया सर्वश्रुत्यवगतं ब्रह्मणः सर्वधर्मकत्वमङ्गीकर्तव्यम्। ब्रह्मणि विरुद्धधर्माणामपि स्थितिरस्ति उभयव्यपदेशात् त्वहि कुण्डलवत्[3], प्रकाशाश्रयवद्वा तेजस्त्वात्[4] इत्यादिसूत्रप्रामाण्यादवगम्यते। तथा हि यतो वाचा निर्वतन्ते अप्राप्य मनसा सह इति श्रुतिवाक्ये ब्रह्मणि धर्मान्निषिद्धध्य तत्रैव प्रकरणे पुनः आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन इति श्रुत्यानन्दधर्मस्य कथनम्। एवञ्च ब्रह्मणि सर्वे विरुद्धधर्मा अपि सन्ति, ते च स्वाभाविका एव, न मायया प्रतीयमानाः। ततश्चैवं सिद्धम्– यद् ब्रह्म तु अणोरणीयान् महतो महीयान् इत्यादिविरुद्धधर्मप्रतिपादक-श्रुतिभिरण्वपिमहत्, अदृश्यमपि बुद्धिग्राह्यम्, बहिष्ठमप्यन्तःस्थम्, स्वतन्त्रमपि भक्तपराधीनम्, सर्वकार्यस्थमपि तत्स्पर्शरहितम्, क्रीडार्थं सर्वरूपाणां धारकमपि स्वरूपाभिन्नम्, प्रमाणमपि प्रमेयरूपम्, साधनमपि फलभूतम्। न तत्समश्चाभ्यधिकश्च दृश्यते इत्यनेन समत्वाभ्यधिकत्वरहितमपि समो मशकेन समो नागेन इति श्रुतिप्रतिपादितत्वात् समम्। अतो विरुद्धसर्वधर्माश्रयत्वमनवगाह्यमाहात्म्ये ब्रह्मणि विरुद्धधर्माणां स्थितिः स्वाभाविकी, न तत्र मायाकल्पनापेक्षा। अतो विरुद्धधर्मत्वं भूषणावहमेव।

सर्वकर्तृत्वं ब्रह्मगतमेव तथापि वैषम्यनैर्घृण्ययोरनवकाशः स ह एतावान् स तदात्मानं स्वमकुरुत आत्मैवेदं सर्वम्, यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतीनां जन्माद्यस्य यतः[5] शास्त्रयोनित्वात्[6] इत्यादिसूत्राणाम् अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा[7] इति गीतावाक्यस्य जन्माद्यस्य यतोऽन्वयादितरतः इत्यादिश्रीमद्भागवतवाक्यस्य च प्रामाण्यात् ब्रह्मैव स्वयं सर्वकर्तृ, तत्कर्तृत्वं स्वाभाविकमेव, न मायिकं शाङ्करमतवत्। यद्यपि ब्रह्मैव सर्वं जगत् करोति, तथापि तस्य वैषम्यनैर्घृण्ये न प्रसज्येते। अत्र त्रिधा समाधानमस्मिन् मते-

सूत्रकारः कर्मसापेक्षत्वान्न दोष इति ब्रवीति।

---

***गवेषिका -गङ्गराणीसाहुः**
अद्वैतवेदान्तविभागःपुरी ,श्रीसदाशिवपरिसरः ,

[1]ब्र.सू.२.१.३७
[2]ब्र.सू. २.१.३०
[3]ब्र.सू. ३.२.२७
[4]ब्र.सू. ३.२.२८
[5]ब्रह्मसूत्रम् – १.१.२
[6]तदेव – १.१.३
[7]श्रीमद्भगवद्गीता – १०.८

भाष्यकारस्तु स्वमाहात्म्यप्रदर्शनार्थमेव ब्रह्मणात्मनः सकाशात् सर्वा सर्वविधा सृष्टिः निर्मायि तेन न पूर्वोक्तवैषम्यदोष इति समादधुः।

विद्वनमण्डनकृतो विट्ठलेशास्तु लीलार्थं सर्वसृष्टेः निर्माणाल्लीलायाश्च विषमसृष्टिं विना अनुपपत्तेर्न दोष इति समादधुः।

वस्तुतस्तु स आत्मानं स्वयमकरुत इत्यादिश्रुत्या नेश्वरे दोषप्रसक्तिः अतो नेश्वरे वैषम्यनैर्घृण्यादिप्रसक्तिः। तद् गतमेव सर्वकर्तृत्वं चेति सिद्धम्।

## भृङ्गदूते देवदेवीनां स्वरूपविमर्शः*

**तीरे तस्य भ्रमर ! शिखरी भैरवो नाम तस्मिन्**
**आस्ते देवस्त्रिभुवनपति भैरवः कालपूर्व्वः।**
**गच्छेस्तत्र त्वमतिनिभृतः सावधानः प्रभूणाम्**
**अग्रे सद्यो भवति महते नम्रता यत्फलाय॥[1]**

हे भ्रमर ! तस्य ब्रह्मपुत्रनदस्य तीरे तटे 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषुइत्यमरः, भैरवनामा शिखरी पर्व्वतः अस्ति इति शेषः। 'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्व्वता' इत्यमरः। तस्मिन् शिखरिणि त्रिभुवनपतिः त्रयाणां मुवनानां समाहारस्त्रिभुवनं तस्य पतिः स्वामी क्षेता, कालपूर्व्वं भैरवः कालभैरवः अस्ति वर्तते। तत्र त्वम् अतिनिभृतः अतिविनीतः 'निभृतविनीतप्रश्रिताः समा' इत्यमरः। सावधानश्च समाहितान्तःकरणः सन् प्रभूणां स्वामिनाम् अग्रे गच्छेः, यत् यस्मात् महते महीयसे नम्रता नमनशीलता सद्यः तत्क्षणे 'सद्यः सपदि तत्क्षणे' इत्यमरः, फलाय भवति। अयं भैरवनामा पर्वतः स्वयं महादेवः, तदुक्तं कालिकापुराणे उत्तरे ६२ अध्याये– 'अहं पश्चादतिप्रीत्या भैरवाख्यः स्थितोत्तरे" नीलपर्व्वतात् उत्तरे इति भावः। नीलपर्व्वतात् उत्तरे ब्रह्मपुत्रनदः प्रवहति। तस्य तीरे भैरवाख्यः पर्व्वतोऽस्ति।

**तस्योपेत्य भ्रमर ! निकटे देवदेवस्य शम्भोः**
**सन्तोषाय श्रवणसुखदध्वानधारां विदध्याः।**
**तस्मात् सद्यो विषमसरणोर्न्निर्गमं चार्थयेथाः**
**कालक्षेपः पथि तनुभृतां यत् स्वकृत्यक्षयाय॥[2]**

हे भ्रमर भृङ्ग ! देवदेवस्य देवानाम् इन्द्रादीनां देवस्य कालभैरवस्य शम्भोः शिवस्य कालभैरवस्य शम्भोश्चाभेदात् निकटं समीपम् उपेत्य गत्वा 'समीपे निकटासन्नसंन्निकृष्ट-सनीडवत्' इत्यमरः तस्य सन्तोषाय सन्तुष्ट्यै 'तादर्थ्यं चतुर्थीवाच्या' इति चतुर्थी, श्रवणसुखदध्वानधारां श्रवणयोः कर्णयोः सुखदः सुखदाता यः ध्वानः शब्दः 'शब्दे निनाद-निनद-ध्वनिध्वानरवस्वनाः' इत्यमरः, तस्य धारा प्रवाहः तां विदध्याः कुर्य्याः च पुनः सद्यः सपदि तस्मात् विषमः असमानः उच्चावचत्वात् सरणिः विषमसरणिः तस्मात् निर्गमं निःसरणं अर्थयेथाः याचेः। एतेन मार्गस्य क्लेशकरत्वमपि सूचितम्। सपदि याचने हेतुं निर्द्दिशति– तनुभृतां शरीरिणां पथि निशेषः। मार्गस्य क्लेशकरत्वेऽपि देवदेवप्रसादात् तव गमनं निर्व्विघ्नं भविष्यतीति अतः कापि चिन्ता न कार्य्येति गमने कथमपि विलम्बो न कार्य्यश्चेत्यपि ध्वनिः।

श्रद्धायुक्तस्त्रिपुरमथिनं तन्नमस्कृत्य पश्यन् -

**पातोवेगाहृतगिरिशिलां कौशिकी स्वर्णपूर्व्वाम्।**
**गच्छेः क्षिप्रं ललिनगरं नामतः श्रीविहारम्**
**रज्जीभूय भ्रमर ! वसति प्रायशो यत्र लक्ष्मीः॥[3]**

हे भ्रमर भृङ्ग ! तं त्रिपुरमथिनं त्रिपुरान्तकं कालभैरवं श्रद्धायुक्तः सन् विश्वासयुक्तः 'श्रद्धा संप्रत्ययः स्पृहा इत्यमरः, नमस्कृत्य प्रणम्य कौशिकीं नदीं स्वर्णपूर्वां स्वर्णकौशिकीमिति यावत्। कीदृशीं?पाथोवेगाहृतगिरिशिलाम् पाथसः जलस्य वेगेन जवेन आहृता आकृष्टा गिरेः पर्व्वतस्य शिला पाषाणः

***शोधार्थी – दीपकप्रधानः**
विभागः – साहित्यम्, राष्ट्रियसंस्कृतसंस्थानम् श्रीसदाशिवपरिसरः, पुरी।

[1]भृङ्गदूतम् - ३१

[2]भृङ्गदूतम् - ३२

[3]भृङ्गदूतम् - ३३

यया, ताम् पश्यन् मार्गे इतिशेषः, क्षिप्रं शीघ्रं नामतः नाम्ना 'इतराभ्योपि दृश्यन्ते'[1]इति तसिल्। श्रीविहारं कीदृशं?ललितनगरं सुन्दरनगरं गच्छेः, यत्र श्रीविहारनगरे प्रायशः बाहुल्येन लक्ष्मीः शोभा सम्पत् च खञ्जोऽपि गमनसामर्थ्याभावात् कुत्रापि न गच्छति तद्वत्। 'खोडे खञ्जः' इत्यमरः।

**विद्युन्निन्दानिपुणतनव पट्टवासो वसाना**
**नानाभूषाखचितवपुषः कोकिलाद्वेषिवाचः।**
**कन्दर्पास्त्रीकृतमुखरुचो हंससंचाररम्याः**
**पीनोत्तुङ्गस्तनभरनता योषितो यत्र सन्ति॥**[2]

हे भृङ्ग ! यत्र श्रीविहारनगरे एतादृश्यो योषितः नार्य्यः सन्ति वर्तन्ते, 'स्त्री योषिदबला योषा नारी सीमन्तिनीवधूः' इत्यमरः कीदृश्यः?विद्युन्निन्दानिपुण तनवः विद्युतः चपलायाः निन्दायां निपुणाः प्रवीणाः तनवः शरीराणि यासां, तनूनां वर्णोत्कर्षात् निन्दानिपुणत्वम्। विद्युद्वर्णतः उत्कृष्टवर्णशालिन्य इति भावः। पुनः पट्टवासोवसानाः धृतपट्टवाससः, पट्टवासः कौशेयवस्त्रम् (पटोर), अधुनापि आसामदेशे एडीमूगानामकपट्टवाससः प्राचुर्य्यमस्त्येव। पुनः नानाभूषाखचितवपुषः नानाऽनेकप्रकारा भूषा भूषणं तया खचितानि सँय्युक्तानि वपुंषि शरीराणि यासां, पुनः कोकिलाद्वेषिवाचः कोकिला परभृतिका तां द्वेष्टीति कोकिलाद्वेषिणी वाक् यासां माधुर्य्योत्कर्षात् पुनः कन्दर्पास्त्रीकृतमुखरुचः कन्दर्पस्य कामस्य अस्त्रं कन्दर्पास्त्रं, तद् अकन्दर्पास्त्रं कृतम् कन्दर्पास्त्रीकृता मुखस्य रुक् प्रभा यासां ताः। कन्दर्पस्य पञ्चबाणाः यथा- 'उन्मादस्तापनश्च शोषणस्तम्भनस्तथा, संमोहनश्च कामस्य पञ्चबाणाः प्रकीर्तिताः" इत्यमरः। श्रीविहारनगरस्त्रीणां मुखरुक् कन्दर्पस्य पञ्चबाणानां कार्य्यम् उन्मादनादि करोति इति भावः। पुनः हंससंचाररम्याः हंसाः प्रसिद्धाः तेषां संचारा इव संचाराः गमनानि तैः रम्याः रमणीयाःहंसगामिन्य इति भावः। पुनः पीनोत्तुङ्गस्तनवरनताः पीनश्च उत्तुङ्गश्च यः स्तनभरः कुचभारः तेन नताः नम्रः अवनताः, न तु वपुद्र्दोषात् पीनः स्थूलः, 'पीनपीव्नी तु स्थूलपीवरे' इत्यमरः उत्तुङ्ग उन्नतः। एतेन पद्मिनीलक्षणसम्पन्नास्तत्र स्त्रियो वर्तन्ते। मत्कार्य्यार्थगमने च पद्मिनीदर्शनमपि भविष्यतीति ध्वनिः।

पुनः श्रीकालिकामाहात्म्यं वर्णयति –

**मूकीभावं चिरमुपगता ये दृशा ये विहीना,**
**ये बाधिर्य्यव्यथितहृदया, ये पुनः खञ्जपादाः।**
**भक्त्यासक्ता भ्रमर ! भवनद्वारमायान्ति तस्याः**
**तत्तद्दोषव्यपगम-समुज्जलासिनस्ते भवन्ति॥**[3]

हे भ्रमर भृङ्ग ! ये जनाः चिरं चिरकालं मूकीभावं मूकत्वम् उपगताः प्राप्ताः, मूकत्वं वाक्रतितत्वम् पुनः ये दृशा नयनेन विहीनाः अन्धा इत्यर्थः, पुनः ये बाधिर्य्येण बधिरतया व्यथितन्दयाः, पुनः ये खञ्जपादाः खञ्जः गतिविकलः ते जनाः भक्तौ आसक्ताः तत्पराः, 'तत्परे प्रसितासक्तौ' इत्यमरः। भक्तितत्पराः इत्यर्थः, तस्याः श्रीकालिकायाः भवनद्वारं मन्दिरद्वारं आयान्ति आगच्छन्ति स्वदोषपरिहाराय इति भावः। श्रीकालिकायाः प्रसादात् तत्तद्दोषाणां मूकत्वान्धत्वबधिरत्वखञ्जत्वादिदोषाणां व्यपगमात् नाशात् समुल्लसिनः प्रहर्षयुक्ताः भवन्ति, स्वसमोहितलाभात् इति। एतेन श्रीकालिकायाः व्यथितहृदयानां त्राणकर्तृत्वं, तस्या दर्शनात् समीहितलाभो भवतीति च ध्वनितमिति।

कौशिकी महात्म्यं वर्णयति–

**भ्रता यस्याः सकलजगतीमन्यथा स्रष्टुकामो**
**विश्वामित्रः किल सुरपतिस्पर्धया वृद्धतेजाः।**
**चक्रे शक्रं नवमभिनवान् ब्रह्मणः सृष्टवान् यो**
**नव्यान् नव्यं त्रिदिवमसृजन्निर्म्ममे सप्त लोकान्॥**[4]

हे मधुकर ! यस्याः कौशिक्याः भ्रता विश्वामित्रः विश्वस्य मित्रम् संसारसुहृत्, विश्वो मित्रं यस्य सः इति वा,'मित्रे धर्षौ'[5]इति दीर्घः। किलनिश्चयार्थे, सुरपतिस्पर्धया इन्द्रस्पर्धया, स्पर्धा पराभिभवेच्छा तया वृद्धतेजाः वर्द्धिततेजाः जगतीं भूमिम् अन्यथा अन्येन प्रकारेण स्रष्टुकामः निर्म्मातुकामः नवं नवीनं शक्रम् इन्द्रं चक्रे कृतवान्। किं पुन ब्रह्मणो जगत्कर्तुः अभिनवात् नूतनाम् अन्यान् पदार्थान् सृष्टवान् अन्यार्थकयोगे पञ्चमी, पुनः नव्यं नवीनं त्रिदिवं स्वर्गम् असृजत सृष्टवान् पुनः अभिनवान् सप्तलोकान् निर्म्ममे निर्मितवान्। 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नवः' इति 'स्वरव्ययं स्वर्गनाक-त्रिदिव-त्रिदशालया' इति चाप्यमरः। त्रिशङ्कोः सशरीरस्य स्वर्गप्रेषणकाले इन्द्रेण स्वर्गद्वारं पिदधे, तस्मात् तपोबलेन द्वितीयं स्वर्गम् अन्यानपि लोकान् द्वितीयमिन्द्रं निर्म्ममे। पश्चात् ब्रह्मगत्य वारयामास विश्वामित्रमिति कथा रामायणेऽनुसन्धेया। यस्याः भ्रता एतादृक् तपोबलसम्पन्नः तस्या महात्म्यं को वर्णयितुं शक्नोतीति ध्वनिः।

सीतापाणिग्रहणपिशुनो यत्र पौलस्त्यशत्रो-

**र्वीर्य्योद्रेकप्रतनकुशलो रोदसीरोधशीलः।**
**क्षत्रक्षोभाकरभृगुपतिस्वापविच्छेददक्षः**
**क्यातः सोऽभूदजगवधनुर्भङ्गजन्मा निनादः॥**[6]

हे भृङ्ग ! यत्र मिथिलायां स प्रसिद्धः अजगवधनुर्भङ्गजन्मा अजो गौर्य्यस्य स अजगुः शिवःतस्येदंधनुः अजगवम् 'गोस्त्रियोरुपसर्ज्जनस्य'[1]इति 'गाण्ड्यजगात् संज्ञायाम्'[2]इति च ह्रस्वः। 'पिनाकोऽजगवं धनुरि' त्यमरः। तस्य धनुषः भङ्गः भेदः तस्मात् जनितो यो निनादः निर्घोषः ख्यातः अभूत्।

[1]पा.सू५/३/१४
[2]भृङ्गदूतम् - ३६
[3]भृङ्गदूतम् - ४०
[4]भृङ्गदूतम् - ४५
[5]पाणिनीयसूत्रम् - ३।६।१३०
[6]भृङ्गदूतम् - ४८

कीदृशः?सीता जानकी तस्याः पाणिग्रहणं विवाहः तस्य पिशुनः सूचकः, पुनः, पौलस्त्यः रावणः तस्य शत्रोः रामचन्द्रस्य वीर्य्याधिक्यस्य प्रथमे ख्यापने कुशलः दक्षः। पुनः रोदसी द्यावापृथिव्यौ तस्याः प्रतिबन्धशीलः, पुनः क्षत्रस्य क्षत्रियस्य क्षोभाकरः क्षोभदाता यः भृगुपतिः परशुरामः तस्य स्वापः सुषुप्तिः तस्य विच्छेदे नाशे दक्षः कुशलः। 'गृधृवीत्याद्युणादिसूत्रात्' क्षत्र इतिपदं क्षत्रिय-वाचकम्। क्षोभा इति पचादित्वात्। जनकस्य कन्या जानकी वीर्य्यशुल्काऽऽसीत्। जनकस्यायं पणः यः कोऽपि मम गृहनिक्षिप्तं शिवस्य दक्षयज्ञविनाशकालिकं मार्म्मुकम् आरोपयेत् तस्मै देया कन्या। परन्तु अनेके नृपतयः समागताः, कार्म्मुकारोपणे विफलाः स्वस्वदेशं जग्मुः। विश्वामित्रः रामचन्द्रं समादाय मिथिलां प्राप्त, रामाय दर्शयामास धनुः। रामोऽपि धनुरारोपयन् लीलया बभञ्ज, सीतामुपायत च पृथिवीं प्रतिपाद्य परनिर्वृतः महेन्द्रर्व्वते चिरं सुष्वाप। रामचन्द्रकृतस्वगुरुशिवकार्म्मुकभङ्ग जनित निनादेन निद्राविरहितः क्षत्रियस्य वीर्य्योद्रेकेण विस्मितः क्रुद्धश्च मिथिलामागत्य रामचन्द्रेण पराजितः पुनर्म्महेन्द्राचलं जगामेति वार्ता रामायणेऽनुसन्धेया। एतादृशी मिथिला यत्र स्वयंलक्ष्मीः समुद्रभूता, स्वयं विष्णुरूपी रामः समागत्य दुर्न्निरीक्ष्यं शिवकार्म्मुकं बभञ्ज, क्षत्रियान्तकरस्य परशुरामस्य पराजयं कृतवान् सीतारूपां लक्ष्मीम् उद्वाह्य लीलार्थम् योध्यां गतः, तस्या मिथिलाया महात्म्य का कथा इति ध्वनिः।

धन्यं धाम प्रियमसख ! नमेश्चारुचन्द्रार्द्धमौलेः-

**दूरादेव प्रथमविषयीभूतभूयस्त्वमक्ष्णो।**
**यद्धावल्यप्रकरवलितं माने मावानां**
**कैलासाद्रेः परमशिखर-भ्रन्तिमाविष्करोति॥[3]**

हे प्रियसख भृङ्ग ! चारु सुन्दरं यत् चन्द्राखण्डं चन्द्रखण्डं मौलौ यस्य तस्य भैरवस्य शिवस्य धन्यं पवित्रं धाम स्थानं कीदृशम्अक्ष्णोः नेत्रयोः दूरादेव प्रथम-विषयीभूतं भूयस्त्वं बाहुल्यं यस्य तत् नमे प्रणामं कुर्य्याः। ननु दूरात् कथं नेत्रगोचरंभविष्यतीति, तत्रापि कथं बहुत्वेन नेत्रविषयीभविष्यतीति समाधनं करोति-यस्य धवल्यं धवलता स्वच्छता तस्य प्रकरः समूहः तेन वलितं युक्तं धाम, सुधायाः लेपनात् (चून) धावल्यमितिभावः। मानवानां मनुष्याणां मानसे हृदि कैलासाचलस्य परमशिखरस्य उत्कृष्टशृङ्गस्य भ्रन्तिं मिथ्यामतिम् अतद्वति तज्ज्ञनम् आविष्करोति उत्पादयति। कैलासाचलोत्कृष्टशिखरसदृशस्य दूरात् भूयस्त्वेन दर्शनं युक्ततरमेव। 'धन्यं' पुण्यवति त्रिषु 'इतिमेदिनी'। 'कूटोऽस्त्री शिखरं शृङ्गमिति' 'भ्रन्तिर्म्मिथ्यामतिर्भ्रम' इति 'प्रभृतं' प्रचुरंप्राज्यमदभ्रं बहुलं बहु। पुरुहू पुरु भूयिष्ठं स्फारं भृयश्च भूरि च 'इति' लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च इति चामरः।

**गत्वा तत्र श्रवणयुगलप्रीतये भूतभर्तुः**
**कुर्य्या धीरध्वनिमनिभृतो भूरिशो भाङ्कृतालि**
**नृत्यारम्भप्रमुदित-समुत्ताल-वेतालकालोद्-**
**गीतिप्रीतिर्म्मधुकर ! ततो भाविनी कामशत्रोः॥[4]**

हे मधुकर भृङ्ग ! तत्र श्रीभैरववस्य समीपे गत्वा तस्य भूतेशस्य श्रवणयुगलस्य कर्णद्वयस्य प्रीतये प्रीणनाय अनिभृतः व्यक्तीभूतः सन् भूरिशो बहु भाङ्कृतालि यथातथा भाङ्कार इतिशब्दानुकरणं, तस्याः पङ्किः प्रवाहः यस्मिन्, धीरध्वनिं धीरं मन्दं ध्वनिम् अव्यक्तं शब्दं कुर्य्याः कुरु। अनेन तत्र धीरध्वनिना ततः कामशत्रोः भैरव्यस्य नृत्यारम्भे प्रमुदिताः प्रसन्ना समुन्नताः ये वेतालकालाः शिवानुचराः तेषां या उद्गीतिः उच्चैर्गानं तया या प्रीतिः प्रसन्नता सा भाविनी भविता। वेतालकालानुचरगानेन यथा नृत्यारम्भे शिवस्य प्रसन्नता भवति तथैव तव धीरध्वनिना भविष्यतीति भावः।

**गत्वा तत्र श्रवणयुगलप्रीतये भूतभर्तुः**
**कुर्य्या धीरध्वनिमनिभृतो भूरिशो भाङ्कृतालि**
**नृत्यारम्भप्रमुदित-समुत्ताल-वेतालकालोद्-**
**गीतिप्रीतिर्म्मधुकर ! ततो भाविनी कामशत्रोः॥[5]**

हे मधुकर भृङ्ग ! तत्र श्रीभैरववस्य समीपे गत्वा तस्य भूतेशस्य श्रवणयुगलस्य कर्णद्वयस्य प्रीतये प्रीणनाय अनिभृतः व्यक्तीभूतः सन् भूरिशो बहु भाङ्कृतालि यथातथा भाङ्कार इतिशब्दानुकरणं, तस्याः पङ्किः प्रवाहः यस्मिन्, धीरध्वनिं धीरं मन्दं ध्वनिम् अव्यक्तं शब्दं कुर्य्याः कुरु। अनेन तत्र धीरध्वनिना ततः कामशत्रोः भैरव्यस्य नृत्यारम्भे प्रमुदिताः प्रसन्ना समुन्नताः ये वेतालकालाः शिवानुचराः तेषां या उद्गीतिः उच्चैर्गानं तया या प्रीतिः प्रसन्नता सा भाविनी भविता। वेतालकालानुचरगानेन यथा नृत्यारम्भे शिवस्य प्रसन्नता भवति तथैव तव धीरध्वनिना भविष्यतीति भावः।

श्रीगङ्गां वर्णयति–

**देवाः के वा न खलु विलसद्भक्तिभावानुरक्ता-**
**स्तां सेवन्ते विमलपयसो दर्शने निर्न्निमेषाः।**
**यत्तीरस्था मधुकर ! तपः किं च दीर्घं चरन्तः**
**कल्पं कल्पं परममुनयो निर्व्विकल्पं विशन्ति॥**

हे मधुकर भृङ्ग ! तां श्रगङ्गां के देवा इति अवधारणे खलु इति निश्चयार्थे, कीदृशाः, विलसन् यः भक्तेः प्रीतेः भावः मानसो धर्म्मः, तेनानुरक्ताः भक्तिमन्तः, न सेवन्ते सेवां कुर्व्वन्ति अपितु सर्व्वे एव पुनः कीदृशाः, विमलपयसः स्वच्छजलस्य श्रीगङ्गाया इति शेषः, दर्शने अवलोकने निर्न्निमेषाः चक्षुषः स्वाभाविकस्पन्दनरहिताः, देवानां निमेषशून्यत्वं प्रसिद्धम्। निमेषशून्यत्वे कारणं कथयतिश्रिगङ्गायाः विमलपयसो दर्शनार्थमेव

[1]पाणिनीयसूत्रम् - १।२।४८
[2]पाणिनीयसूत्रम् - ५।२।११०
[3]भृङ्गदूतम् - ६६
[4]तत्रैव - ६७
[5]तत्रैव - ६८
[6]भृङ्गदूतम् - ७२

निर्निमेषा जाता:, किंच परममुनय: मुनिश्रेष्ठा: कीदृशा: यत्तीरस्थाः यस्या: श्रीगङ्गाया: तीर तटे तिष्ठन्तीति, कल्पं कल्पं ब्रह्मणो दिनं दिनम् अतएव दीर्गं तप: चरन्त: आचरन्त: निर्व्विकल्पं विशन्ति प्रविशन्ति। निर्व्विकल्पश्च ज्ञातृज्ञेयादिविभागशून्यविशेषतासम्बन्धरहितब्रह्मात्मैकात्मविषयाखण्डाकाररूपा मुक्ति:। 'विकारो मानसो भाव' इति। 'स्युरेवन्तु पुनर्वैवेत्यवधारणवाचका:' इति चामरः।

## नव्यन्यायमते ईश्वरस्वरूपनिरूपणम्*

### गङ्गेशोपाध्यायमतरीत्या ईश्वरस्वरूपविवेचनम्–

दु:खपङ्कनिमग्नानां जीवानां षोडशपदार्थतत्त्वज्ञानद्वारादु:खात्यन्तविमुक्तये परमकारुणिको महर्षिगौतम: षोडशपदार्थनिरूपणात्मकं तर्कशास्त्रं प्रणिनाय। तद्वत् नव्यन्यायस्य प्रथमप्रणेता नव्यन्यायप्रवर्त्तकश्च श्रीमद् गङ्गेशोपाध्यायस्य साहित्यबलेन न्यायदर्शनं सर्वत्र समादरमसादत। एतेऽपि स्वकृततत्त्वचिन्तामणौ ईश्वरस्य निर्देश: कृतः। तत्र ईश्वरनिर्देश: अनुमानप्रमाणेनैव साधयन्ति ग्रन्थकार:। तथा च-"प्रत्यक्षपरिकलितमव्यक्तमर्थमनुमानेन वभुत्सन्ते तर्करसिका:, नहि करिणि दृष्टे चोत्कारेण तमनुमिते अनुमातार:"[1]इति ग्रन्थेन ज्ञायते। अस्मिन् तत्त्वचिन्तामणिग्रन्थे चत्वार: परिच्छेदा: सन्ति, प्रथम-द्वितीयपरिच्छेद: तत्र अनुमानपरिच्छेद:। इत्यत्र एव अनुमानप्रमाणेन ईश्वरानुमानप्रणाली विशेषतया च साधितवान्। इदानीं श्रीमद्गङ्गेशोपाध्यायेन विरचितं तत्त्वचिन्तामणौ किमस्ति ईश्वरसाधकं प्रमाणं तद् इदानीं विचारयाम:।

### तत्त्वचिन्तामणौ ईश्वरस्वरूपनिरूपणम् –

नव्यन्यायप्रवर्त्तक: गङ्गेशोपाध्याय: स्वकृततत्त्वचिन्तामणिग्रन्थे ईश्वरानुमानविषये यन्निरूपितवान् तदिदानीं विचारयाम:। तत्त्वचिन्तामणिकार: अनुमानप्रकरणे ईश्वरानुवादे क्षित्यादौ कार्यत्वेन सकर्तृकत्वानुमानं प्रतिपादितवान् तत्र प्रथमत क्षित्यादिकं प्रत्येकं पक्षो वा इत्यादि पक्षविचारं तथा साध्यविचारं हेतुविचारञ्च कृत्वा पूर्वपक्षं स्थपित यदि इदमनुमानं न युक्तमिति। तत्त्वचिन्तामणिकार: इदमनुमानं निर्दुष्टमिति प्रतिपादयन्ति। तद्यथा-"अदृष्टा द्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावाप्रतियोग्युपादानगोचरा-परोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि स्वजनकादृष्टाद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि वा अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभवदुपादानानि वा समवेतत्वे सति प्रागभावप्रतियोगित्वात् यदेवं यथा तदेवं घट तथा चैतानि तस्मात्तथा"[2]इति प्रथमत: अनुमान- प्रयोगान् प्रदर्श्य अनन्तरं क्षितिरेव वा पक्ष इति पक्षमत्र निरूपयामासु:। इदानीं 'क्षिति: सकर्तृका कार्यत्वात्' इत्यनुमानं विवक्षितम्। ननु अङ्कुरे

---

* शोधार्थी- मिहिररञ्जनपण्डा

[1]त.चि. पृ. १६/१९

[2]त.चि. पृ. २१

सन्दिग्धानैकान्तिकत्वं दोषः। अङ्कुरः न तावत् पक्षः। तत्र कृतिजन्यत्वं सन्दिग्धं, तथापि कार्यत्वं वर्तते। एवञ्च सन्दिग्धसाध्याभाववद्वृत्तित्वात् हेतोः कार्यत्वस्य सन्धिग्धानैकान्तिकत्वमत्र दोष इति चेन्न। पक्षे पक्षसमे वा साध्यसन्देहस्य दूषकत्वं नास्तीति सिद्धान्तात् मणिकारैणैवोक्तं यत्- 'पक्षेपक्षसमनैरपेक्षेण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात्'[1]इति। अर्थात्- पक्षे पक्षसमे वा व्याप्तिः न गृह्यते। घटादौ तावत् व्याप्तिनिश्चयः लिङ्गस्य भवति। तादृशलिङ्गस्य पक्षे पक्षसमे तावदनुमिति भवितुमर्हति। न च तर्ह्यङ्कुरोऽपि पक्षः स्यात् कुतः पक्षसम इत्युच्यते इति न वक्तव्यम् प्रतिज्ञायां क्षितिः सकर्तृका इत्याकारिकायामङ्कुरनिदेशाभावात्तस्य पक्षसमशब्देन व्यपदेशात्। तथैव अङ्कुरस्य पक्षत्वं नास्ति चेत् तत्र कथं पक्षसमताज्ञानमिति नैव वक्तव्यम्। इत्यत्र पक्षता नाम-सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। तादृश सिद्ध्यभाववति पक्षे लिङ्गज्ञानमनुमितिकर-णमिति स्वीक्रियते। सिषाधयिषाविरह-विशिष्टसिद्ध्य-भावरूपपक्षता क्षितावपि वर्तते अङ्कुरेऽपि वर्तते परन्तु प्रतिज्ञायां क्षितिनिर्देशः अस्तीति हेतौ तस्याः पक्षत्वेन व्यपदेशः। अङ्कुरे च सः निर्देशः नास्तीति पक्षसमत्वेन व्यपदेश इति विशेषः। तथा च क्षितौ यथा पक्षधर्मताज्ञानं वर्तते तद्वङ्कुरनिरूपितवृत्तित्वज्ञानमपि कार्यत्वहेतोः वर्तते इत्येव सिद्धम्।[2]

यदि क्षितौ हेतुमत्त्वनिश्चयो वर्तते अङ्कुरे हेतुमत्त्वनिश्चयो नास्ति इत्युच्यते, तदा अङ्कुरान्तर्भावेन सन्दिग्धानैकान्तिकत्वशङ्का एव नोदियात्। तत्र हि साध्याभावः सन्दिग्धः। भवद्रीत्या हेतुरपि तत्र न निश्चितश्चेत् सन्दिग्धानैकान्तिकत्वं हेतोः कार्यत्वस्य कथं तत्र आपादयितुं शक्यते इति।[3]

**सन्दिग्धानैकान्तिकस्वरूपविचारः –**

इदानीं शङ्का जायते यत्- पक्षसमे अङ्कुरे साध्याभाववृत्तित्वसंशयात् हेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नो वा बाध्येत। अर्थात् साध्याभाववद्वृत्तित्वसंशयः द्विविधः। साध्यभावांशे सशंय,तद्वद्वृत्तित्वांशे संशय। अत्र हेतोः कार्यत्वे सकर्तृकत्वाभाववद्वृत्तित्वसंशयः सकर्तृकत्वाभावसंशयविषयीभूतधर्मिवृत्ति-त्वरूपव्यभिचारः कार्यत्वेऽस्तीति तात्पर्येणापादितः। एवमेव साध्याभावसामानाधिकरण्यसंशये सति व्याप्तिग्रह एव न भवितुमर्हति। यदि व्याप्तिग्रहो भवति तदानीं स व्याप्तिग्रहो बाध्येत। ६ कथमिति चेत्- व्यभिचारसंशयः न व्याप्तिग्रहप्रतिबन्धकः अपि तु व्यभिचारनिश्चय एव। एवञ्च प्रतिबन्धक अभावदुत्पन्नोऽपि व्याप्तिग्रहः अप्रामाण्यशङ्काकलङ्कितौ भवेत्। तथा च अप्रामाण्यग्रहानास्कन्दितव्याप्तिनिश्चयस्यैवानुमिति-कारणत्वेन तादृशज्ञानस्य नानुमितिहेतुत्वमिति। 'उत्पन्नोऽपि वा बाध्येत'[4]इत्यस्यायमर्थः अप्रामाण्यशङ्काकलङ्कि-तत्वादुत्पन्नः व्याप्तिग्रहो न कार्यजनकः भवतीति वक्तुं नैव शक्यते। तर्हि धूमोऽपि व्याप्तिग्रहः न स्यात्। एवञ्च सध्याभावसामानाधिकरण्यसंशयः भवतीति कृत्वा महानसेऽपि धूमे व्याप्तिग्रहः न स्यात्। जायमानो वा अप्रमाण्यशङ्काकलङ्कित इति कृत्वा अनुमितिजनकः न स्यादिति प्रतिबन्दिसम्भवात्। तस्माद् यत्र साध्यसन्देहो भवति तत्र हेतुनिश्चयः दोषाय न भवतीत्येवं निश्चेतव्यम्। पक्षे साध्यसन्देहो भवति चेत्, पक्षतेति वदन्ति प्राचीनाः। यदि पक्षे पक्षसमे वा साध्यसन्देहः दोषाय भवेत् तदानुमानमात्रम्।[5] अर्थात्-अनुमितिः द्विविधा, सिद्धौ सत्यां सिषाधयिषाधीना काचित् अपरा सिद्ध्यभावकालीना। तत्र प्रायः सिद्ध्यभावकाले साध्यसंशयस्य पूर्वं सत्वात् साध्यसन्देहजनितायाः अनुमितेः सर्वस्याऽपि पूर्वं साध्याभावसामनाधिकरण्यसंशयः भवतीति कृत्वा तादृशानुमानसामान्यमुच्छिद्येत। न च साध्याभावसामानाधिकरण्यसंशयप्रयुक्तं सन्दिग्धानैकान्तिकत्वं पक्षे यद्यपि न दोषाय तथापि पक्षभिन्ने दोषायैव भवति। एवञ्च पक्षभिन्ने अङ्कुरान्तर्भावे साध्याभावसामानाधिकरण्यसंशयः दूषणमेव इति तु न वक्तव्यम्, पक्षान्यत्वस्याङ्कुरे अभावात्।[6]

इदानीं पक्षान्यत्वोपरि विचार्यते। सिषाधयिषितसाध्यभिन्नत्वं यदि तदानपेक्षितानुमितिर्न स्यात्।[7] तथाहि- अनपेक्षितशब्दाद्यानुमितिः लोके भवत्येव। यदि सिषाधयिषितसाध्यभिन्ने वस्तुनि साध्याभावसामानाधिकरण्यसंशयः सन्दिग्धानैकान्तिकत्वदोषप्रयोजकः उच्यते, तदा तत्र पक्षस्यापि सिषाधयिषितसाध्यभिन्नत्वेन पक्षान्यत्वं तत्र भवतीति कृत्वा प्रसिद्धानुमितिर्न भवेत्।[8] यदि सन्दिग्धसाध्यक-वस्तुभिन्नत्वं पक्षान्यत्वं तदन्तर्भावेन साध्याभावसामानाधिकरण्यसंशयः दोषः इत्युच्यते, तदा अङ्कुरेऽपि सन्दिग्धसाध्यकभिन्नत्वं नास्तीति कृत्वा न पक्षभिन्नत्वम्।[9] यदि प्रतिज्ञाविषयभिन्नत्वं पक्षान्यत्वमित्युच्यते, तच्च यद्यप्यङ्कुरे वर्तते, तथाप्येतादृश-पक्षभिन्नत्वं यदि स्वीक्रियते तदा तदन्तर्भावेन साध्याभावसामाना-धिकरण्यसंशयस्य दोषत्वे स्वार्थानुमानमात्रस्य उच्छेदः।[10] परार्थानुमितौ तावत् न्यायः अपेक्षितः। स्वार्थानुमितौ तावत् प्रतिज्ञादिकं नापेक्षितम्। एवञ्च स्वार्थानुमितौ विषयीभूतस्य पक्षस्य प्रतिज्ञाविषयान्यत्वं वर्तते इति कृत्वा उक्तं पक्षभिन्नत्वं तत्रागच्छेत्। न च सर्गाद्यकालीनपदार्थं पक्षीकृत्य तत्कर्तृत्वेन ईश्वरसाधने असिद्धिदोषः। येषां मते सर्गः न स्वीकृतः ते किल पूर्वपक्षिणः। तान् प्रतिसर्गाद्यकालीनपदार्थपक्षकानुमान-माश्रयसिद्धदोषदुष्टमिति वदामः,ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्यं प्रति जनकत्वावधारणेन एतदनुमानस्य तदविषयत्वात्।[11] न च ईश्वरानुमानं यदि स्वीक्रियते, तदा शशेऽपि पशुत्वाद्धेतोः शृङ्गं साध्येत इति वाच्यम्, अप्रयोजकत्वात्। पशुत्वरूपहेतुरस्तु शृङ्गत्वरूपसाध्यं मास्तु इति शङ्कायां तद्बाधकः तर्कः भवता प्रदर्शयितुं न शक्यते। प्रकृते तावत् कार्यमात्रे कर्तुरवधारणात् कार्यत्वहेतुः नाप्रयोजकः।[12]

---

[1]त.चि. पृ. २१
[2]त.चि.पृ. २१
[3]त.चि.पृ. २१, २२
[4]त.चि.पृ. २२
[5]त.चि.पृ. २२, २३
[6]त.चि. पृ. २२,२३
[7]त.चि. पृ. २३
[8]त.चि. पृ. २३
[9]त.चि. पृ. २३
[10]त.चि. पृ. २३, २४
[11]त.चि. पृ. २५,२६
[12]त.चि. पृ. ३३

न च शशे पशुत्वेन अयोग्यशृङ्गं सिद्ध्यतु इति वाच्यम्, अर्थान्तरत्वात् विपक्षे बाधकाभावेन व्याप्त्यासिद्धेश्च। तथाहि-शृङ्गत्वं तावत् योग्यसंस्थानविशेषव्यङ्ग्यम्। शृङ्गत्वं वर्तते चेत् गृह्येत। एतञ्च शृङ्गत्वविशिष्टस्य शृङ्गस्य दर्शनयोग्यत्वात् दर्शनयोग्यत्वे सति योग्यानुपलब्धिपराहतत्वात् शृङ्गस्य तद्विरोधेन अयोग्यशृङ्गस्य आपत्तिः दुःसाध्या। किञ्च शशे शृङ्गस्य सर्वेषां प्रत्यक्षेण बाधो वर्तते।[1]

**त्रयाणां कथं सिद्धिरिति निरूपणम्**

ननु ज्ञानेच्छाप्रयत्नाः कार्यत्वहेतुना यदि साध्यन्ते, तर्हि व्यतिरेकसहचारग्रहणकाले ज्ञानेच्छाप्रयत्नव्य-तिरेकात् कार्यत्वव्यतिरेकः वक्तव्यः। परन्तु तथा चेत् व्यर्थविशेषणत्वं दोषः, एकैकव्यतिरेकादेव कार्यत्वव्य-तिरेकस्य सुसाधत्वात्।[2] परन्तु भगवतः ज्ञानमिच्छाकृतिश्च इति त्रयं कथं सिद्ध्यतीति चेत्, एकैकव्यतिरेकात्कार्यत्वव्यतिरेके सिद्धेः तत्प्रतियोगिकार्यत्वहेतुना साध्यस्य ज्ञानादेः प्रत्येकं सिद्धिः। त्रितयमपि भगवति कथं सिद्ध्यतीति चेत्, अर्थस्तु समाजः इत्युक्तं मणिकारैः। तत्तत्सामग्रीप्रयुक्तं वस्तुजातं यद्येकत्र मिलति तद् आर्थसमाजः इत्युच्यते। तद्वदत्रापि तत्तद्धेतुज्ञाप्यं वस्तुत्रयमेकत्र मिलतीति कृत्वा त्रयाणामेकत्र सम्भवः।

**पूर्वपक्षपरिहारः-**

आदौ अत्र शङ्का जायते यत्-अशरीरनित्यज्ञानादिमान् सर्वज्ञ: कर्ता क्षित्यादौ साध्यतया विवक्षित:। दृष्टान्ते घटादौ च कार्यत्वं तद्विपरीतकर्तृसहचरितं दृष्टम्। एवञ्च विशेषविरोध इति नैव वक्तव्यम्। हेतो: कार्यत्वस्य विवक्षतसाध्यविपरीत-सहचारमात्रस्य दूषकत्वाभावात्। अर्थात्- 'वह्निमान् धूमात्' इत्यत्र धूमेन पर्वते वह्नि: साध्यते। तत्र विवक्षित सध्य: पर्वतीय वह्नि:। तद्विपरीतमहानसादिवह्निना यत् सहचरितत्त्वं पर्वते धूमस्य तत्कथं दूषकं स्यात् इत्यस्य प्रश्नस्य अभिप्रायो वर्तते। अर्थात् सपक्षे सहदृष्टानां धर्माणं ा लिङ्गिनिष्प्रवृत्तिर्न भवति। सपक्षे महानसचत्वरादौ दृष्टा धर्मा: महानसत्वादय:। ते धर्मा: पर्वते वह्निसाधनकाले वह्निविशेषणतया बोधयितुं न शक्यन्ते इति तु सर्वेषामिष्टमेव। तत्सर्वमत्र योज्यते चेत्, अनुमानमात्रस्योच्छे-दप्रसङ्ग: महानसीयत्वादिविशिष्टवह्न्यादे: पर्वतादौ बाधितत्वात्। एवं प्रकृतेऽपि कार्यस्य कर्तुश्च कार्यकरण-भावस्य सिद्धत्वात् कार्यत्वेन हेतुना कारणविशेष: कर्ता अनुमीयते न तु तस्य कर्तु: यादृशांश; दृष्टान्ते दृष्ट: तत्सर्वमपि पक्षे साध्यविशेषणतया साधयितुं शक्यते इति। न च अनित्यज्ञानासर्वज्ञशरीरिकर्तृत्वेन समं कार्यत्वस्य व्याप्तिरस्ति येन विपरीतसाधने विरुद्धत्वं स्यात्। तादृशव्याप्तिश्च भवता अपि नाङ्गीक्रियते अस्माभिरपि नाङ्गीक्रियते। कथमिति चेत्- अङ्कुरादौ येग्यानुपलम्भेन शरीरिकर्तृकत्वाभावात्। यत्र यत्र कार्यत्वं तत्र तत्र अनित्यज्ञानसर्वज्ञशरीरकर्तृकत्वमिति काचित् व्यप्तिधी: भवतामपि नास्ति। कुत: नास्तीति चेत्, कार्यत्वाश्रयाङ्कुरादौ अनित्यज्ञानासर्वज्ञशरीरि-कर्तृकत्वं भवतापि न दृष्टमिति। न च दर्शनबलप्रवृत्तव्याप्त्या अनित्यज्ञानादिमान् कर्ता अत्र साध्यते। तथाहि- यद्यपि अङ्कुरादौ कर्तृ: शरीरित्वमसर्वज्ञत्वमित्यादिकमस्माभि: न दृष्टम्, अथापि यत्र यत्र कार्यत्वं भवति तत्र तत्र अनित्यज्ञानादिमान् कर्ता दृष्ट: वर्तते घटादौ अङ्कुरादौ ममा ज्ञायि। एवञ्च दृष्टान्तबललब्ध: अनित्यज्ञानादिमान् कर्ता, पक्षधर्मता बललब्ध: नित्यज्ञानादिमान् कर्ता। तथा चोपनेयो विशेषयो: विरोधो भवति। अपि च व्याप्तिपक्षधर्मतयाविरोधात् परस्परसहकारित्वं न भवतीति कृत्वा इदमनुमानं न विशेषविरोधात् इति न वक्तव्यम्। विशषविरोधाभावात्। तथाहि-अनित्यज्ञानादि-मत्कर्तृजन्यत्वे व्यप्तिस्तु न गृहीता, ज्ञानादिमत्कर्तृजन्यत्वेन तावत् व्याप्ति: गृहीता, इत्यत्र मणिकारेणोक्तं यत्- 'पक्षधर्मताबललब्धविशेषविरोधात् केवलाया: व्याप्ते: पक्षधर्मतायाश्च पृथगुपनायकत्वाभावाच्च एकवैयर्थ्यप्रसङ्गात्। अर्थात्- नित्यज्ञानादिमत्कर्तृजन्यत्वेन व्याप्तिस्तु न गह्यते। ज्ञानादिमत्कर्तृजन्यत्वव्याप्ति: या वर्तते सा तावत् पक्षधर्मतावललभ्येन। नित्यज्ञानादिमत्त्वरूपेण कर्तृनिष्ठविशेषेण अविरुद्धा वर्तते। केवला व्याप्ति: केवला पक्षधर्मता वा पृथगुपनायकत्वं न भजते। तथा चेदनुमितौ तयोरन्यतरस्य वैयर्थ्यं स्यादिति अस्या; पङ्क्तेरर्थ:। तदव विवृणोति ग्रन्थकार: यत्- 'तथा च निरपेक्षतादशायां विशेषानुपस्थापनादेव न विरोधज्ञानं, सापेक्षतादशायान्तु सहोपलम्भादेव विरोधप्रतियोगिन: सिद्ध्यसिद्धिभ्यां विरोधज्ञानाभावाच्च' इति। अत्र इदमभिप्रेतं यत्- पक्षधर्मताव्याप्तिश्च यदि परस्परं निरपेक्षतया तत्र प्रवर्त्तते तदिदानीं तावद्विशेषस्योपस्थितिरेव न भवति। कुत: इति चेत्- व्याप्तिज्ञानसहकारं विना पक्षधर्मता तावद्विशेषं नोपस्थापयितुं शक्नोति। अत: विशेषस्य उपस्थापनं पक्षधर्मता न करोतीति कृत्वा विरोधज्ञानं नास्ति। पक्षधर्मताव्याप्तिश्च परस्परं यदि सहकारितां भजते तदानीं तावदवश्यं विरोधो नास्ति इत्येवं वक्तव्यम्। 'सिद्ध्यसिद्धिभ्यां विरोधज्ञानाभाव:' इति ग्रन्थस्य इदमेव तात्पर्यम्। विशेषविरोध: कुत्र भवतीति चेत्- यत्र हेतुविशेषणसाध्यविशेषणयोर्विरोधो भवति तत्रैव विशेषविरोधदोष भवतीति मणिकाराणामाशय:। यथा असुरभिधूमस्य चन्दनप्रभववह्निज्ञापकत्वं न सम्भवतीति कृत्वा साध्यविशेषणचन्दनप्रभवत्वस्य हेतुविशेषणस्यासुरभिचन्दनस्य च परस्परं विरोधो भवति। तादृशस्थले एव विशेषविरोधदोष:। तादृशस्थलञ्च- 'अयं चन्दनप्रभवः वह्निमान् असुरभिधूमवत्वात्'इति। शरीराजन्यत्वविचार: – घटादौ कृतिसाध्यत्वं दृष्टम्, तच्च हस्तादिव्यापारद्वारा भवति न तु साक्षात्। भगवता क्रियमाणे पदार्थे एतादृशं कृतिसाध्यत्वं वक्तुं न शक्यते इति दोष। पितापुत्रयोरेकघटसाधकत्वमिव प्रयत्नहस्तादिव्यापारयो: साक्षात्साधनत्वमिति न वक्तव्यम्, घटार्थं हस्तव्यापार: यथा भवति तथा कुलालसमीपस्थस्य पुरुषान्तरस्य हस्तादिव्यापारशून्यस्य तदघटकर्तृत्वापत्ते:। २८ एवञ्च प्रयत्नस्य हस्तादिव्यापार- द्वारेव कारणत्वं वक्तव्यं न साक्षात्। अर्थात्-व्यापारादिनिष्ठस्य प्रयत्नस्य कारणत्वं नास्ति। स च व्यापार: हस्तादिव्यापार एवेति पूर्वपक्षिण: अभिप्राय: हस्तादिव्यापारवत्त्वं तावत् अशरीरस्य भगवत: नास्ति। अन्यादृशी कृतिसाध्यता तावत् लोके न दृष्टा। तथा च शरीरतद्व्यापारयो: अङ्कुरे बाधात् अङ्कुरस्य सकर्तृकत्वं बाधितमेव।

यदि हस्तादिव्यापारं विनापि कश्चित् कर्त्ता अङ्कुरादिस्थले अनुमीयते, तर्हि जीव एव कश्चित् कर्तृत्वेन अनुमीयतां, परमात्मन: योग्यानुपलब्धिबाधात्। शीररव्यापारद्वारैव क्षेत्रज्ञ: कर्ता दृष्ट:। शरीरव्यापारश्च अङ्कुरे बाधित:। एवञ्च क्षेत्रज्ञस्य कर्तृत्वं तत्र बाधितमिति न वक्तुं शक्यते। तर्हि कर्तृमात्रस्यापि हस्तादिव्यापारद्वारैव चेष्टेतरकार्यकर्तृत्वावधारणात् तद्बाधे कर्तृमात्रबाध: स्यादिति ईश्वरस्यापि अङ्कुरविषये कर्तृत्वं न स्यात्। तथा च कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं प्रयोजकमिति। शरीरव्यापारजन्यत्वमुपाधि: क्षित्यादिकं सकर्तृकमित्याद्यनुमाने। एवं ज्ञानेच्छयोरपि इच्छाकृतिद्वारा जनकत्वमिति द्वारं विना कथमीश्वर: क्षित्यादौ जनक इति। द्वारं विना क्षित्यादौ कथमीश्वरीयज्ञान इच्छयो: जनकत्वं भवतीति प्रश्नस्तिष्ठतीति चेन्न। इदानीं सिद्धान्तमतरीत्या विचारयाम:। जन्यमात्रे हस्तादिव्यापारकृतिजनकत्वेन न जनकत्वम्, चेष्टायां क्षित्यादौ च व्यभिचारात्। जन्यमात्रं हस्तादिव्यापारद्वारैव

[1] त.चि. पृ. ३३

[2] त.चि. पृ. ३७

कृतिजन्यमिति वक्तुं न शक्यते, चेष्टायां तावत् हस्तादिव्यापारद्वारक-कृतिजन्यत्वाभावात्। क्षित्यादौ च चेष्टादिव्यापारजन्यत्वं नास्त्येव। यत्र विशेषयोः जन्यजनकभावे बधकमस्ति तत्रैव न सामान्ययोः जन्यजनकभावः। प्रकृते कार्यविशेषकृतिविशेषयोः जन्यजनकभावे बाधकाभावात् कार्यसामान्यकृतिसामान्ययोः जन्यजनकभावः निष्प्रत्यूह एव। अर्थात्-घटादौ तावत् कृतिः जनिका। हस्तादिव्यापारद्वारककृतिजन्यत्वं जन्यमात्रे तु बाधकमित्युक्तम्। एवञ्च अयमेव कार्यकारणभावः यज्जन्यमात्रं प्रति कृतिमात्रं कारणमिति। घटं प्रति कुलालकृतिः कारणमिति कार्यकारणभावविशेषस्तावत् सिद्धः। तद्बलेन कृतिमात्रं जन्यमात्रं प्रति कारणमिति सामान्यकार्यकारणभाव सेत्स्यति। न हि विशेषे विशेषप्रयोजकत्वं सामान्ये सामान्यप्रयोजकत्वविरोधी। यदि कस्मिंश्चिज्जन्ये हस्तादिव्यापारद्वारा कृतिजनिका इति चेत्, तत्सामान्यकार्यकारणभावेऽपि हस्तादिव्यापाररूपद्वारकत्वरूपं विशेषम् आनयेत्। एवञ्च चेष्टेतरकार्ये शरीरव्यापारद्वारैव कृतेः हेतुत्वात् तेन विना क्षित्यादौ न कृतिसाध्यता इति वाच्यम्। चेष्टेतरकार्यमात्रे शरीरव्यापारजनककृतित्वेन न जनकत्वं तादृशकार्यकारणभावस्य क्षित्यादौ व्यभिचरितत्वात्। किन्तु तद्विशेषे घटादावेव तस्य कारणत्वमिति पूर्वमेवोक्तम् इत्ययं संशयः न भवेदेव। यदुक्तं, क्षेत्रज्ञ एव अनुमीयतां किमर्थं बुद्ध्यादिमत्परात्मनः योग्यानुपलब्धिबाधितस्यानुमानेन। तत्रोच्यते- क्षेत्रज्ञशब्देन यदि हस्तादिव्यापारहेतु-भूतकृतिमान् विविक्षतः, तदा हस्तादिव्यापारस्याङ्कुरे योग्यानुपलम्भबाधः वर्तते एवेति तुल्यदोषः। यदि हस्तादिव्यापारशून्यकृतिमान् क्षेत्रज्ञपदार्थतया अभिमतः तदा इष्टापतिरेव। स एव अस्माभिः ईश्वर इत्युच्यते। नित्यज्ञानादिमतः सिद्धिः न भवतीति शङ्का– ननु कर्ता शरीरी एव ज्ञानमनित्यमेव बुद्धीच्छाद्वारैव हेतुः इच्छाकृतिद्वारेव हेतुः इत्यादिप्राथमिकव्याप्तिप्रत्यक्षविरोधात् ईश्वरे अशरीरित्वस्य तज्ज्ञाने नित्यत्वस्य बुद्धेः इच्छायाश्च साक्षाद्धेतुत्वे च मानाभावः बाधश्चेति। एवञ्च एतादृशव्याप्तिबाधात् नित्यातीन्द्रियशरीरसिद्धिरपि ईश्वरे न भवति। न चेदमनुमानमप्रयोजकम्, निरूपाधित्वात्।

ननु कर्तृत्वस्याशरीरित्वस्य ज्ञानत्वस्य नित्यत्वस्य व्याप्तेः गृहीतत्वेन शङ्काकलङ्काभावादिदमनुमानम्- 'कर्ता सशरीरः कर्तृत्वात्' इत्यादिकं दुष्टमेवेति चेन्न। यतः कार्यत्वसकर्तृकत्वयोरपि निरुपाधिव्याप्तेः सत्त्वात् न दोष इति तु नाशङ्कनीयम्। तदात्वेऽपि तुल्यबलत्वेन सत्प्रतिपक्षस्थलवत् परस्परप्रतिबन्धापत्तेः। न च कार्यत्वं हेतुः, तस्य पक्षधर्मत्वं पक्षे गृहीतमिति कृत्वा पक्षधर्मताबलादशरीरिकर्तृकत्वादिकं सिद्ध्यति। एवञ्च कार्यत्वं बलीयः कर्ता शरीर्येवेत्यादिक-मनुमानन्तु दुर्बलमिति वाच्यं, ज्ञानमनित्यमेवेति व्याप्तेरेव क्षित्यादौ ज्ञानजन्यत्वविरोधित्वात्। एवं कार्यं ज्ञानजन्यं ज्ञानमनित्यमेवेति अनयोर्विरोध एव। अविरोधे तु द्वयमपि स्यात्। तथा च क्षित्यादौ शरीर्यनित्यज्ञानपर्यवसाने बाध एव पक्षधर्मताबलात् सिद्ध्येत्, अशरीरिकर्तृकत्वस्य नित्यज्ञानस्य च बाधितत्वादिति। किञ्च ज्ञानमनित्यमेवेत्यादौ अनुमाने प्रवृत्ते नित्यज्ञानस्याप्रसिद्धत्वात् तदवृत्तितया न उपाधिनिश्चयः संशयो वा, कार्यत्वसकर्तृकत्व-व्याप्तिग्रहदशायां शरीरव्यापाराव्यभिचारादुपाधेः निश्चयः संशयो वा अस्तीति। एवञ्च इदमनुमानमशरीरिकर्तृकत्वे नित्यज्ञाने वा न पर्यवस्यति इत्याक्षेपः। समाधानम्– ज्ञानमनित्यमेवेत्यादि आपत्तिरेव न युक्ता। 'ज्ञानमनित्यत्वाभावाभाववत्' इत्यनुमानं विपक्षे बाधकाभावाप्रयोजकम्। न च निरुपाधिकसहचारदर्शनमस्ति व्यभिचारदर्शनमप्यस्तीति हेतोः सम्भवात् व्याप्तिग्रहो निरुपाधिकः इति वाच्यम्। अवयवः महानेव तेज उद्भूतरूपवदेव इत्यादिव्याप्तिग्रहणात् परमाणुनयनादेः उद्भूतरूपशून्यस्य वा असिद्धिप्रसङ्गात्। अत्र मणिकारैः विचार्य कश्चिन्निर्णयः कृतः- 'वयं तु ब्रूमः' इत्यनेन। अयमत्र ग्रन्थः वयं तु ब्रूमः। पक्षधर्मताबलानन्नित्यं ज्ञानं सिद्ध्यबुद्धिरनित्यैवेति व्याप्तिप्रत्यक्षेण न प्रतिबध्यते अस्मदादि-बुद्धिमात्रविषयकत्वेन भिन्नविषयत्वात् एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात् नित्यत्वानित्यत्वयोः एकजातीयद्रव्येऽविरोधात्। बुद्धिमात्रेऽनित्यत्वावधारणात् कथं तद्विशेषे नित्यत्वबुद्धिरिति चेन्न। बुद्धिमात्रपदस्येश्वरानीश्वरबुद्धिपरत्वे विरोधाद्व्यभिचाराच्च। अस्मदादिबुद्धिमात्रपरत्वे भिन्नविषयत्वेनाप्रति-बन्धकत्वात्। बुद्धित्वं नित्यव्यावृत्तमेवेत्यवगतमतः कथं तत्र नित्यवृत्तित्वावगम इति चेन्न। उभयसिद्धनित्यावृत्तित्वावगमेऽप्यतिरिक्तनित्यवृत्तित्वावगतौ विरोधाभावात् इति। अस्यार्थः पक्षधर्मताबलात् नित्यं ज्ञानं सिद्ध्यति। बुद्धिः अनित्या एवेति व्याप्तिप्रत्यक्षं पक्षधर्मताबलात् सिद्ध्यत् ज्ञाननित्यत्वं बाधितुं न शक्नोति। ज्ञानं नित्यमेवेति प्रत्यक्षे विशेष्यभूतं तावदस्मदादिज्ञानमात्रम्। एवञ्च अस्मदादिज्ञानमात्रविशेष्यकानित्य-त्वबुद्धिः कथं तद्भिन्नज्ञाननिष्ठत्व-बुद्धिं प्रतिबध्नीयात्?एकजातीये द्रव्ये बुद्ध्याख्ये कथं नित्यत्वम् अनित्यत्वञ्च सम्भवतः इति तु न प्रष्टव्यम्, एकजातीयद्रव्ये एव जलपरमाणौ नित्यत्वं जलद्व्यणुकादौ अनित्यत्वमिति स्वीकृतत्वात्। न च बुद्धिसामान्ये नित्यत्वमवधृतमिति कथं बुद्धिविशेषे नित्यत्वं गृहीतुं शक्यते इति वाच्यम्। बुद्धिमात्र इत्यनेन ईश्वरानीश्वरबुद्धिसामान्यन्तु वक्तुं शक्यते, विरोधात्। ईश्वरस्य सिद्धत्वे तत्र बुद्धिसामान्ये अनित्यत्वावधारणमिति वक्तुं न शक्यते। एवं व्यभिचारोऽपि दोषः। अस्मदादिबुद्धिमात्रपरत्वं यदि स्वीक्रियते, तदा भिन्नविषयकत्वेन प्रतिबन्धकत्वं नास्तीति उक्तमेव। परेषां मते नित्यज्ञाननाभ्युपगमात्विरोध इति।

अयं भावः- इतरेषां मते नित्यज्ञानानभ्युपगमात् नित्यं ज्ञानं नोभयसिद्धम् तथा च बुद्धित्वस्योभयसिद्धं यत् नित्यं तदवृत्तित्वनिश्चयेऽपि नैयायिकमात्रसिद्धनित्यज्ञानवृत्तित्वे विरोधाभावः। न च बुद्धित्वस्य नित्यवृत्तित्वसामान्याभावात् कथं नित्यविशेषवृत्तित्वग्रहः सम्भवति इति वाच्यम्, सामान्यभाववत्तानिश्चयस्य सामान्यघटितविशेषवत्ताबुद्धेः प्रतिबन्धकत्वात्। वह्निसामान्यभाववत्ता-निश्चयस्य वह्नित्वघटितमहानसी-यवह्निमत्ताबुद्धिं प्रति प्रतिबन्धकत्वस्य दृष्टत्वात् इति वाच्यम्, नित्यत्वस्य अनुगतस्य एकरूपस्याभावेन सामान्यभावनिश्चयासम्भवात् दृष्टान्तवैपरीत्यात् इति। न च बुद्धित्वं नित्यावृत्त्येवेति अवगतम्। अतः कथं तत्र नित्यवृत्तित्वं ग्रहीतुं शक्यते इति वाच्यम् उभयसिद्धनित्यावृत्तित्वावगमेऽपि अतिरिक्तनित्यवृत्तित्वाव-गतिवि-रोधाभावात्। उभयसिद्धनित्यं तावत्परमाण्वादिकमेव, ईश्वरस्तज्ज्ञानं वा नोभयसिद्धं न। उभयसिद्धपरमाण्वादि-नित्यपदार्थे बुद्धित्वस्यावृत्तित्वेऽपि उभयासिद्धेः नैयायिकमात्रसिद्धं नित्यपदार्थे भगवज्ज्ञाने नित्यत्वस्य वृत्तौ विरोधाभाव इत्यर्थः।न च बुद्धित्वमनित्यत्वव्याप्यमवगतम्, नानित्यत्वाभाववति ज्ञातुं शक्यते इति वाच्यम्। अनित्यत्वाभाववति यदि बुद्धित्वं ज्ञायते तर्हि व्याप्तिभङ्गस्स्यात्। अथवा एतादृशव्याप्तौ अवधृतायां सत्याम् अनित्यत्वाभाववति बुद्धित्वज्ञानमेव न प्रसरेति वाच्यम्। अनित्यत्वव्याप्यत्वमनित्यमात्रवृत्तित्वम्। तत्र दोषाभावात्।

# मोक्षस्वरूपम्*

सर्वोऽपि प्राणी सुखं वाञ्छति, नैकोऽपि दु:खम्। परं संसारोऽयं सुखदुखात्मक:। एतादृशे संसारानले संतप्ता अनाद्यविद्यामोमुह्यमाना: मानवा:, संसारसागरादस्मात् विमुक्तये शास्त्राणि जिज्ञासन्ते; यतो हि सर्वाणि शास्त्राणि मोक्षमेव लक्षीकृत्य प्रवृत्तानि। सोऽयं मोक्ष: धर्मादिचतुर्विधपुरुषार्थेषु परमपुरुषार्थ:। मोक्ष:, मुक्ति:, कैवल्यम्, अपवर्ग:, नि:श्रेयसं, निर्वाणम् इति पर्याय:। शब्दकल्पद्रूमे मोक्षशब्दस्य अर्थ: इत्थं वर्णित: -

मुक्ति:-मुच् + भावे(क्तिन्)। आत्यन्तिकदु:खनिवृत्ति: इति नैयायिका:। निसुखावाप्ति: इति वैदान्तिका:। शरीरेन्द्रियाभ्याम् आत्मनो मुक्तत्वं मुक्ति: इति भरत:। मोक्ष:, कैवल्यं, निर्वाणं, श्रेय:, नि:श्रेयसं, शाश्वतम्, अपवर्ग: इति अमर:। [1] अमरकोषे मुक्तिशब्दार्थ: निर्वाण:, अपवर्ग: इत्यादय: वर्णिता:। तद्यथा-

**मुक्ति: कैवल्यनिर्वाणश्रेयोनि:श्रेयामृतम्॥**[2]
**मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमति: स्त्रियाम्॥**[3]

मेदिनीकोषे स एवार्थ: प्रतिपादित:। तद्यथा-

**मतिर्मानेऽप्यवच्छेदे मुक्ति:र्मोक्षे च मोक्षणे।**
**मात्रादय: स्त्रियां मुक्त: प्राप्तमोक्षं च मोचिते॥**[4]

मुक्तिलक्षणं तद्भेदाश्च-निरतिशयं सुखं ब्रह्मैव **आनन्दो ब्रह्मेति व्यजानात्,**[5]**विज्ञानमानन्दं ब्रह्म**[6] इति श्रुते:। आनन्दात्मकब्रह्मावाप्ति: अथवा निरतिशयसुखप्राप्ति: मोक्ष:, शोकनिवृत्तिश्च **ब्रह्म वेद ब्रह्मैव भवति,**[7]**तरति शोकमात्मवित्**[8] इति श्रुते:। अत्र द्वाभ्यां अविद्यानिवृत्युपलक्षति आत्मा मोक्ष इत्युच्यते। **ब्रह्म वेद ब्रह्मैव भवति**[9] इति श्रुति: मोक्षस्यात्मरूपत्वं **तरति शोकं**[10] इति श्रुति: शोकसन्तरणात्मिकाविद्यानिवृत्तिरूपत्वं च प्रतिपादयति। कुत

* **शोधार्थी – श्रीनिगमानन्दपाणिग्राही**

[1] श.क.पृ.- ७८६
[2] अमर.धीवर्ग-६
[3] अमर.धीवर्ग-७
[4] मे.तान्तवर्ग-४५
[5] तै.उ.-३/६/१
[6] बृ.उ.-३/९/२२
[7] मु.उ.-३/२/९
[8] छा.उ.-७/१/३
[9] मु.उ.-३/२/९
[10] छा.उ.-७/१/३

एवमित्युक्तौ मोक्षस्य केवलात्मरूपत्वे बद्धमुक्तयोरविशेषः स्यात्। यतः बद्धमुक्तयोः स्वात्मस्वरूपं समानमेव। अतः शोकनिवृत्तिरपि वाच्या। केवलं शोकनिवृत्तिरूपत्वे अनित्यत्वापत्तिशङ्का, ब्रह्म वेद ब्रह्मैव भवति इति श्रुतिविरोधश्च। अत एव आत्मरूपत्वकथनम्। तथा च शोकनिवृत्त्युपलक्षिता-त्मस्वरूपमेव मोक्षः। एवं तर्हि मोक्षस्यात्मरूपत्वे तस्य सिद्धत्वात् कथं साध्यत्वम्? साध्यत्वाभावे कथं तत्साधने प्रवृत्तिर्युज्यते। अयमत्रभिसन्धिः- यद्यप्यात्मनो न साध्यता, कूटस्थनित्यत्वात्। एवमज्ञाननिवृत्तेरपि न साध्यता। तस्याः अधिष्ठानरूपत्वेन आत्मनिष्ठाविद्यानिवृत्तेः असाध्यात्मरूपत्वात्। अथापि मन्दानां तत्र साध्यत्वभ्रमेण साधने प्रवृत्तिः स्यादिति।

सशरीरावस्थायां जायमानस्य सर्वस्यापि सुखस्य दुःखसम्भिन्नत्वमेव। आत्मस्वरूपमेव मुक्तिः,तद्दुःखासम्भिन्नरूपम्। तदुक्तम्-

**यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।**
**अभिलाषोपनीतं च तत्सुखं स्व पदास्पदम्॥**[1]

यद्यपि राजराजपुत्रादीनां सुखातिशयभाक्त्वं दृश्यते लोके तथापि तादृक् सुखं न क्वचिदपि दुखासम्भिन्नं दृश्यते। अथ क्वचित् सद्यः दुःखाभावघटितसुखानुभवदर्शनेऽपि भाव्यवस्थाचिन्ताजनितं दुःखं सर्वत्र नियमेन वर्तत एव। स्वर्गसुखमपि एतन्नातिवर्तते। प्रतिदिनं विशरणशीलं शरीरम् तद्विचिन्तयतां तु भाविशरीरपातजन्यदुःखचिन्तनस्य सत्वात् तत्सुखं दुःखसम्भिन्नमेव। परमशरीरावस्थायामर्थात् मोक्षावस्थायां न दुखलेशस्यापि सम्भवः। दुःखानुभवस्य शरीराधीनत्वात्। **अशरीरं वाव सन्तं न प्रियाप्रियेस्पृशतः**[2]इति श्रुतेः मोक्षे अशरीरत्वम्। यद्यपि तस्यामवस्थायां प्रियस्पर्शोऽपि नास्तीत्युच्यते तथापि न कापि क्षतिः, कुत इति चेत् दुखसम्भिन्नसुखापेक्षया यत्र न दुःखलेशस्यापि सम्भवः तादृशसुखाभावस्याप्येष्टव्यत्वात्। वस्तुतोऽत्र प्रियशब्दसूतसुखस्य अन्तःकरणवृत्तिरूपत्वात् मोक्षेऽन्तःकरणाभावात् स जन्यसुखाभावविषयकः। मोक्षेऽजन्यानन्दस्वरूपस्य तु विद्यमानत्वमेव। यथा विषलेशसंसृष्टामृतापेक्षया वरममृताभावोऽपि। अशरीरावस्था एव मोक्षावस्था। **तमेवं विद्वानमृत इह भवति**[3] इति श्रुतौ मुक्त एवामृतशब्दाभिधेयः। मुक्तौ ह्यशरीरः। अशरीरस्यैवामृतत्वम्। सशरीरत्वे मरणस्य नियतत्वात्। भयं च मृत्युः। अभयस्थानं हि मोक्षः। भयहेत्वभावात्। **अभयं वै ब्रह्म भवति**[4] इति श्रुतेः। **भयहेतुर्द्वितीयाद्वै भयं भवति**[5] इति श्रुतेः। अत एव मोक्षे भयहेतोः द्वितीयस्याभावोऽभिधीयते। किं च यथा पञ्जरस्थाः शुकादयोऽपि काले स्वादिष्टमाहारं भक्षयन्तोऽपि अस्वतन्त्राः बन्धदुःखनिवृत्यर्थमेव मोक्षमिछन्ति, तदर्थमेव च प्रयत्नो दृश्यते, तद्वत् जीवस्यापि बन्धजनितदुःखनिवृत्तये यत्नो दृश्यते। मोक्षशब्दोऽप्यमुमेवार्थं सूचयति। मुचलृ मोक्षणे इत्यस्माद्धातोः निष्पन्नोऽयं शब्दः मोक्षणमर्थं ब्रवीति, अर्थात् मोक्षो हि मुक्तिः।

तथा च आत्यन्तिकदुःखनिवृत्तिः परमानन्दप्राप्तिश्च परमपुरुषार्थरूपा स एव मुक्तिः भवति। सा खलु ब्रह्मणः स्वरूपभूता स्थितिरस्ति। नास्त्यभिनवाप्राप्तिर्मोक्षः। इदमात्मनो निजं स्वरूपम्। आत्मस्वरूपावबोध एव मोक्षः। नास्ति अत्र अप्राप्तस्य प्राप्तिः, अपि तु प्राप्तस्यैव प्राप्तिरेव। अद्वैतवेदान्तिनः अस्मिन्विषये कथमपि स्वगृहाद् वियुक्तस्य राजकुमारस्य दृष्टान्तमुपस्थापयन्ति। व्याधस्य गृहे पोषितो राजकुमार आत्मानं राजपुत्रं न जानाति प्रत्युत स्व व्याधपुत्रं मनुते। यदा हि केनाप्यवबोधितोऽयं स्वं राजपुत्रत्वेन परिचिनोति, तदासौ स्वस्वरूपे प्रतिष्ठितो विराजते। राजकुमारस्य कृते राजकुमारत्वेनात्मीयं ज्ञानं नास्त्यपूर्वम् अपितु तत्केवलमज्ञानस्य निराकरणमात्रं भवति। इदानीमसौ ज्ञातवान्, अहं राजपुत्रोऽस्मि व्याधपुत्रो नास्मि। इत्थमेवाज्ञानावरणप्रभावेण जीवोऽपि आत्मानं ब्रह्मेति न जानाति, आवरणापगमे सति यथापूर्वं स्वमवगच्छति। अज्ञानवशात् स्वस्मिन्नारोपिताः कतृत्वभोक्तृत्वपरिच्छिन्नत्वादयो धर्मा अप्यपगता इति मन्यते।

तस्मात् वार्तिककारैः श्रीमत्सुरेश्वराचार्यैः उक्तम्-

**अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृता॥**[6]

सोऽयं मोक्षः नित्यरूपा, नास्ति तस्मिननित्यत्वदोषः उत्पाद्यादि चतुष्टयभिन्नः मोक्षः। यदि उत्पाद्यः मोक्षः स्यात् तर्हि मानसं-वाचिकं-कायिकं वा कर्मपेक्षते तथा च कर्मसाध्यमोक्षः स्यात् तेन तस्य अनित्यत्वदोषः। न च घटाद्युत्पाद्यं नित्यं दृष्टं लोके। तस्मात् न मोक्षः उत्पाद्यः नाऽपि विकार्यः। विकार्यत्वे हि तस्यानित्यत्वप्रसङ्गः, यत् यत् विकार्यं तत्सर्वमनित्यम् इति व्याप्तेः। न हि दध्यादि विकार्यं नित्यम्। नाऽपि आप्यः मोक्षः स्वात्मस्वरूपत्वात्। नापि संस्कार्यः मोक्षः येन व्यापारमपेक्षते संस्कारो हि संस्कार्यस्य गुणाधानेन स्यात् दोषापनयनेन वा न तावत् गुणाधानेन मोक्षस्य संस्कारत्वं सम्भवति। अनाधेयातिशयब्रह्मस्वरूपत्वात् मोक्षस्य नापि दोषापनयनेन मोक्षस्य संस्कार्यत्वं सम्पादयितुं शक्यते नित्य-शुद्ध-ब्रह्मस्वरूपत्वात् मोक्षस्य।

ननु यथा आदर्शे निर्घषणक्रियया संस्क्रियमाणे घर्षणत्वमभिव्यज्यते तथैव स्वात्मधर्मः एव सन् तिरोभूतः मोक्षः क्रियया आत्मनि संस्क्रियमाने अभिव्यज्यते इति चेत् न। नहि आत्मनि क्रियाश्रयत्वमुपपद्यते। यद्यात्म क्रियया विक्रियते तर्हि आत्मनः अनित्यत्वं प्रसज्येत। **अविकार्योऽयमुच्यत्**[7] इति गीतावचनविरोधः स्यात् तस्मात् नस्वाश्रयक्रियात्मनः सम्भवति।

ननु अन्याश्रया क्रियात्मनः भवेत् यथा देहाश्रयया स्नानादिकया क्रियया देही संस्क्रियमानो दृश्यते इति चेत्, न देहादिसंहतस्यैवाविद्यागृहितस्यात्मनः संस्क्रियमानत्वात् प्रत्यक्षं हि स्नानादेः देहसमवायत्वं तथा देहाश्रया तत् संहता एव कश्चित् अविद्यात्मत्वेन परिगृहितः संस्क्रियत इति। यथा च स्नानादिना अहं शुद्धः संस्कृतः इति यत्राविद्यागृहीतात्मनि बुद्धिः उत्पद्यते स संस्क्रियते स च देहेन संहत। तेनैव हि अहं कर्त्ता, अहं भोक्ता इत्यादि बुद्धिः उत्पद्यते। सैव तत् कर्मफलभोक्ता भवति। **साक्षिचेता केवल निर्गुणश्च**[8] इत्यादिभिः श्रुतिभिः अनाधेयातिशयतां

[1]सा.त.कौ.पृ.-७९
[2]छा.उ.-८/१२/१
[3]श्वे.उ.-३/८
[4]बृ.उ.-४/४/२५
[5]बृ.उ.
[6]न्या.म.पृ.-२९३
[7]श्री.भ.गी.-२/२५
[8]श्वे.उ.-६/११

नित्यशुद्धतां ब्रह्मण: उद्धोष्यते। ब्रह्मभावश्च मोक्ष:। तस्मात् न संस्कार्योऽपि मोक्ष:। तथा च उत्पाद्यादिचतुष्टयरहितत्वात् मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यते दर्शयितुम्। यद्धि क्रियासाध्यं तदनित्यम् नायं मोक्ष: क्रियासाध्य:। तस्मात् नित्योऽयं मोक्ष:।

सोऽयं मोक्ष इति नाम्ना प्रसिद्धा मुक्ति: द्विधा जीवन्मुक्ति: विदेहमुक्तिरिति। शरीरधारणं कुर्वन् ब्रह्मानन्दम् अनुभवति चेत् सा जीवन्मुक्ति:। देहपाताद् उर्ध्वं सैव ब्रह्मानुभूति: विदेहमुक्तिरिति शास्त्रमर्यादा। मुक्तिद्वयमपि समुद्धृतगीतावचने समसूची। नैनां प्राप्य विमुह्यतीति जीवन्मुक्ति:। स्थित्वास्यामन्तकालेऽपि इति विदेहमुक्ति:। **भूयश्चान्तेविश्वमायानिवृत्ति:**[1]**, आचार्यवान् पुरुषवेद तस्यतावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्यें** इति। **आत्मानं चेद्विजानीयाद् अयमस्मि इति पुरुष किमिच्छन् कस्य कामायशरीरमन्वसंज्वरेत्**[3] इत्येवंजातीयका: श्रुतयो जीवन्मुक्तिप्रतिपादिका इति द्रष्टव्या। एवं वेदान्ते मुक्ति: तद्भेदश्च प्रतिपादित:।

## रामानुजनये प्रकृतिविचार:[*]

**प्रकृते: स्वरूपम्**

रामानुजमते प्रकृतिस्तु सत्त्वरजस्तमोरूपगुणत्रयवती, नित्या, सा तु महदहंकारमन:पञ्चज्ञानेन्द्रियप-कर्मेन्द्रियपञ्चतन्मात्रपञ्चभूतमिलिता त्रयोविंशतितत्त्वात्मिका। इयमेव विचित्रसृष्टिकरत्वान्मायाशब्देन व्यपदिश्यते तथा ज्ञानविरोधित्वात् अविद्याशब्देन नित्यत्वात् चाक्षरशब्देन व्यपदिश्यते। इयमेव सर्वजगतो मूलप्रकृति:।[4] एषा सांख्यप्रकृतेर्भिन्ना परमात्मन: शक्त्यथैका नितरामतिरिक्ता वर्तते। शाङ्करमतवद् आचार्यो रामानुच: कथयति- प्रधानकारणत्वे प्रतिज्ञाविरोधो भवति। वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावत् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुद्ध्यते।[5] शङ्करवद् अन्यषां विपक्षिणां रामानुजेन खण्डनं कृतम्। रामानुजमतेऽपि ब्रह्मैव जगतो निमित्तकारणम् उपादानकारणञ्च शङ्का भवति- यत्तु एकस्य निमित्तत्वमुपादानत्वं च न सम्भवति, एककारकनिष्पाद्यत्वं च कार्यस्य, लोके तथा दर्शननियम:। अतोऽग्निना सिञ्चेदितिवद् वेदान्तवाक्यान्येकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवतीति।

समाधानं क्रियते- सकलेतरविलक्षणस्य परस्य ब्रह्मण: सर्वशक्ते: सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते। मृदादेश्चेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगादधिषठातु: कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसं-कल्पतया च तथा दर्शननियम:। अतो ब्रह्मैव जगतो

---

[1]श्वे.उ.-१/१०

[2]छा.उ.-६/१४/२

[3]बृ.उ.-४/४/१२

[*]**गवेषिका – शर्मिष्ठामिश्र:**

राष्ट्रियसंस्कृतसंस्थनम् पुरी, ओडिशा

[4]ब्र०स०प्र०भा०प०स०, पृ० ३०१

[5]श्रीभा०, १/१/९

निमित्तमुपादानञ्च।[1] इतश्च जगतो निमित्तमुपादनञ्च ब्रह्म, यस्माद् योनित्वेनाप्यभिधीयते 'कर्तारमीशं पुरुषं योनिम्' इति यद्भूतयोनिं परिपश्यन्ति धीरा इति च योनिशब्दश्चोपादानवचनमिति। 'यथोर्णनाभिः सृजते गृह्णते च' इति वाक्यशेषादवगम्यते।[2]

न्यायसिद्धाञ्जने प्रकृतिविषये कथितम्- सा च समत्रैगुण्या मूलप्रकृतिः। तस्यामपि मात्रया भेदमवलम्ब्याव्यक्ताक्षरविभक्ततमोरूपावस्थाचतुष्टयमामनन्ति। वेदान्तदेशिको विशिष्टाद्वैतवादिनो न्यायसुदर्शनकारस्य वरदनारायणभट्टारकस्य मतमुद्धरति- "द्विविधाः स्मृतिकाराः, केचिदव्यक्तकारणवादिनः, केचित्तमःकारणवादिनः। अव्यक्तस्यैव सूक्ष्मावस्थाभेदोऽक्षरं तमश्च, नातीव भेद इत्यव्यक्ते पर्यवस्यतामभिप्रायः, तमपि भदेमुरीकृत्य तमसि पर्यवस्यताम्। तस्मादुभयेषामविरोध इति। "[3]

श्रीनिवासाचार्यो यतीन्द्रमतदीपिकायामस्मिन् विषये कथयति- सत्त्वरजस्तमोरूपगुणत्रया-श्रयरूपा प्रकृतिः। सा नित्या अक्षराविद्यामायादिशब्दवाच्या च। तस्य भगवत्सङ्कल्पाधीनगुणवै-षम्यात् कार्योन्मुखावस्था अव्यक्तशब्देनोच्यते।[4]

सर्वदर्शनसंग्रहे माधवः कथयति- अचिच्छब्दवाच्यं दृश्यं जडं चगत्त्रिविधं भोग्यभोगोपकरणभोगायतनभेदात्।[5] अन्यत्रापि कथितम्- अचिद्वस्तूनां तु भोग्यभूतानामचेतनत्वमपुरुषार्थत्वं विकारास्प-दत्वमित्यादयः।[6]

लोकाचार्योऽचिद्विषये(प्रकृतिविषये) कथयति- अचिज्ज्ञानशून्यं विकारास्पदञ्च। इदं शुद्धसत्त्वं, मिश्रसत्त्वं, सत्त्वशून्यञ्चेति त्रिविधम्।

**शुद्धसत्त्वम्**

तत्र शुद्धसत्त्वं नाम रजस्तमोऽमिश्रकेवलसत्त्वरूपं नित्यं ज्ञानानन्दजनकम् कर्माप्रयोज्यकेवलभगवदिच्छया विमानगोपुरमण्डपप्रासादिरूपेण परिमत्, निरवधिकतेजोरूपम्, नित्यं मुक्तैरीश्वरेणापि च परिच्छेत्तुमशक्यमत्यद्भुतं किमपि वस्तु। शङ्का भवति- आत्मनो ज्ञानाच्चास्य भेदः कुतः? समाधाने कथ्यते- अहमित्याभानात् शरीराकारेण परिणामात्, विषय निरपेक्षतया स्वत एव भासमानत्वात्, शब्दस्पर्शाद्याश्रयत्वाच्च भिन्नत्वमभ्युपेयम्।

**मिश्रसत्त्वम्-**

मिश्रसत्त्वं नाम सत्त्वरजस्तमोरूपगुणत्रययुक्तः बद्धचेतनानां ज्ञानानन्दोयोऽस्ति रोधायकः, विपरीतज्ञानजनकः, नित्यः, ईश्वरस्य क्रीडापरिकरभूतः, प्रदेशभेदेन कालभेदेन च सदृशानां विसदृशानां विकाराणामुत्पादकः प्रकृतिरविद्यामायेत्यभिधीयमान; कश्चिद् अचिद्विशेषः। विकाराणां जनकत्वात् प्रकृतिरित्यभिधीयते, ज्ञानविरोधित्वादविद्येति निगद्यते, विचित्रसृष्टिकारकत्वान्मायेत्युच्यते।[7]

'मूलप्रकृतिरविकृतिः'[8] इत्यादिके प्रकृतिशब्द उपादानकारणवाचकोऽस्ति, भगवान् बादरायणोऽपि 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'[9] इति सूत्रे प्रकृतिशब्द उपादानकारणस्यार्थे प्रायुङ्क्तः।[10]

**सत्त्वशून्यम्**

सत्त्वशून्यं नाम कालः। इदञ्च प्रकृतिप्राकृतपरिणामहेतुभूतं कलाकाष्ठादिरूपेण परिणामार्हं नित्यमीश्वरस्य क्रीडापरिकरभूतं शरीरभूतञ्च।[11]

**मायावादस्य खण्डनम्**

मायावादस्य खण्डने रामानुजः कथयति-

मायाया अज्ञानस्य क्वोत्पत्तिः? जीवे ब्रह्मणि वा? माया जीवाश्रिता ब्रह्माश्रिता वेति सन्देहः। जीवो न कथमपि मायाया आधारो भवितुं शक्यते, तस्य स्वयं मायाजन्यत्वात्। ब्रह्मापि मायाधारो न भवितुं शक्नोति, तद्धि स्वयं ज्ञानस्वरूपमिति अज्ञानस्य न कथमपि तदाश्रयत्वम्। अयमाक्षेप आश्रयानुपपत्तिरुच्यते।

मायावादिनः कथयन्ति यत् अविद्या ब्रह्मस्वरूपं तिरोधत्ते एतच्च सर्वथा असङ्गतम्, ब्रह्मस्वरूपं हि प्रकाशात्मकं ज्ञानमात्रञ्चेति प्रकाशतिरोधानस्य कोऽर्थः? प्रकाशोत्पत्तेरवरोधो विद्यमानप्रकाशस्य विनाशनं वा? मायावादिनां मते ज्ञानस्य- यद्धि ब्रह्मणः स्वरूपम्- न कदाप्युत्पत्तिविनाशौ; तद्धि सर्वदैकरसं निर्विकारञ्च। यदि तिरोधानं प्रकाशनाशाभिप्रायकं तदा तु स्पष्टमेतद् यत् अविद्या ब्रह्मस्वरूपज्ञानं विनाशयतीप्यप्य-विचारसहम्। इत्थं मायावादे तिरधानानुपपत्तिरूपोऽयं द्वितीयो दोषः।

जगन्मात्रस्य वस्तुजातं भावरूपे अभावारूपे चेत्थं भागद्वयमेव विभक्तमिति माया किं भावरूपा अभावरूपा वेति? भावरूपाणि च वस्तूनि पारमार्थिकसत्तानि मायावादिनो हि माया पारमार्थिकसत्तात्मिकां न स्वीकुर्वन्ति। तेषां मते हि एकमात्रं ब्रह्मैव शुद्धम् निर्गुणम्, सत्यम् तदतिरिक्तं च सर्वमसत्यं मिथ्यात्मकं यदिच अविद्या न ब्रह्म अतिरिणक्ति तदा अविद्याया भ्रमोत्पादकदोषः ब्रह्मण्यप्यापतेत् इति तद्दोषस्यापि ब्रह्मस्वरूप-तया, ब्रह्मणश्च नित्यत्वेन तद्दोषजनितप्रपञ्चभ्रमस्यापि नित्यत्वेन जीवस्य मोक्षासम्भव इति स्वरूपानुपपत्ति-रूपस्तृतीयो दोषः।

---

[1]श्रीभा०, १/१/२३
[2]श्रीभा०, १/५/२८
[3]न्या०सि०, पृ० ६९
[4]य०म०दी०, पृ० ७२
[5]स०द०स०, पृ० १९१
[6]स०द०स०, पृ० १८६
[7]तत्त्वत्रय, पृ० १४०,१४१,१४७,१४८,१५१
[8]सांख्यकारिका, सं० ३
[9]ब्र०सू०, १/४/२३
[10]त०त्र०छा०तो०, पृ० १५२
[11]त०त्र०, पृ० १९०

माया अनिर्वचनीया उक्ता- न सा सत् नापि चासत्; नैतदनुभवगम्यम्। प्रत्येकस्य वस्तुन एकैव स्थितिः सम्भवति सत्यमेव तत्स्यात् मिथ्यैव वा तद् भवेत्, तदतिरिक्तश्च न कोऽपि पदार्थः कल्पयितुमपि शक्यते। अतो मायायामनिर्वचनीयानुपपत्तिः।

'अहमज्ञ' एषोऽनुभवो न भावरूपस्य कस्यचिद् वस्तुनः सूचकः प्रत्युत आत्मनो ज्ञानस्य प्रागभावस्यैव ब्रह्म हि भावरूपमज्ञानं न कदाप्यनुभवति। अनुमानमपि न किमपि भावरूपज्ञानं साधयति। श्रुतिष्वपि न कुत्रापि शाङ्करमायावादः श्वेताश्वतरोपनिषद्यपि मायाशब्दः प्रकृत्यर्थे प्रयुक्तः। मायाशब्दश्च विचित्रसृष्टिकर्त्रर्थक इति विचित्रसृष्टिकर्त्रीत्वेन प्रकृतिरपि माया उच्यते। गीतायां पुराणेष्वपि न च कुत्रापि मायावादः सिद्ध्यति। अतस्तत्र प्रमाणानुपपत्तिः।

निर्विशेषनिर्गुणब्रह्मणो ज्ञानेन न कदाप्यविद्याया निवृत्तिः। श्रुतेश्चायं सिद्धान्तो यत् ब्रह्म सकलोपादेगुण-विशिष्टमिति सविशेषब्रह्मण उपासनात्मकज्ञानेनैव मोक्षः। 'तत्त्वमसि' इत्यादि महावाक्यानामयमभिप्रायो यत् तच्छब्दार्थकं सर्वज्ञसत्संकल्पजगत्कारणं, त्वशब्दार्थकं चिदचिद्विशिष्टजीवशरीरात्मकं चेत्येकमेव ब्रह्म प्रकार-द्वयेन वर्तते। समस्तं चैतज्जगत् ईश्वरस्य शरीरम् इतीश्वरः, सर्वान्तर्यामी। यतो हीश्वरः सविशेष इति निर्विशेषेश्वरज्ञानं न कथमपि मोक्षसाधकम्।निर्विशेषनीरूपसत्तायाः न कथमपि परिज्ञानमिति, तदभावे मोक्षस्यापि सर्वथा असम्भवता। एषा च निवर्तकानुपपत्तिरुच्यते।

मायावादिनां मते ज्ञाता, ज्ञानं ज्ञेयञ्चेति सर्वमेव मिथ्येति ज्ञानस्यापि मिथ्यात्वे मिथ्याज्ञानेन कथं मायानिवृत्तेः सम्भवति? इदञ्च मिथ्याज्ञानं केनाप्यन्येन ज्ञाने दूरीभवितव्यं तदपि चान्येनेत्यनवस्था। एषा च निवृत्त्यनुपपत्तिः। [1]

वेदार्थसंग्रहेऽपि रामानुजः कथयति- अपि च आच्छादिकाऽविद्या श्रुतिभिश्चैक्योपदेशबलाच्च ब्रह्मस्वरूपतिरोधानहेतुदोषरूपाऽऽश्रीयते। तस्याश्च मिथ्यारूपत्वेन प्रपञ्चवत् स्वदर्शनमूलदोषा-पेक्षत्वान्न सा मिथ्यादर्शनमूलदोषः स्यादिति ब्रह्मैव स्वदर्शनमूलं स्यात्। तस्याश्चानादित्वेऽपि मिथ्यारूपत्वादेव ब्रह्मदृश्यत्वेनैवानादित्वात्तद्दर्शनमूलपारमार्थिकदोषानभ्युपगमाच्च ब्रह्मैव तद्दर्शनमूलं स्यात्, तस्य नित्यत्वादनिर्मोक्ष एव स्यात्। [2]

**अविद्याश्रयत्वे विषयत्वे च अद्वैतस्य खण्डनम्**

अविद्याश्रयत्वविषयत्वे रामानुजः कथयति। न जीवब्रह्मणी अविद्याश्रयत्वरूपे स्तः। जीवे नाविद्याश्रयत्वं सिद्ध्यति यतोहि सः स्वयमेवाविद्याकल्पितोऽस्ति ज्ञानस्वरूपस्य च ब्रह्मणो विरोधादेव नाज्ञानश्रयत्वम्। रामानुजमते अविद्या न ब्रह्माश्रिता न जीवाश्रिता च। [3]

## अद्वैतवेदान्ते ब्रह्मणः लक्षणम्*

**भूमिका-**

आचार्यशङ्करमते मूलभूतचैतन्यतत्त्वमेकमेव। अखिलं जगत् तेन एव एकेन चैतन्येन व्याप्तमस्ति। तस्य निर्विकल्पस्य, निरुपाधिकस्य, निर्विकारस्य, व्यापकस्य चैतन्यस्य च नाम ब्रह्म। ब्रह्म एव केवलम् एतादृशं तत्त्वं, यस्य चैतन्यं न गुणो अपि तु स्वभावोऽस्ति। चैतन्यस्य कश्चिद् विस्तारो न भवति अतो ब्रह्म चैतन्यं वा अनन्तं कथ्यते। आचार्यशङ्करानुसारं ब्रह्म एकं सर्वव्यापकं तत्त्वमस्ति यत् जगतः प्रत्येकस्मिन्अणौ व्याप्तम् अस्ति।

शाङ्करवेदान्तस्य मूलाधार उपनिषद् साहित्यमस्ति। ब्रह्मज्ञानसम्बन्धे कथयितुं शक्यते यत् स्वयं शङ्करं उपनिषदः आप्तवाक्यरूपे अमन्यत। स स्पष्टमकथयत् यत् परमात्मा ब्रह्म वा केवलं वेदान्तेन(अर्थात् उपनिषद्भिः) ज्ञातुं शक्यते। [4] श्रुतिरेव ब्रह्मणः स्रोतः। [1] 'ब्रह्म' शब्दस्य उत्पत्तिः संस्कृतस्य

[1]श्रीभा०, १/१/१

[2]वे०स०, पृ० ५३

[3]श्रीभा०- १/१/१

*गवेषिका – मिता अधिकारी
Mphil research scholar
वर्धमानविश्वविद्यालयः, पश्चिमबङ्गः

[4]ब्र०सू०शा०भा०उ०

'बृंह' इति धातुना अभवत् यस्य अभिप्रायो भवति- वृद्धिरथवा निरतिशयं महत्।[2] बृंह् धातुना अर्थानुगमेन नित्यत्वम्, शुद्धत्वमादयोऽर्थाः प्रतीयन्ते।[3] वस्तुतः शाङ्करवेदान्ते ब्रह्म परमार्थसत्यस्वरूपमस्ति।[4]

**ब्रह्मणो लक्षणम्**

किञ्चिदपि वस्तु तस्य लक्षणैरेव ज्ञायते। असाधारणधर्मवचनं लक्षणं भवति।[5] अद्वैतवेदान्ते ब्रह्मणो लक्षणद्वयं कृतमस्ति। एकम्-स्वरूपलक्षणं द्वितीयञ्च तटस्थलक्षणम्।[6]

स्वरूपलक्षणम्

'स्वरूपं सत् व्यावर्तकं स्वरूपलक्षणम्।'[7] यल्लक्षणं स्वलक्ष्यस्य स्वरूपं भवत् स्वलक्ष्यम् अन्येभ्यो अलक्ष्येभ्यः पृथक् करोति तल्लक्षणं स्वरूपलक्षणं भवति। 'सत्यं ज्ञानमनन्तं ब्रह्म इति लक्षणं ब्रह्मणः स्वरूपलक्षणम्'[8] इदं लक्षणं ब्रह्मणा एव सम्बद्धं न केनचिदन्येन यथा-

**सत्यम्-** इदं चराचरं प्रपञ्चात्कं दृश्यमानं जगत् सापेक्षरूपे सदस्ति। जगतः कश्चिदपि पदार्थो निरपेक्षरूपे सद् नास्ति। वस्तूनां प्रतीतिमात्रं भवति। अस्य परिवर्तनशीलस्य जगत आधाररूपे एकैव निरपेक्षयथार्थसत्तास्ति, यस्या अस्तित्वं निश्चितमसन्दिग्धञ्चास्ति। बृहदारण्यकोपनिषदि कथितम्- सत्यं ब्रह्म।[9] छान्दोग्योपनिषदि अपि तद् ब्रह्मैव सत् कथितम्।[10]

आचार्यशङ्करः तैत्तिरीयोपनिषद्भाष्ये 'सत्' इत्यस्य शब्दस्य व्याख्यां करोति- यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तदेव सत्यम्।[11] यस्मिन् रूपे यः पदार्थो निश्चितो भवति अथवा बुद्धेर्विषयो भवति, यदि सः तद्रूपं कदापि न जहाति, तस्य रूपं कदापि अन्यथा न भवति कदापि न व्यभिचरति तर्हि सः पदार्थः सत् कथ्यते यस्य च व्यभिचारो भवति स सत् न भवितुमर्हति। स तु मिथ्या।[12] पञ्चदश्यां ब्रह्म सदिति कथयन् विद्यारण्यस्वामी एवं व्याख्याम् अकरोत्- इदं प्रतीयमानं जगत् सृष्टेः पूर्वमेकमेव अद्वितीयसद्रूपं कारमासीत् नैतस्य किञ्चिद् नाम। तत्तु एकमद्वितीयं सदस्ति। अतः तत् स्वगतेभ्यो सजातीयेभ्यो विजातीयेभ्यश्च परमस्ति।[13]

**ज्ञानम्-** ज्ञानमपि ब्रह्मणः स्वरूपलक्षणान्तर्गतम्। अतोऽद्वैतवेदान्ते ब्रह्म ज्ञानस्वरूपम् अथवा चैतन्यस्वरूपं कथितमस्ति। आचार्यशङ्कर तैत्तिरीयोपनिषदो भाष्ये कथयति- ज्ञानं ज्ञप्तिः अर्थात् अवबोधं-ज्ञानम्। ज्ञानशब्दो भाववाचकः। सत्येन, अनन्ततया ब्रह्म लक्षितत्वात् तत् ज्ञानस्य कर्ता न भवितुमर्हति यतोहि ज्ञानकर्तृत्वं स्वीकरणेन ब्रह्मणः सत्यता अनन्तता च न सम्भवे। ज्ञानकर्तृरूपेण विकारत्वात् ब्रह्म सत्यम् अनन्तञ्च कथं भवितुं शक्नोति? यतोहि अनन्तं तु तद् भवति यदविभाज्यं भवति। ज्ञानकर्तृभूतत्वात् ब्रह्म ज्ञेयात् ज्ञानाच्च विभक्तं भविष्यति अतः तदनन्तं न भविष्यति। अतः ब्रह्म ज्ञानस्वरूपमस्ति। ज्ञानं ब्रह्मणो लक्षणम्।[14] ऐतरेयोपनिषदि अपि कथितम्- प्रज्ञानं ब्रह्म।[15]

**अनन्तम्-** ब्रह्म अनन्तस्वरूपमस्ति। विवेकचूडामणिमध्ये ब्रह्म सत्, अद्वितीयम्, शुद्धविज्ञानघनम्, निर्मलम्, शान्तम्, अन्तरहितम्, अक्रियम् अभेदम्, नित्यम्, प्रमाणादेरविषयः, अनन्तञ्च कथ्यते।[16] आचार्यशङ्करमते अनन्तता त्रिधा भवति- देशेन, कालेन वस्तुना च। व्यापकत्वात् ब्रह्मणि देशगतपरिच्छेदो नास्ति। नित्यत्वात् कालगतपरिच्छेदो नास्ति तथा च सर्वात्मत्वात् वस्तुगतपरिच्छेदो नास्ति। अतः ब्रह्मणि त्रिधा एव अनन्ततास्ति।[17]

आचार्यशङ्करो अपरोक्षानुभूतिनामके ग्रन्थे 'ब्रह्म सच्चिदानन्दम्'[18] इति उक्तवान् वस्तुतः इदं लक्षणमपि स्वरूपं लक्षणमस्ति पूर्वोक्तात् लक्षणात् नात्र किञ्चिद् वैभिन्नम् इत्थण् आचार्यः शङ्करः अन्ये च अद्वैतवादिन आचार्या स्वीकुर्वन्ति यद् ब्रह्म अखण्डम् अद्वितीयम्, निर्विशेषम्, निर्गुणम्, विशुद्धम्, चैतन्यं तत्त्वमस्ति। स्वरूपत इदमेव सत्यमस्ति। अवशिष्टं सर्वं मिथ्या ब्रह्मणश्च विवर्तः। समस्तं वैविध्यमुपाधिज्ञानस्य कौतुकं मात्रम्। वाण्या विकारः। छान्दोग्योपनिषदि उक्तमस्ति- यथा मृत्पिण्डज्ञानेन सर्वेषां मृण्मयपदार्थानां ज्ञानं भवति यतोहि घटपटादयः केवलं नामरूपाः सत्यं तु केवलं मृत्तिका। यथा एकसुवर्णज्ञानेन सर्वेषां सुवर्णमयपदार्थानां ज्ञानं भवति यतोहि आभूषणं तु नाममात्रेण सत्यं तु सुवर्णमेव तथैव नामरूपात्मकं जगत् तु वाण्याः परिश्रमः, ब्रह्मैव एकमात्रं सत्य सर्वेषु च नामरूपेषु अनुस्यूतमस्ति।[19] एतदेव ब्रह्मणः पारमार्थिकं स्वरूपलक्षणम्।

---

[1]ब्र०सू०शा०भा०उ०, २/१/२७
[2]निरतिश भूमाख्यं बृहत्वाद् ब्रह्मेति विद्धि। केन०उप०शा०भा०, १/५
[3]ब्र०सू०शा०भा०, १/१/१
[4]परमार्थं सत्यं ब्रह्म। तै०उप०, शा०भा० २/६
[5]तर्क०सं०, पृ० २
[6]ब्र०सू०शा०भा०, स०दी०, पृ० ४२
[7]तै०उप०शा०भा० २/१/१
[8]सत्यं ज्ञानमनन्तं ब्रह्म विशुद्धं परं स्वतः सिद्धम्। विचू०, श्लो० २२७
[9]बृ०उप०, ५/४/१
[10]एकमेवाद्वितीयम्। छा०उप०, ६/२/१
[11]तै०उप०शा०भा०, २/१
[12]तै०उप०शा०भा०, २/१
[13]इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम्।
सदेवाऽऽसीन्नामरूपे नास्तामित्यारुणेर्वचः॥ पञ्च०द०, २/१९
[14]तै०उप०शा०भा०, २/१
[15]ऐ०उप०, ५/३
[16]वि०चू०, श्लो० २३९-२४२
[17]तै०उप०शा०भा०, २/१
[18]अप०अनु०, श्लो० २४
[19]छा०उप०, ६/१४

**तटस्थलक्षणम्**

"कादाचित्कत्वे सति व्यावर्तकं तटस्थलक्षणम्"[1] यल्लक्षणं स्वलक्ष्ये कदाचिद् भूत्वा निजलक्ष्यम् अन्येभ्यो अलक्ष्येभ्यः पृथक् बोधयति तत् तटस्थलक्षणम्। अस्य जगत उत्पत्तिस्थितिलयानां कारणं ब्रह्म इति ब्रह्मणः तटस्थलक्षणम्[2] 'यतो वा इमानि भूतानि जायन्ते'[3] इति श्रुतिरपि ब्रह्मणः तटस्थलक्षणम्। वेदान्तपरिभाषाकारो धर्मराजाध्वरीन्द्रः कथयति यत् सम्पूर्णे लक्ष्ये न स्थीयमानमपि लक्ष्यस्य एकस्मिन् देशे भवति सार्धमेव अन्येभ्यः पदार्थेभ्यः व्यावर्तकमपि भवति तदेव तटस्थलक्षणम्। [4] यथा छत्रचंवरादयो राज्ञः तटस्थलक्षणानि इमानि न सर्वदा(प्रतिक्षणं) राज्ञा सम्बद्धानि भवन्ति राज्ञः पृथक् सन्त्यपि राजानं लक्षयन्ति। यथा गन्धवत्वं पृथिव्याः तटस्थलक्षणम्। महाप्रलये परमाणुषु तथोत्पत्तिकालावच्छेदेन घटादिषु गन्धो नास्ति।[5] वस्तुनः स्वरूपाद् भिन्नत्वादपि वस्तुनो बोधकारकं तटस्थलक्षणं भवति। अस्य संसारस्योत्पत्तेः स्थितेः लयस्य च यत् कारणत्वं तद् ब्रह्मणः स्वरूपलक्षणं न कथयितुं शक्यते अपि तु तटस्थलक्षणम्। यद्यपि इदं लक्षणं ब्रह्मणः स्वरूपं साक्षान्न संकेतयति तथापि प्रकारान्तरेण तज्ज्ञापयति।

**ब्रह्मणः सत्ता**

आचार्यशङ्करो मनुते- अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसा अपि अचिन्त्यरचनारूपकस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद् भवति तद् ब्रह्म। [6]

**उपसंहारः-**

'उपदेशसाहस्री' मध्ये ब्रह्मणः सत्तां स्वीकुर्वन् शङ्कराचार्यः कथयति- यदि कस्यचिद् पदार्थस्य प्रत्यक्षो न भवति तर्हि नैतद् मन्तव्यम् यत् तस्य पदार्थस्याभावः। येन सतो अथवा असतः कल्पना अभवत् तस्याः कल्पनाया अधिष्ठानभूतं तद् अद्वयम् ब्रह्म एव सदेव। [7] अनेन भावस्य अभावस्य च साक्षिभूतत्वाद् ब्रह्म शून्यरूपं न कथयितुं शक्यते। [8] येन अभावो ज्ञायते तद् सदेव भवेत् अन्यथा लोके भावस्य अभावस्य च ज्ञानं न भविष्यति न चेदमिष्टम्। [9] आचार्यशङ्करो यस्य ब्रह्मणः प्रतिपादनमकरोत् तत् तर्कप्रतिपाद्यं न भूत्वा अनुभवगम्यमस्ति। [10] ब्रह्म वस्तुतः प्रसिद्धमेव। ब्रह्मणः सम्बन्धे तर्कोऽयं न समुचितो यत् ब्रह्म प्रसिद्धमस्ति चेत् तत्सम्बन्धे जिज्ञासा किमर्थम्? अप्रसिद्धं चेत् तदापि तस्य जिज्ञासाया अवसरो न प्राप्यते। समाधाने कथयति आचार्यशङ्करः प्रसिद्धस्य ब्रह्मणो जिज्ञासा तदा भवति यदा तन्नानुभूयते। अतो ब्रह्मानुभवात् पूर्वमेव ब्रह्मसम्बन्धे जिज्ञासावसरो अन्यथा नास्ति अनेन ब्रह्मप्रसिद्ध्यां न काचित् बाधा। आत्मस्वरूपानुभव एव ब्रह्मास्तित्वे प्रबलं प्रमाणम्। [11]

**केवलाद्वैतनये ब्रह्मस्वरूपविमर्शः**[*]

---

[1] वे.प.
[2] ब्र०सू०, १/१/३
[3] तै०उप०, ३/१/१
[4] वे०प०. पृ० १५९
[5] आ०त०मी०, पृ० ५३
[6] जन्माद्यस्य यतः। ब्र०सू०शा०भा०, १/१/२
[7] उप०सा०, १/१९/१४
[8] उप०सा०, १/१६/३१
[9] उप०सा०, १/१६/३२
[10] उप०सा०, १/१८/२०५
[11] उप०सा०, १/१७/४०

[*] **गवेषिका – जया मालिक**
**Mphil research scholar**

**भूमिका-**

ब्रह्मणः स्वरूपम् आचार्येण द्विधा विभक्तं कृतम् एकं निर्गुणब्रह्म द्वितीयञ्च सगुणब्रह्म। निर्गुणं ब्रह्म अथवा परब्रह्म- आचार्यशङ्करो 'विवेकचूडामणि' नामके ग्रन्थे परब्रह्मणः स्वरूपं निरूपयति- परं ब्रह्म सद् अद्वितीयम्, शुद्धम्, विज्ञानघनम्, निर्मलम्, शान्तम्, आद्यन्तरहितं सदैवानन्दस्वरूपञ्चास्ति। तत् समस्तेभ्यो मायिकभेदेभ्यो भिन्नमस्ति। तन्नित्यसुखस्वरूपम् कलारहितम्, प्रमाणादेविषयो नास्ति तच्च किञ्चिदरूपम्, अव्यक्तम्, अनाम, अक्षयञ्च तेजोऽस्ति यत् स्वयं प्रकाशते। परमतत्त्वं ज्ञातृज्ञानज्ञेयानां त्रिपुट्याः परम् अनन्तम्, निर्विकल्पम्, केवलम्, अखण्डं, चैतन्यमात्रमस्ति। तद् हानोपादानयोरयोग्यम्, वाङ्मनसोरविषयमथवा अप्रमेयमस्ति।[1] आचार्यशङ्करानुसारं निर्गुणं ब्रह्म, परमार्थसत्यम्[2], परमार्थतत्त्वम्[3], भूमादिकं[4] कथ्यते। तत् निष्कलम्, निष्क्रियम्, शान्तम्, दोषरहितञ्चास्ति।[5] तत् नित्यम्, कूटस्थम्[6], एकमेव[7], भेदरहितम्[8], पूर्णतः निजस्वरूपावस्थितम्[9], गुणातीतम्[10], निर्विकारमस्ति।[11] तस्मिन् देशः कालश्च न परिकल्प्येते।[12] तत् पापपुण्ययोः परं कार्यकारणाभ्यां रहितमस्ति।[13]

तत् निर्विशेषत्वादनिर्वचनीयम् उपाधिभेदेभ्यश्च रहितम्[14], तथापि अयमभिप्रायो नास्ति यत् ब्रह्म नास्ति इति। ब्रह्मणि कस्यचिद् गुणस्यास्वीकृतिः तस्य ब्रह्म अस्तित्वस्याथवा सतोऽस्वीकृतिर्नास्ति। वस्तुतो यदपि दृश्यते तद् सर्वं तद् सर्वं ब्रह्मणा एवास्तित्वम्। तत् सर्वदा स्वतन्त्रम् अस्तित्ववदस्ति अतः तदेव केवलं सत्। तत् समस्तदृश्यस्य जगतो मूलं स्रोतोऽथवाश्रयमस्ति।[15] तस्य अस्तित्वमेव सर्वेषु वस्तुषु समानरूपेण प्रकाशते। तदस्माकं सर्वव्याप्यात्मा।[16] आचार्यशङ्करः कथयति- "सर्वो हि आत्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मास्तित्व प्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्म"[17] आचार्यशङ्करानुसारं परब्रह्म अथवा निर्गुणब्रह्म विशेषधर्मैर्गुणैश्च न व्याख्यायितुं शक्यते। ब्रह्म समस्तविशेषणेभ्यो गुणेभ्यश्च परमस्ति अतः तदनिर्वचनीयम्। वचनीयता तु तदैव सम्भवा यदा ब्रह्म विशेषणैर्गुणैश्च युक्तं भवेत्। यो ब्रह्म गुणाश्रयरूपे मनुते, स ब्रह्म न जानाति।[18] श्रुतयो 'नेहनानास्ति किञ्चन', 'नेति नेति' चेति निर्गुणब्रह्म उपदिशन्ति। ब्रह्म सम्पूर्णविशेषधर्मेभ्यो रहितम्।[19] अतः तद् निर्वक्तुं न शक्यते। आचार्यशङ्करो मनुते यत् प्रत्येकः शब्दो यः कस्यचिद् वस्तुनो निर्वचनाय प्रयुज्यते तस्य शब्दस्य तस्य वस्तुनश्च जातिगुणकर्मसम्बन्धानां कयाचिद् विशेषवृत्त्या साहचर्यं भवति किन्तु न कयाचिद् जात्या सम्बद्धं, न कयाचिद् विशेषगणनया गण्यते। तद् निर्गुणं कर्महीनञ्च अतः तस्य निर्वचनं कर्तुं भवितुं शक्यते।[20]

निर्गुणब्रह्मप्रतिपादनत्वादयं प्रश्नो भवति यत् यदा ब्रह्म निर्गुणमस्ति, सर्वेभ्यः प्रमाणेभ्योऽगम्यमस्त, निजवास्तिविकस्वरूपे अज्ञेयम्, अचिन्त्यम् अग्राह्यञ्चास्ति[21] तर्हि तस्मिन् विषये जिज्ञासा किमर्थं भवेत्? जिज्ञासाञ्च विना शास्त्रादयो निरर्थका भविष्यन्ति।

आचार्यशङ्कर उत्तरे कथयति- अज्ञाननिवृत्यै प्रपञ्चरहितस्य निर्विशेषब्रह्मणो व्याख्या अध्यारोपेण अपवादेन वा भवति। मिथ्याभूतोपाधिकृतधर्माणां निर्विशेषे ब्रह्मणि कल्पना[22] ब्रह्म ज्ञानस्वरूपम् अथवा चेतनस्वरूपमस्ति। तत् स्वस्मिन् स्वयं प्रकाशे अतः तत् सर्वप्रकाशकम् इति उपाधिना युक्तमस्ति।[23]

आचार्यशङ्करो निर्गुणब्रह्मण उल्लेखं स्पष्टेषु शब्देषु कृतवान्- इदं तु पारमार्थिकं, कूटस्थनित्यं, व्योमवत्सर्वव्यापि, सर्वक्रियाररहितं, नित्यतृप्तं, निरावयवं स्वयंज्योतिस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रये च नोपावर्तेते।[24]

सगुणब्रह्म अथवा अपरब्रह्म- अद्वैतमते निर्गुणेन ब्रह्मणा अस्य चराचरानुभाविकजगतः व्याख्या सम्भवानासीत् तथा च सांख्यस्य मूलतत्त्वात् अचेतनप्रकृतेर्जगतो व्याख्या सम्यग् नासीत्। परमाणुशून्येन अथवा असता कारणेनापि जगतः सम्बन्धस्याऽपि व्याख्या, समीचीना नासीत्। अत

---

**वर्धमानविश्वविद्यालयः, पश्चिमबङ्गः**

[1]वि०चू०, श्लो०, २३९-२४२
[2]छा०उप०, ३/१४/२
[3]परमार्थ तत्त्वं ब्रह्म श्री०भ०गी०शा०भा०, २/५९
[4]छा०उप०शा०भा०, ७/२३, के०उप०शा०भा०, १/५
[5]श्वे०उप०शा०भा०, ६/१९
[6]ब्र०सू०शा०भा०, १/३/१९
[7]तै०उप०शा०भा०, २/६, ई०उप०शा०भा०, म० ४
[8]ब्र०सू०शा०भा० ४/३/१४
[9]ई०उप०शा०भा० ४, श्री०भ०गी०शा०भा०, २/१७
[10]मु०उप०शा०भा०, १/१/६
[11]बृ०उप०शा०भा०, ३/८/८
[12]बृ०उप०शा०भा०, ४/३/१४
[13]क०उप०शा०भा०, १/२/१४
[14]ब्र०सू०शा०भा०, ४/३/१४, ३/२/१६, ३/१/११
[15]छा०उप०शा०भा०, ६/८/४
[16]ऐत०उप०शा०भा०, २/१
[17]ब्र०सू०शा०भा०, १/१/१
[18]के०उप०, २/३
[19]ब्र०सू०शा०भा०, ३/२/२३
[20]श्री०भ०गी०शा०भा०, १३/१२
[21]वि०चू०, श्लो० २४०, के०उप०शा०भा०, १/३/६,८, श्री०भ०गी०भा०शा०, २/२५, ब्र०सू०शा०भा०, २/१/६,११
[22]श्री०भ०गी०शा०भा०, १३/१३
[23]बृ०उप०शा०भा०, ४/३/७, श्री०भ०गी०भा०, ७/१०
[24]ब्र०सू०शा०भा०, १/१/४

आचार्यशङ्करस्य कृते इयमेका तार्किकानिवार्यतासीत् यत् सः तद् ब्रह्म सगुणरूपेऽपि स्वीकुर्यात्। आचार्यशङ्करः कथयति- अस्मिन् संसारे कश्चिदपिजडपदार्थः कस्यचिद् चेतनप्राणिनः प्रेरणां विना स्वत एव एतादृशं पदार्थ न रचयितुं शक्नोति यो जगति कल्याणकारीभवेत्, उदाहरणार्थं भवनानि उच्चप्रसादाः सौन्दर्यप्रसाधनस्य वस्तूनि आदीनि स्वत उत्पन्नानि न सन्ति अपितु कैश्चिद् बुद्धियुतकलाकारैरेव निर्मितानि भव न्ति। मृदपि भिन्नानां भिन्नानां घटादीनां आकृतीः तदैव गृह्णाति यदा तासां सञ्चलनं बुद्धियुक्तचेतनकुम्भकारेण भवति। तदिव इदं जगत् केनापि चेतनेन निमितमस्ति। सांख्यस्य प्रकृतिनामकमेचतनं तत्त्वमेतस्य कारणं न भवितुमर्हति।[1] अपितु एतस्य कारणं एकेन महता चेतनेन तत्त्वेनैव भवितव्यम्। तदेव ईश्वरः। ईश्वरोऽद्वैतवेदान्ते जगतो नियन्तृरूपे मायाशक्त्या युक्तं ब्रह्म एव। अत ईश्वरः ब्रह्मैव परन्तु मायोपाधिकमस्ति। इदमेव सगुणं ब्रह्म।

विशुद्धानाम् अथवा निरतिशयानाम् उपाधीनां संयोगेन परब्रह्म अपरब्रह्म भवति। परब्रह्म यदव्यक्तमस्ति ततः व्यक्तजगतादेर्व्याख्या असम्भवत्वाद् अपरब्रह्मण आवश्यकता भवति। पुनः अपरब्रह्मणः सम्प्रत्ययस्य व्यावहारिकं महत्त्वमपि अस्ति। मनशुद्ध्यादिकस्य कृते सगुणोपासना सहायिकी अस्ति। शङ्कराचा-र्योऽध्यात्मयात्रायां सगुणब्रह्मण उपासनासिद्धान्तं स्वीकरोति किन्तु अद्वैतवादे ब्रह्म मूलतो निर्गुणं निर्विशेषमेव मन्यते। ईश्वरो भक्त्या विषयोऽस्ति किन्तु निरपेक्षं ब्रह्म न।[2] आचार्यशङ्करो मनुते सगुणं ब्रह्म समग्रसंसारस्य स्वामी कर्मफलदाता चास्ति। तत् सर्वज्ञम्[3], सर्वशक्तिमत्, समग्रसंसारस्य उद्भावकम्, पालकम्, प्रलयकारकञ्चास्ति।[4] तस्य ज्ञानं सर्वबाधाहीनम्, सीमामुक्तमस्ति। अतो ज्ञानं प्राप्तुं किञ्चिदिन्द्रियम् अथवा कार्यकर्तुं किञ्चित् शरीरं नापेक्षते।[5] सगुणं ब्रह्म स्वरूपम् अविनश्यत् सृष्टिम् उत्पादयति अतः तदक्षरं कथ्यते।[6] सर्वेषां फलानां कारणत्वात् तस्मिन् सर्वशक्तिमत्ता निहितास्ति।[7] शङ्कराचार्यो ब्रह्मण उभयोः स्वरूपयोर्विषये भ्रमनिवारणाय सार्थकं प्रयत्नम् अकरोत् तथापि शङ्करस्याभिप्रायोऽयं नास्ति यत् वयं ब्रह्मणः भिन्नाः भिन्नाः सत्ताः स्वीकुर्याम्। ब्रह्म केवलमेकं यस्य वर्णनम् आचार्यशङ्करेण द्विधाकृतम् एकस्मिन् रूपे तदुपाधिभिर्विभूषितम् अस्माकम् आराध्यदेवश्च द्वितीये रूपे तत् सर्वेभ्य उपाधिभ्यः परम् अज्ञेयञ्चास्ति।[8]

वस्तुतोऽपरस्य अथवा सगुणब्रह्मणः सम्प्रत्ययस्य तावती एव आवश्यकतास्ति यावती निर्गुणब्रह्मणः। यतोहि सगुणब्रह्मणः कल्पनां विना जगत् न व्याख्यायितुं शक्यते। इत्थं पारमार्थिकदृष्ट्या मात्रैकस्य निर्गुणब्रह्मणः सत्तां स्वीकुर्वन् शङ्कराचार्यो व्यावहारिकदृष्ट्या सगुणब्रह्म अपि स्वीकरोत्।

**ब्रह्मणि जगत्कारणता**

ब्रह्मणो जगत्कारणताया विचारो अद्वैतवेदान्तदर्शनेऽद्भुतोऽस्ति। यदि अत्र ब्रह्मतत्त्व-सम्बन्धे परमार्थदृष्ट्या विचारो भवति तर्हि ब्रह्मणो जगत्कारणता न सिद्ध्यति। कारणमस्ति यत् सच्चिदानन्दस्वरूपात् ज्ञानस्वरूपात् परब्रह्मणो मायिकस्य मोहस्वरूपस्य अनात्मजगतश्च उत्पत्तिः कथं भवितुमर्हति? परं श्रुतो 'यतो वा इमानि भूतानि जायन्ते'[9] ब्रह्मसूत्रे च 'जन्माद्यस्य यतः'[10] इत्यादीनि प्रमाणानि ब्रह्मणो जगत्कारणतायां मिलन्ति। अतः ब्रह्मणो जगत्कारणत्वं परिं कथमित्याशंकायामुच्यते यद्

शङ्कराचार्यस्य दर्शने पारमार्थिकी एवं व्यावहारिकी, इमे द्वे सत्ते स्वीक्रियेते, ययोर्भेदरेखां पुष्टिकर्त्री शक्तिर्मायास्ति। पारमार्थिकी सत्तामावहन्निर्गुणं मायोपाधिरहितं ब्रह्मास्य जगतः कारणं नास्ति। व्यावहारिकीसत्तावत्सगुणं। मायोपाधिकं ब्रह्म अर्थात् सगुण ईश्वर एव जगतः कारणम्। तैत्तिरीयोपनिषदि अपि कथितमस्ति यत् ईश्वरः सृष्ट्यै अकामयत अहं बहुस्याम्।[11]

ब्रह्मणः सृष्टेः किं प्रयोजनम्? एवं पृष्टे सति आचार्यशङ्करः कथयचि- न ब्रह्मणः सृष्ट्यै किञ्चित् प्रयोजनं स ईश्वरः(सगुणं ब्रह्म) केवलं लीलायै सृजते। तस्यायं स्वभावो यथा मानवशरीरे श्वासप्रश्वासाः तथैव सृष्टि उत्पद्यते, विनश्यति।[12]

आचार्यशङ्करो मनुते यदिदं जगत्, नाचेतनप्रकृतेर्विकासः, न बुद्धिहीनपरमाणूनां परिणामः। इदं विश्वं एकस्य सर्वज्ञस्य, सर्वशक्तिमतः, परमात्मनः, सचेतनसंकल्पस्याभिव्यक्तिरस्ति। तद् ब्रह्म एव जगत उपादानं कारणं निमित्तकारणञ्च।[13] कार्यरूपे तद् विश्वं निजकारणेन ब्रह्मणाऽभिन्नमस्ति किन्तु विश्वस्य कारणेन सह अभिन्नताया अर्थः तादात्म्यं नास्ति। घटवत् किञ्चित् कार्यं मृदः भिन्नं न भवितुं शक्नोतिकिन्तु कारणं कार्याद् भिन्नं भवति। कार्यमुत्पद्यते विलीयते च किन्तु कारणं यथावद् भवति। अस्मिन् विषये आचार्यः शङ्करः कथयति जगतः कारणं जगतो भिन्नं अर्थात् ईश्वरो जगत् निर्माति किन्तु जगत् ईश्वरस्य स्वरूपं न निर्धारयति[14] ब्रह्मणो विशुद्धसत्ताया अतिरिक्तं जगतो सत्ता नास्ति। जगद् यदपि तत्ब्रह्मण एव उत्पद्यते तस्मिन्नेव लीयते। 'अपरोक्षानुभूति' मध्ये कथितमस्त सर्वभूतानि जायन्ते परमात्मनः तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत्।[15] 'उपदेशसाहस्री' नामके ग्रन्थेऽपि आचार्यशङ्कर आब्रह्मणः स्थावरपर्यन्तं समस्तमात्मनः शरीरमुक्तवान्।[16] अनेनापि ब्रह्मणो जगतारणता सिद्ध्यति।

---

[1] ब्र०सू०शा०भा०, २/२/१
[2] के०उप०शा०भा०, १/५, ब्र०सू०शा०भा०, १/२/१४
[3] सर्वज्ञं तद् ब्रह्म, मु०उप०, १/१/९
[4] ब्र०सू०शा०भा०,१/१/५, १/१/२
[5] ब्र०सू०शा०भा०, १/१/५
[6] बृ०उप०शा०भा०, ३/८/९
[7] ब्र०सू०शा०भा०, १/२/१८
[8] ब्र०सू०शा०भा० १/१/११
[9] तै०प०, ३/१/१
[10] ब्र०सू०, १/१/२
[11] सोकामयत बहुस्यां प्रजायेयेति। तै०उप०, ११/६/१
[12] ब्र०सू०शा०भा०, २/१/३३
[13] वे०सा०, प० ५८
[14] ब्र०सू०शा०भा०, २/१/९
[15] अप०अनु०, ४९
[16] उप०सा०, १/९/४

**उपसंहारः-**

निष्कर्षरूपेण वक्तुं शक्यते यत् शङ्करस्य मायासिद्धान्तो अद्वैतवेदान्तस्य सबलमेरुदण्डो येन विना अद्वैतवादस्य कल्पनापि असम्भवा। अद्वैतवादस्य मूलभित्तिः अस्मिन् वैचारिकविन्यासे एव आश्रिता यत् ब्रह्मणः व्यतिरिक्तसमस्ताः पदार्था अनित्याः। इदं तदैव सम्भवं यदा ब्रह्मेतरतत्त्वान् ईश्वरजीवजगतादिकान् मायायाः सृष्टिं मन्यामहे। आचार्यशङ्करो मायाया अनया एव व्यञ्जनया अद्वैतवादं स्थापितवान्। तदेव एकमात्रं निर्गुणं ब्रह्म मायोपाधियुक्तं भूत्वा जगत्सृष्टेर्कारणं भवति यत् सगुणब्रह्मणोऽथवा ईश्वरस्य संज्ञया अभिहितं भवति।

## मोक्षस्य परमपुरुषार्थत्वनिरूपणम्*

पुरुषार्थ इत्युक्तेः पुरुषस्य जीवस्य वा अर्थः प्रयोजनं बोध्यम्। प्रयुज्यते अनेन इति प्रयोजनम्। दृश्यन्ते च अनन्तविचित्रप्रयोजनानि सांसारिकजीवस्य। शास्त्रकारैस्तु सर्वेषामप्यर्थानामुपयोगं विवेच्य धर्मोऽर्थः कामो मोक्षश्चेति पुरुषस्य चत्वारोऽर्थाः निर्धारिताः। एतेषां पुरुषार्थानामुत्कर्षभेदाऽपि तैर्यथआमति आलोचिताः। तत्र चतुर्षु पुरुषार्थेषु कस्य श्रेष्ठत्वमिति विचारेण प्रवृत्तैः द्वैताद्वैत वेदान्तशास्त्रकारैः भगवद्भावापत्तिरूपं पुनरुत्पत्त्य-भावरूपः स्वस्वरूपाखण्डानन्दावाप्तिरूपो मोक्ष एव परं प्रयोजनं जीवस्य इत्युक्तम्। ननु अप्राप्तस्य स्वर्गादेः, क्रियासाध्यस्य धर्मार्थकामादेः पुरुषार्थत्वं साम्प्रतमेव। पुनरिह तु जीवब्रह्मणोः स्वाभाविकभेदा-भेदसम्बन्धे स्वीकृते सति कथं मोक्षस्य पुरुषार्थत्वमिति चेत्, उच्यते, अप्राप्तस्यैव पुरुषार्थत्वमिति नियमाभावात्। यथा लोके अज्ञातप्राप्तविषयस्यापि अनुसन्धानं दृश्यते, तथा हि, अनादिमायाप्रभावाद् आवृतभगवद्भावलक्षणस्य आत्मस्वरूपस्य पुनरनुसन्धानदर्शनात् मोक्षस्य पुरुषार्थत्वं सिद्धम्। तदेव वेदान्तशास्त्रस्यापि प्रयोजनरूपोऽनुबन्ध इति वेदान्तकौस्तुभप्रभाकारेणोक्तम्, "श्रीभगवद्भावापत्तिलक्षणो मोक्षोऽत्र प्रयोजनम्। 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते। बहवो ज्ञानतपसा पूता मद्भावमागताः' इति श्रीमुखोक्तेः"[1]।

धर्मार्थकाममोक्षेषु चतुर्विधपुरुषप्रयोजनेषु मोक्षस्य परमपुरुषार्थत्वेन सर्वेषु भातीयदर्शनसम्प्रदायेषु प्रायः अविसंवादितम्। पुरुषस्य अर्थः प्राप्तव्यविषयः पुरुषार्थः। तत्र यं लब्ध्वा सर्वे कामाः निवर्तन्ते स परमपुरुषार्थः। अर्थस्य प्रयोजनं कामाय, धर्मस्य तु स्वर्गादिप्राप्तये। अथो धर्मार्थयोर्परतः-प्रयोजनं विद्यते। मोक्षस्य तु स्वतः-प्रयोजनं, यतः तदनन्तरं किमपि नावशिष्यते। व्यवहारिकजीवने शरीरधारणार्थं धर्मार्थकामानां प्रयोजनमवश्यस्वीकार्यम्। किन्तु तत ऊर्ध्वं तेषां प्रयोजनं तु न मुख्यः। षट्सु आस्तिकदर्शनेषु अपि च बौद्ध-जैनदर्शनयोः मोक्षस्य परमप्रयोजनत्वमुद्घोषितम्। केवलं देहात्मवादिचार्वाकमते 'काम' एक एव पुरुषार्थः। कामसम्भोगार्थस्यापि प्रयोजनं तैरनुमन्यते।[2] अतः कामस्य सहायकरूपेण अर्थोऽपि पुरुषार्थो गुणीभूततया विद्यते। यतः चार्वाकमते देहातीतस्य आत्मनोऽस्तित्वं न स्वीकृतं, अतो दैहिकसुखादिभोग एव कामरूपः पुरुषार्थः। परलोकेऽपि तैर्नानुमन्यते,

*प्रीतिचौधुरी

[1]वेदान्तकौस्तुभप्रभा (१/१/१)

[2]"अर्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्व्वाकमतमनुवत्तमाना एवानुभूयन्ते। "- सर्वदर्शनसंग्रह, चार्वाकदर्शनम्।

अतो धर्ममोक्षयोः प्रासङ्गकता अपि चार्वाकदर्शने निराकृता।[1] किन्तु चार्वाकव्यतिरिकेषु सर्वेषु भारतीयदर्शनेषु विविधाभिधया मोक्ष एव परमपुरुषार्थत्वेन निर्दिष्टः। स एव मोक्षो बौद्धैः 'निर्वाणम्' इति, साङ्ख्यैः 'कैवल्यम्' इति, नैयायिकैः 'अपवर्ग' इति, वैदान्तिकैः 'मुक्ति'रित्यभिधाभिः व्यक्तीक्रियते। एते सर्वे दार्शनिकसम्प्रदायाः दुःखवादिनः, संसारस्य दुःखात्मकत्वम् एभिः पुनः पुनः प्रदर्शितम्, अतः तद्दुःखादुत्क्रमणार्थं मार्गोऽपि उपदिष्टः। स एव मोक्षो नाम, ऐकान्तिकात्यन्तिकदुःखनिरोध इत्यत्र सर्वे साहमत्यमावहन्ति। नन्वत्र सुखमपि परमपुरुषार्थत्वेन गृह्येत इति चेत्, उच्यते, सुखस्य दुःखात्यन्ताभावाभावात्, दुःखाविमिश्रसुखस्यासम्भवात्, जागतिकसुखस्य क्षणिकत्वाच्च न परमपुरुषार्थः सुखम्। धर्मार्थकामैः दुःखस्य क्षणिकनिवृत्तावपि ऐकान्तिकदुःखनिवृत्तिस्तु न। ते हि सातिशयाः विषयाः। तेषां पुनरतिशयो विद्यते। अतो धर्मार्थकामानां स्वत एव निवृत्तिः कथमपि न सम्भवति। मोक्षस्तु न सातिशयः, अपि च निरतिशय इत्यतः तदनन्तरं किमपि काम्यं नावशिष्यते। पुनः चतुर्विधपुरुषार्थेषु धर्मार्थकामानामनन्तरं मोक्षस्य कथनात् श्रेयः-प्रेययोर्मध्ये आन्तर्यमपि प्रदर्शितम्। आद्यत्रयः प्रेय इति तु नास्ति सन्देहः। मोक्षस्तु एक एव श्रेयः। प्रेयः आपातरमणीयः पुत्रवित्तपशुपत्न्यादिः, तल्लाभार्थं धर्मार्थयोरुपयोगोऽस्ति। किन्तु निरतिशयानन्दानुभूति एभर्नोपपद्यते, अपि तु आयाससाध्य-अभ्यासेन वैराग्येण च तल्लभ्यते[2], अतो न मोक्षस्य प्रेयस्त्वम्।

धृ-धातोः मन्-प्रत्यययोगेन 'धर्म' शब्दो निष्पद्यते। येन ध्रीयते स धर्मः। वेदेषु धर्मोऽलङ्घ्यनियमरूपेण निर्दिश्यते येन सर्वं जगत् प्रचलति। धर्मशास्त्रेषु सामाजिकविधिनिषेधपरतया धर्मशब्दो व्याख्यातः। तत्र धर्म इति मानवानामाचरणविधिः। लौकिके तु ईश्वर-आराधना एव धर्मः; अतस्तन्मार्गभेदाद्धर्मोऽपि विभिन्नः। पुराणादिषु ब्रह्म-पद्म-अग्निपुराणेषु दशविधधर्मस्य नैतिककर्माणामुल्लेखो दृश्यते, तद्यथा अहिंसा-क्षमा-इन्द्रियनिग्रहो-दया-शौचो-दानः-सत्यं-तपस्या-आस्तेयो-ज्ञानमिति। तत्र अहिंसा परमो धर्मः। बौद्ध-जैनदर्शनेषु अपि अहिंसाया महत्वं प्रदर्शितम्।

मीमासकमते तु यागादिरेव धर्मः। मतान्तरे धर्मः षड्विधः। वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्च इति। [3] तत्र अग्नीन्वनभैक्षचर्यादि आश्रमधर्मः। ब्राह्मणस्य नित्यमद्यवर्जनादि वर्णधर्मः। पलाशदण्डधारणादि वर्णाश्रमधर्मः। शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः गुणधर्मः। विहितस्यानाचरणं, प्रतिषिद्धस्य सेवनमित्यादिनिमित्त-प्रायश्चित्तादिः निमित्तधर्मः। अहिंसादयस्तु सर्वेषामविशेषेण साधारणधर्मः। कर्त्तुः अहितसाधकगुणा 'अधर्म' इत्युच्यन्ते। विहितस्य अननुष्ठानेन गर्हितस्य सेवनेन इन्द्रियानिग्रहेण अधर्मः स्यादिति स्मृतावुक्तम्।[4]तद्यथा, मनुसंहितायां, "अकुर्व्वन् विहितं कर्म निन्दितं च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः"[5] इत्यादि।

धर्माधर्मयोः उभयोरेव अदृष्टभेदः स्वीक्रियते। धर्मस्तत्र स्वर्गादिसाधनम्। नरकादिसकलदुःखानां नारकीयशरीरादीनां साधनधर्म। प्रायश्चित्तादिना अधर्मनाश इति। मीमांसकनये यागादिकर्म-तत्फलप्राप्त्यन्तराले कश्चिद् अपूर्वः स्वीक्रियते। तेन कर्म तत्फलश्च धार्येते। धर्माधर्मौ विहितनिषिद्धक्रियाजन्यादृष्टे सुखदुःखहेतू। मानमेयोदयकारस्य मतानुसारे, धर्माधर्मौ आत्मनौ विशेषगुणौ इति तार्किकमतं न समीचीनम्।[6]'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यादिवाक्येषु यथा अग्निहोत्रादीन् निःश्रेयसः-साधनमुच्यते तथा आत्मनो गुणविशेषं प्रति तु न दृश्यते। आत्मविशेषगुणो न धर्मः। साङ्ख्याचार्यास्तु यागादिकर्मानुष्ठानादुत्पन्नस्य मनोरूपान्तःकरणस्य वृत्तिविशेषं धर्मशब्दवाच्यमिति स्वीकुर्वन्ति।[7] बौद्धमते तु चैत्यवन्दनादिविज्ञानादुत्पन्नविज्ञाने तज्ज्ञाननिष्प-न्वासनाविशेष एव धर्मः। जैनमते तु असंख्येयाः प्रदेशा धर्माधर्मयोः।[8] किन्तु मीमांसकैकदेशिमते, यागाद्युत्पन्नम् अपूर्वमेव धर्मशब्दार्थः। उक्तञ्च श्लोकवार्तिके, "अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः। पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि॥ प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्। पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः॥"[9] इति।

किन्तु धर्मार्थकामैः यदर्थः संसाध्यते, क्षयी एव तत्। अर्थकामयोः क्षणिकत्वं तु इह जन्मन्येव दृश्यते। धर्मादिना अर्जितस्य पुण्यफलस्यापि न नित्यत्वमिति श्रुतिस्मृतिषु उपदिष्टम्। [10] वेदोक्तयागादिरूपधर्मेण स्वर्गादि-लोकं प्राप्येत, उपनिषत्प्रतिपादितप्रतीकोपासनादिना महः-जन-तपः-सत्यादिलोकेष्वपि गमनं सम्भवेत्, किन्तु तत्तत्स्थानानामनित्यत्वात् तत्रापि न नित्यस्थितिः। भगवद्भावापत्तिलक्षणस्य मोक्षस्य तु श्रुतिस्मृत्यादिषु नित्य-त्वनिर्देशदर्शनाद् मोक्षस्य अतएव परमपुरुषार्थत्वम्।

साङ्ख्यदर्शनस्य प्रारम्भे आत्यन्तिकदुःखनिवृत्तिरेव परमपुरुषार्थत्वेन उल्लिख्यते। उक्तञ्च साङ्ख्य-प्रवचनभाष्ये, "त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"[11]। सैव आत्यन्तिकदुःखनिवृत्तिः कैवल्यपदवाच्या। साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रपाद एवमाह,"सचैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पते इति प्रारीप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात् तद्विषयजिज्ञासामवतारयति"[12] इति। अस्यार्थः, शास्त्रपाठेन यत्फलं लभ्यते तदेवं शास्त्रस्य प्रयोजनम्। साङ्ख्यशास्त्रस्य प्रयोजनं तु मोक्षो मुक्तिर्वा। प्रकृति-पुरुषयोर्विवेकविज्ञानात् पञ्चविंशतितत्त्वानां सम्यग्ज्ञा नाद्वा तल्लभ्यते। साङ्ख्यकारिकाकृता आचार्येण ईश्वरकृष्णेनापि शास्त्रारम्भे एव उक्त"दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ"[13] इति। अतो दुःखत्रयस्य अभिघातोऽनिष्टरूपता वा प्रसिद्धा एव। आधिभौतिक-आधिदैविक-आध्यात्मिक इति भेदात् दुःखं त्रिविधम्।

[1]"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः"- सर्वदर्शनसंग्रह, चार्वाकदर्शनम्।
[2]अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते श्रीमद्भगवद्गीता (६/३५)
[3]"धर्मशब्दः षड्विधस्मार्त्तधर्मविषयः। ..........."- याज्ञवल्क्यस्मृतिः, मिताक्षरा (१/१)
[4]"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियानां नरः पतनमृच्छति।"- याज्ञवल्क्यस्मृतिः (३/२१९)
[5]मनुसंहिता (११/४४)
[6]"आत्मविशेषगुणे लौकिकानां धर्माधर्मशब्दप्रयोगादर्शनात्। यदाहुः- लोकप्रयोगगम्या हि शब्दार्थाः सर्व एव नः।"- मीमांसापरिचयः(पृष्ठम्- ३५३)
[7]"श्रुतिस्मृतिविहितानां कर्मानामनुष्ठानाद् बुद्ध्यवस्थः सत्तावयव आशयभूतो धर्म इत्युच्यते।"- युक्तिदीपिका।
[8]तत्त्वसूत्रम (५/७)
[9]श्लोकवार्त्तिकम् (२/१९५,१९६)
[10]"क्षीणे पुण्ये मृत्युलोकं विशन्ति"- श्रीमद्भगवद्गीता (९/२१)
[11]साङ्ख्यप्रवचनसूत्रम् (१/१)
[12]साङ्ख्यतत्त्वकौमुदी कारिका- १
[13]साङ्ख्यकारिका १

तत्र अर्थेन आधिभौतिकदुःखस्य धर्मेण च आधिदैविकदुःखस्य आपात-प्रतिकारसम्भवेऽपि आत्यन्तिकदुःखनिवृत्तिस्तु न एताभ्यां सम्भवति।[1] तत्तु केवलं शास्त्रज्ञानादेव स्यादित्यतः शास्त्रज्ञानस्य परं प्रयोजनवत्वं, शास्त्रज्ञानलभ्यस्य मोक्षस्य च परमपुरुषार्थत्वम् इत्युक्तम्।

न्यायदर्शने द्वादशप्रमेयेषु 'दुःखम्' अन्तर्भुक्तम्।[2] दुःखस्य आत्यन्तिकनाश एव तत्र अपवर्ग इत्युच्यते। स एव मोक्षः परमपुरुषार्थ्वेन विवेचितः। भाष्यकारः आचार्यवात्स्यायनपाद एवमाह, "दुःखमिति नेदमनुकूल-वेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम्। किं तर्हि? जन्मन एवेदं ससुखसाधनस्य दुःखानुसङ्गाद् दुःखेनावि -प्रयोगाद् विवधबाधनायोगाद् दुःखमिति समाधिभावनामुपदिश्यते। समाहितो भावयति, भावयन् निर्व्विद्यते निर्व्विन्नस्य वैराग्यं विरक्तस्यापवर्ग इति। जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणमपवर्ग इति"[3] इति। ननु सर्वविद्योपयोगी-प्रमाणादिपदार्था एव न्यायशास्त्रप्रतिपाद्याः। अथः 'निःश्रेयस' इति पदेनात्र कथं मोक्षनिश्चय इति चेदुच्यते भाष्यकारैः यदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्या वेदितत्वम्। उक्तञ्च आचार्यकौटिल्येन, "आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतिश्चेति विद्या"[4] इति। सर्वासु एव विद्यासु तत्त्वज्ञानप्रसङ्गो निःश्रेयसाधिगमप्रसङ्गश्च वर्तेते। तत्र त्रय्यां यागादिविषयकयथार्थज्ञानं तत्त्वज्ञानं, स्वर्गप्रापत्रेव निःश्रेयसः। वार्तायां भूम्यादिवानिज्यादिविषयकयथार्थज्ञानं तत्त्वज्ञानम् अर्थ एव तत्र निःश्रेयसः। दण्डनीतौ तु सामादिनीतिज्ञानमेव तत्त्वज्ञानम्, राज्यलाभस्तत्र निःश्रेयसः। किन्तु आन्वीक्षिकी आध्यात्मविद्या, अतः "इह तु आध्यात्मविद्यायामात्मादिज्ञानं तत्त्वज्ञानम् निःश्रेयसाधिगमोऽपवर्गप्राप्ति"[5]रिति भाष्यकारस्याशयः।

मीमांसकनये तु आदौ धर्मस्य एव परमपुरुषार्थत्वं स्वीकृतं न मोक्षस्य। महर्षिजैमिनिः शवरस्वामी च मोक्षचर्चायां प्रयाशं न्कृतवन्तौ। तन्मते तु स्वर्गप्राप्तिरेव निःश्रेयसः, अत स्वर्गसाधनं यागादिरेव तैः मुख्यतया आलोचितम्। किन्तु तत्परवर्तिमीमांसकाचार्यैः प्रभाकर-कुमारिल-पार्थसारथिमिश्रपादैः मोक्ष एव परमपुरुषार्थत्वेन स्वीकृतिः। किन्तु तैरपि मोक्षसाधनविषये कर्मण एव उपयोग उक्तः, न ज्ञानस्य। प्राभाकरमते मोक्षे केवलस्य आतमनोऽस्तित्वं वर्त्तते, किन्तु न तत्र आनन्द-सुखादेः अस्तित्वं कल्पनीयम्। भाट्टमते तु आत्मनि चैतन्यं गुप्तशक्तिरूपेण वर्त्तते, अथः मोक्षे आनन्दानुभवस्तु स्यादेव। [6] परं तु, तदानन्दं पार्थिवानन्दविलक्षणम् अविनाशी नित्यञ्च। किन्तु पार्थसारथिमिश्रपादैः एवं मन्यते यत्, वेदान्तसम्मतं मीमांसकमतमिदं न भट्टकुमारिलस्य स्वकीयमतम्, अथः तेन उच्यते, "यत्तु 'तस्मात् कर्मक्षयादेव..........मोक्षनित्यत्वकारणम्' इति वार्त्तिकं, तत्परमतम्, इत्येवमानन्दमोक्षवादिनो मतम्"[7] इति। अपि च कुमारिलमते मोक्षः प्रपञ्चसम्बन्धस्य विलयरूप एव, अत अभावात्मकः। प्रपञ्चसम्बन्धाभावात् मोक्षे दुःखाभाव एव विशेषः, परं, नित्यानन्दानुभवस्तु नोत्पद्यते, "अभावात्मकत्ववचनमेव स्वमतम्, उपपत्त्यभिधानात्। आनन्दवचनं तूपन्यासमात्रत्वात् परमतम्। न हि मुक्तस्यानन्दानुभवः सम्भवति, कारणाभावात्"[8] इत्युक्तेः। अतएव न सुखम्, अपि तु दुःखाभाव एव मोक्षः, स एव पुरुषार्थोऽपि। [9]

वेदान्तदर्शने मोक्षस्तु एक एव पुरुषार्थः, अथः परमपुरुषार्थश्च। उपनिषत्सु अर्थकामयोरानर्थक्यं धर्मस्य च नश्वरफलोपेतत्वं भूयोभूयः प्रदर्शितम्। इह संसारे जीवाः सततमेव शोकेन मोहेन च आच्छन्नं सन्तः कष्टमनुभवन्ति। आत्मज्ञानेन विना अस्माद्दुःखात् कथमपि मुक्तिर्नास्ति। अत उक्तं, "तरति शोकमात्मवित्"[10] इति। छान्दोग्योपनिषदि नारद-सनत्कुमारसंवादे तदेव समुल्लिखितम्। भगवता नारदेन उक्तं यत्, ऋग्वेद-सामवदे-यजुर्वेद-अथर्ववेद-इतिहास-पुराणादीनामध्यनानपि दुःखार्णवादु-त्तरयितुं स न समर्थोऽभवत्। तदा सनत्कुमारेण उक्तं, "यद् वै किञ्चित् तदध्यगीष्ठा नामैव तत्"[11]। ततः तेन वाक्य-मनः-संकल्प-चित्त-ध्यान-विज्ञानादीनां तत्त्वानां सम्यगालोचनं कृत्वा तेषामुत्तरोत्तराणां श्रेष्ठत्वमपि प्रतिपादितम्। तेषां प्रतीकानां प्रत्येकैकस्य ब्रह्मबुद्ध्य उपासिते सति तत्तत् तत्त्वानां यावद् गतिर्भवति तदुपासकानामपि तावदेव गतिर्भवतीति उपासनाफलमपि तेन उपदिष्टम्। किन्तु सर्वश्रेष्ठत्वेन नित्यसुखस्यैव वाञ्छनीयत्वाद् अन्ते तस्यैव उपदेशः कृतः, "यो वै भूमा तत् सुखम्, नाल्पे सुखमस्ति, भूमैव सुखम्। भूमात्वैव विजिज्ञासितव्य"[12] इति। तत् सुखं तु आ-त्मज्ञानेनैव लब्धव्यम्, न तु अर्थवित्तेन। अत उक्तं बृहदारण्यके, "अमृतत्त्वस्य तु नाशास्ति वित्तेन"[13] इति। अत एव मोक्षस्य परमपुरुषार्थत्वं वेदान्तेषु अविसंवादितम्। तदपि 'तरति शोकमात्मवित्', 'तमेव विदित्वा-तिमृत्युमेति', 'रस वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति, इत्यादिश्रुतिषु; तथा "पुरुषार्थोऽतः शब्दादिति बादरायणः"[14] इत्यादिषु ब्रह्मसूत्रेषु उपदिष्टम्। मन्वादिसकलस्मृतिषु अपि मोक्ष एव परमपुरुषार्थत्वेन उपदिष्टः।

श्रीमद्भागवतेऽपि मोक्षस्य परमपुरुषार्थत्वं कथितम्। किन्तु केचन टीकाकारा एतान् नानुमन्यन्ते। ग्रन्थारम्भे "धर्मः प्रोज्झितकैतवः परमः"[15] इत्यस्य व्याख्यायाम् आचार्यश्रीधरस्वामिना उक्तम्, "अत्र श्रीमति सुन्दरे भागवते परमो धर्म निरूप्यते इति। परमत्वे हेतुः प्रकर्षेण उज्झितं कैतवं फलाभिसन्धिलक्षणं कपटं यस्मिन् सः। प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः"[16]। अस्यार्थः, मोक्षाभिसन्धिलक्षणकपटता तद्धर्मे नास्ति। अपि च तन्मते, ये

---

[1] "दृष्टवदनुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥"- साङ्ख्यकारिका २

[2] "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्याभावफलदुःखापवर्गास्तु प्रमेयम्। "- न्यायसूत्रम् (१/१/९)

[3] न्यायसूत्रम्, वात्स्यायनभाष्यम् (१/१/९)

[4] कौटिल्यीयम् अर्थशास्त्रम् (१/२/१)

[5] न्यायसूत्रम्, वात्स्यायनभाष्यम् (१/१/१)

[6] "दुःख्यात्यन्तसमुच्छेदे सति प्रागात्मवर्त्तिनः।
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः॥– मानमेयोदय (पृष्ठम् २१५)"

[7] शास्त्रदीपिका (पृष्ठम्- ३६१,३६२)

[8] शास्त्रदीपिका (पृष्ठम्- ३६२)

[9] "निरानन्दो मोक्षः दुःखपरिलोपाच्च पुरुषार्थत्वम्। "- शास्त्रदीपिका (पृष्ठम्- ३६८,३६९)

[10] छान्दोग्योपनिषत् (७/१/३)

[11] तदेव

[12] छान्दोग्योपनिषत् (७/२४/१)

[13] बृहदारण्यकोपनिषत् (४/५)

[14] ब्रह्मसूत्रम् (३/४/१)

[15] श्रीमद्भागवतम् (१/१/२)

[16] श्रीमद्भागवतम्, श्रीधरस्वामीकृता टीका (१/१/२)

मुमुक्षवो मोक्षमेव परमपुरुषार्थत्वेन निश्चीयन्ते, तेषां श्रीमद्भागवति प्रवेशो नास्ति। यतः श्रीमद्भागवतप्रोक्तः पुरुषार्थः प्रोज्झितकैतवपरमधर्मः, न तु मोक्ष इति। अपि च तन्मते, "भक्तिः सिद्धेर्गरीयसी"[1], "नात्यन्तिकं विगणयन्त्यपि ते प्रसादं"[2], "नैकात्मतां मे स्पृहयन्ति"[3] इत्यादिषु श्रीमद्भागवतवचनेषु भक्तेरेव परमपुरुषार्थत्वं प्रतिष्ठितं, न मोक्षस्य।

किन्तु, "सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते"[4] इत्यादिवचनेषु सर्ववेदान्तसिद्धान्तसाररूपेण ग्रन्थोऽयं विशिष्यते। अतो वेदान्तविधृतः परमपुरुषार्थो मोक्षः श्रीमद्भागवते कथं निरस्येत इत्येतच्चिन्त्यम्। अपि च एतल्लक्षणीयं यत् श्रीधरस्वामिकृतटीकायां मोक्षस्य अभिसन्धिरेव निरस्ता, न तु मोक्षः। किञ्च अस्य ग्रन्थस्य विविधस्थानेषु वेदान्तप्रतिपाद्यमोक्ष एव परमपुरुषार्थत्वेन उपस्थापितः। भक्तिस्तत्र मोक्षलाभोपाय इत्युक्तम्। तद्यथा, "तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः। हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते"[5] इति। श्रीधरस्वामिनापि अस्य टीकायामुक्तं, "अण्वीं गतिं मुक्तिं प्रयुङ्क्ते प्रापयति" इति। अस्यार्थः, मम मनोहराः मुखाद्यवयवा हास्यकटाक्ष-मधुरभाषणादिरम्यलीलाः तासां गोपीकानां मनः-प्राणेन्द्रियादी-नपहरन्ति, किन्तु अनीप्सितेऽपि मोक्षे तासां भक्तिः मोक्षकारणं भवति। अतः यथोक्ते "भक्तिः सिद्धेर्गरीयसी" इति वचने 'सिद्धि'पदस्य यथोहितः मुक्तिरित्यर्थो न इष्टः। अन्यत्रापि उक्तम्, "एवं प्रसन्नमनसो भगवद्भक्तियोगतः। भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते"[6] इति।

श्रीमद्भगवद्गीतास्वपि भगवता उक्तं, यत्, साधनभक्तिबलेन पूर्णतया विलुप्तोऽहंभावः सन् साधकः शुद्धसत्त्वमये कार्यब्रह्मणि आदौ स्थितो भवति, ततो वासनाक्षये चित्तं प्रसन्नतामाप्नोति, तेन पराभक्तिः लभ्यते येन भगवद्भावरूपं मोक्षमाप्नोति आत्मवित्।[7] साधनस्य प्रथमावस्थायां मोक्षाभिलाषः सर्वेषां साधारण्ये वर्तते, ततः परिणते साधने सर्वेषु विषयेषु आत्यन्तिक-अनासक्त्युदये मोक्षवासनापि अपगता भवति। अत उक्तं, "न शोचति न काङ्क्षति"[8] इति। किन्तु मोक्षवासनाक्षयेऽपि मोक्षस्य परमपुरुषार्थत्वं विद्यते एव। उक्तञ्च आचार्यशङ्करेण, "भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि.....मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति"[9] इति। अतादृश-कामनाशून्यावस्थायां पराभक्तिर्जायते किन्तु तादृशेन पराभक्त्या मोक्षमेव आप्नोति जीवः। अतः 'भक्तिः सिद्धेर्गरीयसी' इत्यत्र सिद्धिपदेन न 'मोक्षः' अपि तु कामनायुक्तमोक्षेतरपुरुषार्थ एव बोध्य इति द्वैताद्वैतसिद्धान्तः। अतः सत्सु अनन्तविचित्रेष्वर्थेषु, मोक्षस्यैव परमपुरुषार्थत्वमविसंवादितम्, इति शिवम्॥

---

1श्रीमद्भागवतम् (३/२५/३२)

2तदेव (३/१५/४८)

3तदेव (३/२५/३४)

4तदेव (१२/१३/१५)

5तदेव (३/२५/३६)

6तदेव (१/२/२०)

7"ब्रह्मभूतप्रसन्नात्मा न शोचति न काङ्क्षति।
सम सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥"- श्रीमद्भगवद्गीता (१०/५४,५५)

8श्रीमद्भगवद्गीता (१२/१७)

9श्रीमद्भागवद्गीता, शाङ्करभाष्यम् (५/१०)

**मोक्षप्रतिबन्धकाः**[*]

भगवत्प्राप्तिविरोधिस्वरूपा या माया प्रकृतिर्वा; तस्याः कार्यभूतायाः कर्मात्मिकायाः अविद्यायाः अनादिकालयावत् जीवात्मना सह संयुक्ततया अवस्थानेन जीवस्य ज्ञानस्वरूपत्वमावृतं भवति, तस्मात् जीवे भगवद्विमुखतारूपो दोष उपजायते। अतः तद्विरोधिविषयस्य मोक्षप्रतिबन्धकस्य स्वरूपं मुमुक्षुभिरवश्य -ज्ञातव्यमिति भगवता श्रीमन्निम्बार्कचार्येण उक्तम्, "उपास्यरूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम्। विरोधिनोरूपमथैतदाप्तेर्ज्ञेया इमेऽर्था अपि पञ्चसाधुभिः"[1] इति। श्रीपुरुषोत्तमाचार्यैः स्वकीयवेदान्तरत्नम-ञ्जुषायां मोक्षप्रतिबन्धकानां विषयानां सविस्तारमालोचनम् उपस्थापितम्। तन्मते, विरोधिप्रतिबन्धकाः सामान्य-विशेष इतिभेदात् द्विधा विभज्यन्ते। तत्र सामान्यप्रतिबन्धकास्तावत् शास्त्रोक्तमार्गं परित्यरज्य परधर्मग्रहणम्, सांसारिकविषयभोगेषु अत्यन्तासक्तिः, गीतोक्तं दैविसम्पदं परित्यज्य आसुरसम्पदग्रहणम् इत्यादयः। एते साधारण्येण सर्वेषु साधकेषु प्राथमिकस्थितौ वर्त्ते। मोक्षार्थिपुरुषएण यत्नेन एते विरोधिवियाः परित्यज्याः।[2] विशेषप्रतिबन्धकाः पुनर्यथा,(१) आत्मस्वरूपज्ञानप्रतिबन्धकाः- अनात्मदेहादौ आत्मबुद्धिस्था-पनम्, आत्मनः परमात्माधीनत्वमस्वीकृत्य तस्मिन् स्वायत्तबुद्धिस्थापनम्, वेदान्तसिद्धान्तान् परित्यज्य तद्व्यतिरिक्ततर्कशास्त्राद्यनुशीलनम् इति; एते मोक्षमार्गेषु प्रतिबन्धकाः। अपि च परमेश्वरं परित्यज्य दैवतोपासना, श्रुति-स्मृत्यादिषु उल्लिखितानां भगवदादेशानामवज्ञानम् आत्मस्वरूपज्ञाने विशेषप्रतिबन्धकम्। (२) ब्रह्मणः स्वरूपगुणादिविषयकज्ञानप्रतिबन्धकाः- देवतादौ परमेश्वरत्वबुद्धिः, परमेश्वरादपि देवतानां श्रेष्ठत्वस्थापनम्, भगवतः अवतारादौ मनुष्यबुद्धि-स्थापनम्, भगवन्नामन्त्रादौ साधारणशब्दत्वबुद्धिस्थापनम्, भगवतो लीलाख्यानादौ लोककल्पितत्वबुद्धिस्थापनम्, भगवद्विग्रहादौ पाषाणत्वबुद्धिस्थापनमित्येते सर्वे भगवत्स्वरूपज्ञानादिविषयप्रतिबन्धकाः। एतेषां सर्वेषां मूलं तु भगवतो आनन्दांशसम्भूता मायाशक्तिरेव। उक्तञ्च श्रीमद्भगवद्गीतासु, "मम माया दुरत्यया"[3] इति। पुनस्तत्रैव एवमप्युक्तं यत्, भगवतः शरणं यो गच्चेत् तस्य मायाबन्धनं भगवान् स्वयमेव विमोचयति। अतः उक्तं भगवता श्रीमन्निम्बार्काचार्येण, "नान्यगतिः कृष्णपदारविन्दात्संदृश्यन्ते ब्रह्मशिवादिवन्दितात्। भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यसाश-यात्॥"[4] इति।

आचार्यहरिव्यासदेवकृते सिद्धान्तरत्नाञ्जलिग्रन्थे मोक्षप्रतिबन्धकानि एवमुक्तानि, "कृष्णप्राप्तौ चत्वारिप्रतिबन्धकानि, तानि च प्रमेयगतासम्भावना-प्रमाणगतासम्भावनाविपरीतभावनाविषयवा-सनाख्यानि"[5]। तत्र, प्रमेयतत्त्वस्य तन्नाम उपास्यस्वरूपस्य सर्वेश्वरत्वसर्वोपास्यत्वसर्वकामफल-प्रदातृत्वमोक्षदातृ-त्वादिविषये असम्भावना तद्विषयकः संशयः तत्स्वरूपे श्रद्धाभावः प्रमेयगत-असम्भावना। पुनः, आप्तवचनं श्रुतिस्मृत्यादिशास्त्रवचनमेव प्रमेयतत्त्वावधारणे मुख्यप्रमाणम्।[6] तस्मिन् श्रुतिस्मृत्यादौ आप्तपुरुषे च सन्धिग्धबुद्धिस्थापनं प्रमाणगत-असम्भावना। अत उक्तं, 'श्रवणं प्रमाणगतासम्भावनायाः निवर्तकमि'ति। श्रवणं नाम आप्तवचनस्य उपनिषद्वचनानाञ्च श्रवणम् इति। किन्तु, स्वकीयदोषादीनां बाहुल्यचिन्तनेन आपतपुरुषशरणागतौ अत्यन्त-उत्साहाभावः; अपि च, न ते आप्तपुरुषाः शास्त्रवाक्यानि वा माम् उद्धर्तुं समर्थेति मे मोक्षसम्भावना नास्तीति च विपरीतभावना नाम तृतीयप्रतिबन्धकम्। पुनः, रूपरसादितन्मात्रेषु भोग्यभावयुक्ततया आसक्तिः विषयवासना। एते चित्तविक्षेपविषयाः मनसि वर्तमानाः मोकषप्रतिबन्धकाः भवन्ति। उक्तञ्च कठोपनिषदि, "पराञ्चिखानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत-चक्षुरमृतत्वमिच्छन्"[7] इति सर्वमुपपन्नमिति शिवम्॥

---

[*]चुमकिमुला

[1]वेदान्तकामधेनुः १०

[2]श्रीनिम्बार्क ओ द्वैताद्वैतदर्शन, (पृष्ठम्- ५२७)

[3]श्रीमद्भगवद्गीता (७/१४)

[4]वेदान्तकामधेनुः ८

[5]वेदान्तसिद्धान्तरत्नाञ्जलि, (पृष्ठम्- १९०)

[6]"वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च"– वेदान्तसारः (पृष्ठम् - १९)

[7]कठोपनिषत् (४/१)

## श्रीकण्ठभाष्यदिशा ब्रह्मणः स्वरूपम्*

जगतःजन्म-स्थिति-प्रलय-आवरण(जीवस्यनित्यसिद्धज्ञानं क्रियाशक्तेःआवरणरूपबन्धनं च)–अनुग्रह(बन्धनान्मुक्तिदानम्) इति पञ्चकृत्यं यतोभवन्ति[1], यःचिदचित्प्रपञ्चाकारेपरिणामिनीप-रमशक्तिविशिष्टः, यःसकलशास्त्रतात्पर्यविषयीभूतः, यःभवशिवादिनामष्टकैःप्रकाशितः[2], सर्वोपद्रवःकलङ्करहितश्च, निरतिशयज्ञान-आनन्द-शक्ति-महिमायुक्तः[3], तत् अद्वितीयं शिवतत्त्वमेवपरब्रह्म[4]। भव-शर्व-ईशान-पशुपति-रुद्र-उग्र-भीम-महादेव इत्यष्टौअस्यप्रधाननामानि[5]। शिव-परमेश्वर-शम्भु[6]-त्रिलोचन-विरूपाक्ष-नीलग्रीव-विलोरित-शितिकण्ठादिनाम्नापिअयमस्मिन् ग्रन्थेवर्णितः। भाष्यकारःप्रथमोक्तनामष्टकानामीदृशमर्थंप्रादर्शयत्– "सर्वत्र सदा भवति", "सदा सर्वत्र वर्तमानम्"इत्यतःसःभवः।[शॄहिंसायाम् इति धातुः, "शृणातिहिनस्तिजगत्" इति शर्वः[7], इति व्युत्पत्त्या]सर्वसंहारकः, इत्यतःशर्वः। निरुपाधिकपरमैश्वर्यविशिष्टात्ईशानः। ब्रह्मादिस्थावरान्तचेतनाचेतनानां पतिरित्यतःपशुपतिः। संसाररुजः(उपतापस्य) द्रावकः(दाहकः) इत्यतःरुद्रः। अपरस्यतेजसाअनतिभूतःइत्यतउग्रः। नियामकरूपेणनिखिलचेतनस्यभयहेतुःइत्यतःभीमः। आत्मज्ञानेन महता योगैश्वर्येण च स्वमहिम्निप्रकाशितःइत्यतःमहादेवः[8]। शिवकारकः(मङ्गलकारकः)कल्याणगुणयुक्तःइत्यतःशिवः। सकलजगतःशासकःइत्यतःपरमेश्वरः। सुखस्वरूपइत्यतःशम्भुः[9] इत्यादि। अस्मिन् स्वप्रकाशत्व-सर्वशक्तित्व[10]सर्वपापराहित्य[11]सर्वज्ञत्व-नित्यतृप्तत्व-अनादिबोधत्व-स्वतन्त्रत्व-अलुप्तशक्तित्व-अनन्तशक्तित्वादिधर्माः नित्यसिद्धाः[12]। अयं कर्मफलदाता[13], सर्वान्तर्यामी, निरस्तनिखिलदोषः, निरतिशयमङ्गलाकरः[14]। शरीरिरूपेणदेवादिशरीरेवर्तमानेसत्यपिअयं रूपरहितवस्तुइवतिष्ठति, अर्थात् नामरूपगतदोषैः स अस्पृष्टः[15]। अयं निरवयवः[16], किन्तु विचित्रानन्तशक्तियुक्तमायारूपपरमशक्तिविशिष्टः सन् तच्छक्तिबलेनप्रपञ्चाकारेविपरिणमते, स्वतः प्रपञ्चातीतरपेणतिष्ठति[17]। अयं स्वप्रकाशःज्ञानस्वरूपश्च[18], प्रत्यक्षादिभिः प्रमाणैःअनभिव्यक्तः, किन्तु ध्यानरूपज्ञानैःसम्यगाराधितोभवतिचेत्उपासकस्यनिकटेअभिव्यक्तोभवति[19], ततःउत्कृष्टंतत्सदृशं वाकिमपिनास्ति[20]। सर्वाधारेसर्वगते च सत्यपिसाधकम्अनुग्रहीतुं "कप्यासं पुण्डरीकनयनं वृद्धशातातपःस्मृतिः, रामानुजभाष्येश्रीकण्ठभाष्ये च "यथा कप्यासं पुण्डरीकम् एवम् अक्षिणी"

---

***JoydebDinda, PhD Research Scholar**,
Ramakrishna Mission Vivekananda Educational and Research Institute

[1]ब्र.सू.श्रीकण्ठ.भा.१-१-२
[2]ब्र.सू.श्रीकण्ठ.भा.१-१-१
[3]ब्र.सू.श्रीकण्ठ.भा.१-१-१
[4]ब्र.सू.श्रीकण्ठ.भा.१-१-१
[5]ब्र.सू.श्रीकण्ठ.भा.१-१-२
[6]ब्र.सू.श्रीकण्ठ.भा.१-१-१
[7]शि.म.दी.१-१-१
[8]ब्र.सू.श्रीकण्ठ.भा.१-१-२
[9]शि.म.दी.१-१-१
[10]ब्र.सू.श्रीकण्ठ.भा.४-३-१४
[11]ब्र.सू.श्रीकण्ठ.भा.१-१-२१
[12]ब्र.सू.श्रीकण्ठ.भा.३-२-२९
[13]ब्र.सू.श्रीकण्ठ.भा ३-२-३७
[14]ब्र.सू.श्रीकण्ठ.भा ३-२-११
[15]ब्र.सू.श्रीकण्ठ.भा ३-२-१४
[16]शि.म.दी.२-२-३६, २-१-१७
[17]ब्र.सू.श्रीकण्ठ.भा २-१-३१
[18]ब्र.सू.श्रीकण्ठ.भा ३-२-१६
[19]ब्र.सू.श्रीकण्ठ.भा ३-२-२२,२३
[20]ब्र.सू.श्रीकण्ठ.भा ३-२-३१, ३५

(छान्दोग्योपनिषत्– १.६.७) इत्यस्यश्रुतिवाक्यस्यईदृशोऽर्थःपरिदृष्टः– "कम्उदकंरश्मितिःपिबति इति कपिः– आदित्यः, तेनआसितंविकसितंपुण्डरीकं यथा स्फुरति, तथा परमेश्वरस्यलोचनद्वयम्" इति। "परमेश्वरस्यचक्षुर्द्वयंसूर्यरश्मिभिर्विकसितःश्वेतकमलः, तत्सदृशः" इति भावः। उक्तछान्देग्यश्रुतिभाष्येआचार्यःशङ्करःईदृशमर्थंकरोति–"कपेः–मर्कटस्यआसःकप्यासःकपिपृष्ठान्तः, येनउपविशति। कप्यासःइवपुण्डरीकम्...एवमेवअस्यदेवस्यअक्षिणी"। "परमेश्वरस्यचक्षुर्द्वयंमर्कटपृष्ठान्तभागइवलोहितवर्णविशिष्टंकमलं, तत्सदृशम् इति भावः। [1]हिरण्मयवपुः"इत्यादिनानारूपधारी[2], ब्रह्मा-विष्णु-महेश्वर-उमा-विनायकप्रभृतिसर्वप्रपञ्चवाच्यरूपेणअन्तर्यामिरूपेणयावतीयचितचिद्वस्तुषुअनुप्रविष्टः[3]। असौस्वाभा-विकशक्तिविशिष्टः, न हि कदापि निर्विशेषः[4]। ब्रह्मणःनिर्गुणताबोधकश्रुतेरर्थः– "हेयगुणराहित्यम्"[5]इति। "प्राणारामंमनोआनन्दम्"[6] इत्यादिभिः श्रुतिभिर्ज्ञायतेयत्अस्यमनोरूपानादिसिद्धस्वाभाविककरणंविद्यते, बाह्यकरणनिरपेक्षेण[7] असौनिरतिशयम्आत्मानन्दम्अनुभवति[8]। विहारायशरीरेन्द्रियादीनांग्रहणं तदिच्छाधीनम्[9]। पराशक्तिरेवसाक्षाद्रूपेणअस्यअर्थक्रियाकारिणी[10]। "ज्ञान-वैराग्य-ऐश्वर्य-तपस्या-सत्य-क्षमा-धृति-स्रष्टृत्व-आत्मज्ञान-अधिष्ठातृत्वानि" इति दश गुणाःअस्मिन्नित्यंविद्यमानाः[11]। चिच्छक्तिनाजगद्रूपेअस्मिन् परिणतेसत्यपि स्वतः प्रपञ्चातीतः[12]सन् स्वीयशुद्धस्वरूपेणनिर्विकारःतिष्ठति, ततः"निष्फलंनिष्क्रियम्"[13] इत्यादिश्रुतेः सार्थकता सिद्ध्यति[14]। अस्यैव विचारः विस्तृतरूपेण अधः क्रियते।

ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः शिवोऽभिधीयते। [15]परं ब्रह्म स्वभावत एव निरस्तनिहितदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तः प्रवेशनियमनादि-लीलं कृत्स्नस्य चिदचिद्वस्तुनोः सर्वावस्थस्थितस्य पारमार्थिकस्यैव परब्रह्मणः शरीरतया रूपत्वं तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति[16] ज्ञायते। आचार्यश्रीकण्ठमते यद्यपि ब्रह्मैव चरमसत्यं तथापि जगतो जीवस्यापि नासत्यत्वम्। एतद्द्वयं ब्रह्मणः शरीरम्। ब्रह्म परमात्मा चैकमेव। श्रुतिवाक्येषु यत्तन्निर्गुणमुच्यते तस्यैत त् तात्पर्यं यत्तत् लौकिकगुणदोषरहितम्। सृष्टेः पूर्वं ब्रह्मण चिदचिदेतद्द्वयं सूक्ष्मरूपेण वर्तते। एतत्तस्याव्यक्तं स्वरूपं यच्च कारणं ब्रह्म उच्यते, यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उयभगुणभिधीयते। [17]

तस्मिन्नीश्वरे निश्चयं, सीमितता, भेदान्यता याः सार्धणेव विलीयन्ते, इमाः सर्वा अन्तर्निहिताः सन्ति, तस्मिन्नेकस्मिन्नेव एकत्रिताः सन्ति। सान्तता स्वयमनन्तान्तर्गताऽस्ति ब्रह्मणि स्वस्मिन्नेव स्वगतोभेदः तच्चैकं संश्लिष्टपूर्णं तत्त्वं यस्मै आत्मा प्रकृतिश्च महत्त्वपूर्णे स्तः।

सत्, चिद्, आनन्दश्च एते ब्रह्मणे एकं विशेषस्वरूपं व्यक्तित्वञ्च ददति। ब्रह्मणो ज्ञानं साक्षाद् इन्द्रियाधीनं नास्ति। आचार्यशङ्करस्य मतं श्रीकण्ठाय स्वीकार्यं नास्ति। निर्गुणवादिनः निर्गुणब्रह्मसिद्धौ यथा शास्त्राणां युक्तीः प्रदर्शयन्ति तथैव सगुणब्रह्मवादिनोऽपि निजपक्षे प्रमाणानि प्रस्तुवन्ति। आचार्यश्रीकण्ठो मनुते यासु श्रुतिषु परमात्मा निगुणः कथितोऽस्ति तासां तात्पर्यं केवलं निर्गुणं मत्वा ध्यानमस्ति। परमात्मा वस्तुतोनिर्गुणो नास्ति अतः छान्दोग्योपनिषदि "सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः" इति परमात्मने कथितमस्ति।[18] जीवात्मनोऽभिमानमपकृत्य तत्त्वज्ञानलाभे साधकः सहयोगं प्राप्नुयात् अत एव परमात्मानं निर्गुणं मत्वा ध्यानस्य व्यवस्थाऽस्ति। वस्तुतः परमात्मा निर्गुणो नास्ति अपितु निर्गुणत्वं तत्र आरोपितमस्ति। सगुणत्वमेव तस्य वास्तविकं स्वरूपम्।

आचार्यश्रीकण्ठो मन्यते परमात्मा निर्गुणो न भवितुमर्हति। निर्गुणब्रह्मवादे न किञ्चित् प्रमाणम्, निर्विशेषं वस्तु न सिद्ध्यति। श्रुतौ यानि निर्गुणबोधकानि वाक्यानि मिलन्ति तेषामभिप्रायो हेयगुणशून्य-त्वमस्ति। श्रीकण्ठस्तु ब्रह्मणः सगुणस्य निर्गुणस्य च व्यवस्थां साधयति। सगुणब्रह्मवादी श्रीकण्ठः ब्रह्मसूत्रस्य भाष्ये न्यायदर्शनवद् वदति चेतनत्वं नाम चेतनगुणयोगः इति। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव[19] इति। अर्थात् चैतन्यगुणवानेव चेतनोऽस्ति, अतएव 'तदैक्षत' इति श्रुतौ ब्रह्मण ईक्षणकर्तृत्वमुक्तम्। ब्रह्मणि ईक्षणशक्तिरस्ति, अतः सांख्यदर्शनाभिमतस्य प्रधानकारणवादस्य वेदान्तिनः, प्रत्याख्यानमुपस्थापयन्ति। [20] यदि ब्रह्मण्यपि नास्तीक्षणादिशक्तिः, अर्थात् चैतन्यगुणो नास्ति तदा ब्रह्मापि सांख्यमताभिमतजडप्रधानवदेव भवेत्।

आचार्यश्रीकण्ठेन उपनिषद्वाक्याधारेणैव ब्रह्मणो गुणवत्ता व्यवस्थापिता। यत्र श्रुतिषु गुणोपाधिनिषेधो मिलति तत्र प्राकृतगुणनिषेधो हेयगुणराहित्यमितिवा तात्पर्यं स्वीकर्तव्यम्। 'नित्यं विभुं सर्वगतं महान्तम् इत्यादिश्रुतिषु ब्रह्मणो नित्यत्वं सर्वगतत्वं विभुत्वगुणयोगित्वादिसकल-

[1]ब्र.सू.श्रीकण्ठ.भा १-१-२२
[2]ब्र.सू.श्रीकण्ठ.भा १-१-२१
[3]ब्र.सू.श्रीकण्ठ.भा १-४-२१
[4]ब्र.सू.श्रीकण्ठ.भा १-१-२
[5]ब्र.सू.श्रीकण्ठ.भा ३-३-४०
[6]तै.उप. १-६-२
[7]ब्र.सू.श्रीकण्ठ.भा ४-३-२१
[8]ब्र.सू.श्रीकण्ठ.भा १-१-२, २-३-१९
[9]ब्र.सू.श्रीकण्ठ.भा ४-४-२१
[10]ब्र.सू.श्रीकण्ठ.भा ४-४-१४
[11]ब्र.सू.श्रीकण्ठ.भा १-२-९
[12]ब्र.सू.श्रीकण्ठ.भा २-१-३१
[13]श्वे.उप.६-१९
[14]शि.म.दी२-२-३८, १-४-२७
[15]ब्र०सू०श्रीकण्ठ.भा०, १-१-१
[16]ब्र०सू०श्रीकण्ठ.भा०, १-१-१
[17]ब्र०सू०श्रीकण्ठ.भा०, ३-२-११
[18]छा०उप०, ३-१४-२
[19]ब्र०सू०श्रीकण्ठ.भा०, १-१-१२
[20]ईक्षतेर्नाशब्दम्। ब्र०सू०, १-१-५

कल्याणगुणमण्डितत्वममुष्य प्रमाणित तथा 'निर्गुणं निरञ्जनम्' इत्यादिश्रुतिवाक्यद्वारा ब्रह्मणि ईर्ष्याद्वेषलोभमोहादीनां हेयगुणानां निषेधः कृतोऽस्ति। [1] अतो ब्रह्म प्रकारशून्यं गुणशून्यं वेति नार्थो भवति।

वस्तुत आचार्यश्रीकण्ठेन निर्गुणवस्तुखण्डने न्याय वैशेषिकदर्शनमनुसृतम्। न्यायदर्शनमते आत्मा नास्ति निर्गुणो ज्ञानस्वरूपो वेति। आत्मा खलु ज्ञानाधिकरणमिति।[2] आत्मशब्देन जीवात्मपरमात्मनोरुभयोर्ग्रहणम्। अतो न्यायमते परमात्मा ज्ञानाश्रयोऽस्ति। ज्ञानं तदनुसारेण आत्मगुणः। आत्मनो विशेषगुणेषु ज्ञानं यद् बुद्धिरित्यप्युच्यते, तदात्मगुणो मन्यते। ज्ञानं समवायसम्बन्धेन आत्मनि तिष्ठति अत आत्मनः तद्गुणे चैकोऽपरः सम्बन्धोऽप्युपतिष्ठते। [3] इदं भेदत्रयं खलु आत्मविषये अद्वैतवेदान्तिनो न स्वीकुर्वन्ति। आचार्यो श्रीकण्ठः कथयति यन्निर्गुणे ब्रह्मणि किमपि प्रमाणं नास्ति। प्रमाणं सगुणं सविशेषमेव साधयति। [4] प्रत्यक्षप्रमाणं रूपम्, रसम्, गन्धम्, स्पर्शं शब्दञ्चैतान् गृह्णाति। निर्विशेषब्रह्मण्येवविधः कश्चन धर्मो नास्ति। अत इदं ब्रह्म नास्ति प्रत्यक्षप्रमाणगम्यम्। स्वयम् अद्वैतवेदान्तिनो वदन्ति यत् ब्रह्मवाङ्मनसोरगोचरमस्ति। अतो ब्रह्म येन विधिना नास्ति शब्दवेद्यम्, तनैव विधिना मनोबुद्धिविषयोऽपि न भवति। नास्ति यत् प्रत्यक्षगोचरं तदनुमानवेद्यमपि न भवति। अनुमानस्य कृते व्याप्तिरपेक्ष्यते। व्याप्तिग्रहणार्थं प्रत्यक्षं काम्यते। येन पुरुषेण नैकदापि वह्निधूमयोः साहचर्यं दृष्टं, स धूमं प्रत्यक्षं दृष्ट्वाऽपि न कदापि बह्निमनुमानेन ज्ञातुं शक्नोति। अतः प्रकृतस्थलेऽपि निर्गुणस्य ब्रह्मणोऽनुमानमसम्भवम्। अनेन प्रकारेण निर्गुणब्रह्मणि शब्दप्रमाणमपिदुर्लभम्। शब्दस्य अर्थात् शब्दप्रमाणस्य गतिर्निर्गुणे ब्र ह्मणि संभवा नास्ति।[5] यदि चाद्वैतवादिनो वदेयुर्घटोऽस्ति पटोऽस्ति, इति सत्ता पक्षेऽस्ति किन्तु शैवविशिष्टादर्शनवादिनो तत्तत् शब्दगुणादिविशिष्टविशेषवस्तु प्रत्यक्षं कुर्वन्ति।

यदि सर्वत्रैका सत्ता प्रत्यक्षीक्रियते, तदा गोक्रयार्थी जनो महिषं दृष्ट्वा तं न परित्यजेत् अपि तु महिषं क्रीत्वाऽपि कृतार्थः स्यात्, सत्ताया अभेदात्। इदमपि विचारणीयम् यदि सर्वत्रैका सत्ता गृह्यते लक्षणज्ञानान्तरं नाश्वज्ञानमपूर्वं भवेत्। एवं भूते सति ज्ञानधारावाहि ज्ञानं भवेत् गृहीतग्राहिज्ञानत्वेन पाश्चात्यज्ञानेषु स्मृतिज्ञानमित्याभिधानं स्यान्न प्रत्यक्षज्ञामिति। अतः पूर्वोक्तक्षेपनिराकृतये अद्वैतवादिभिः मन्तव्यं यद् गवाश्वादिज्ञाने जात्याकृतिविशिष्टवस्तु प्रत्यक्षं भवति न जातिमात्रं सत्तामात्रमिति। प्रत्यक्षद्वारा विशेषवस्तुग्रहणे सत्येव वस्तूनां परस्परं भेदो ज्ञायते नान्यथा वस्तुभेदेनैव वस्तूनां परस्परव्यावृत्तिज्ञानं भवति। गौर्हि स्वविशेषगुणेनाकृत्या चाश्वादिभ्यो भिद्यते। इत्थमेव कृष्णा गौः शुक्ला नास्ति इति स्वगुणेनापि व्यावर्तते। सत्तामात्रग्रहणे परस्परं वस्तुभेदग्रहणं दुष्करं, तथा द्वैतवादिनो निर्विशेषसत्तायां रूप-रस-गन्धादीन् न स्वीकुर्वन्ति, न तदा घटोऽस्ति, पटोऽस्ति इति कृत्वा सत्ताप्रत्यक्षं केन रूपेण कुर्वन्ति। यदि च निर्विशेषसत्ताप्रत्यक्षमस्ति तदा निर्विशेषसत्ताप्रतिपादिकाः श्रुतयोऽनुवादिकाः स्युः। श्रीकण्ठमते नास्ति निर्विशेषसत्ता, सा सर्वत्र सविशेषाऽस्ति।[6]

आचार्यश्रीकण्ठो निर्विशेषब्रह्मणि अप्रमाणत्वात् तस्य लक्षणमपि अशक्यसम्भवं ब्रूते, लक्षणस्य हि परस्परव्यावृत्तिः प्रयोजनं कथ्यते। वस्तुनि केचन असाधारणधर्मास्तिष्ठन्ति, तेषां वर्णनं लक्षणे विधीयते। एतद् साधारणधर्मघटितवस्तु परस्मात् भिन्नत्वेन बोध्यते स्वसाधारणधर्मेण एव। यथा कम्बुग्रीवादिसत्यम् इति घटस्य लक्षणमस्ति, यतोहि तल्लक्षणं घटं पटादिभ्यो व्यावर्तयति।[7] ब्रह्मणि नैतादृशं लक्षणमस्ति, यतोऽद्वैतमते ब्रह्म निर्वशेषमस्ति केनापि कारणेन तस्मिन् तादृशो गुणक्रियादिसम्बन्धो नास्ति। उपनिषत्सु 'सत्यं ज्ञानमनन्तं ब्रह्म' विज्ञानमानन्दं ब्रह्म इत्यादिकं स्वरूपलक्षणम्, 'यतो वा इमानि भूति जायन्ते' इत्यादितटस्थलक्षणमुक्तमस्ति। निर्विशेषब्रह्मणि यथोक्तस्वरूपलक्षणं तटस्थलक्षणं चोभयमपि स्थितिपदं न लभते।[8] 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र भिन्नार्थकानि सकलानि पदानि सन्ति। भिन्नान् तान् अर्थान् अभिधायकानि पदानि कस्मिञ्चिद् विशिष्ट एवार्थे सामानाधिकरण्येन समन्वयन्ति। श्रीरामानुजाचार्येण 'प्रवृत्तिनिमित्तभेदेनैकार्थवर्तित्वं सामानाधिकरण्यम्' इत्थं सामानाधिकरण्यस्य लक्षणमभिहितम्। अर्थादभिन्नार्थानि पदानि विशिष्टमेकमर्थं बोधयन्ति चेत्तदा सामानाधिकरण्यमित्युच्यते। 'नीलोत्पलम्' इत्यत्र यथा नीलपदस्य नीलमित्यर्थोऽस्ति उत्पलपदस्य उत्पलमिति। [9] परस्परं भिन्नमर्थमभिधाय ते विशिष्टमेव वस्तुबोधः यतोऽर्थात् नीलगुणाविशिष्टोत्पलं बोधयत्। इत्थमन्यत्र वाक्ये बोध्यव्यम्। प्रकृतेऽपि सत्यादिपदानि प्रत्येकं स्वयमर्थं बोधयित्वा विशिष्टार्थ एव समन्वितानि स्युः इति शम्।

**विज्ञानामृतभाष्यदिशा ब्रह्मणः स्वरूपविमर्शः***

[1] ब्र०सू०श्रीकण्ठ.भा०, पृ० १२६
[2] तर्क०स० (आत्मनिरूपणप्रकरणम्), पृ० १०
[3] न्या०सू० १-१-१०
[4] ब्र०सू०श्रीकण्ठ.भा०, पृ० १२६
[5] ब्र०सू०श्रीकण्ठ.भा०, पृ० ७३
[6] ब्र०सू०श्रीभा०, पृ० ७८
[7] वै०कौ०प्र०, १-१-१
[8] वै०कौ०प्र०, १-१-१
[9] ब्र०सू०श्रीण्ठ.भा०, पृ० १२३

***Ananya Sarkar**
PhD Research Scholar, University of Calcutta

विज्ञानामृतभाष्यदिशा किं तावद् ब्रह्मणः स्वरूपमस्तीति प्रश्ने सति "अस्य जगतो नामरूपाभ्यां व्याकृतस्य चेतनाचेतनरूपस्य प्रतिनियतदेशकालसंस्थानव्यापारादिमतोऽचिन्त्यरचनात्मकस्य जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवं रूपं जन्मादिषट्कं यतः परमेश्वरादन्तर्लीनप्रकृतिपुरुषाद्यखि-लशक्तिकात् स्वतश्चिन्मात्राद् विशुद्धसत्त्वाख्यमायोपाधिकात् क्लेशकर्मविपाकाशयैरपरामृष्टाच्चेतनविशेषाद् भवति, आकाशादिव महावायुर्महाजलादिव च पृथिवी, पृथिव्या इव च स्थावरजङ्गमादिकं, तद् ब्रह्मेति वाक्यविशेषः"[1]इति भाष्यवचनात् अस्माभिः वक्तुमिदं शक्यते यत्–"क्लेशकर्मविपाकशयैरपरामृष्टः पुरुषविशेष ईश्वरः"[2] इति। अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः।(योगसूत्रम्– २.३) धर्माधर्मरूपं कर्म तेषां संस्कारः। विपाको भवति सति मूले तद्विपाको जात्यायुर्भोगाः।(योगसूत्रम्– २.१३) अस्य कर्मफलस्य अनुरूपाः वासना भवन्ति आशयः। अपरामृष्टो भवति अनारोपितः असंस्पृष्टो वा। एते धर्माः ईश्वरे आरोपिता न भवन्ति। ईश्वरस्तु त्रिकालातीतः त्रिगुणातीतः पुरुषविशेषः अपरिणामी। पुरुषसूक्तस्य प्रथमो मन्त्रो भवति सहस्रशीर्षा पुरुषः इति।

अस्य पुरुषस्य पूर्वमन्यत् किमपि नासीत् तदपि समर्थयन्ती श्रुतिः–"आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्"[3]इति। अयम् ईश्वररूपः आत्मा एव पूर्वे विद्यमानः आसीत्, अन्यस्य कस्यचित् अस्तित्वं नासीत्। तस्माद् आत्मपुरुषः एव ईश्वरः। "तत्र निरतिशयं सर्वज्ञवीजम्[4]" इति। ईश्वरे सर्वज्ञवीजस्य अत्यन्तातिशयता विद्यते। ईश्वरस्य ज्ञानमन्यः कोऽपि अतिक्रामतुं न समर्थः तस्माद्धेतोःतस्य ज्ञानमेव सर्वज्ञतायाः साध्यमस्ति। तथा च अनुमानं भवति 'सर्वज्ञवीजः काष्ठाप्राप्तः सातिशयत्वात् परिमाणवत्' इति।

"पूर्वेषामपि गुरुः कालेनानवच्छेदात्"[5]इति। 'यतो वै इमानि भूतानि जायन्ते'[6], 'सत्यं ज्ञानमनन्तं ब्रह्म'[7] इति वाक्यद्वयमस्ति जन्माद्यधिकरणस्य विषयः। एकस्य उभयकारणत्वस्य असम्भवसम्भवाभ्यां भवति संशयः श्रुतौ ब्रह्मणः तटस्थं स्वरूपं च लक्षणं नास्ति उत वा अस्ति। एतद्वाक्यद्वयं किं ब्रह्म लक्षयति न वेति। 'यतो वै इमानि भूतानि जायन्ते' इति श्रुत्युक्तस्य जन्मादेः अन्यनिष्ठत्वात् ब्रह्मणः तटस्थलक्षणं तथा सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुत्युक्तस्य सत्यादेः च अप्रसिद्धितः ब्रह्मणः स्वरूपलक्षणं न हि विद्यते। तदा भाष्यकारेण विज्ञानभिक्षुणा उच्यते यत्– जन्मादेः अन्यनिष्ठत्वेऽपि स्रग्भुजङ्गवद् ब्रह्मनिष्ठं कल्पितजगत्कारणत्वं स्याद् अतः ब्रह्मणः तटस्थलक्षणं सिध्यति। भिन्नार्थानामपि पितृसुतभ्रातृजामात्रादीनां शब्दानां एकदेवदत्तपर्य्य-वसायित्वे यथा न विरोधः तथा लौकिकानि एतानि सत्यादीनि अखण्डं हि लक्षयन्ति। अतः ब्रह्मणः स्वरूपलक्षणमपि सिध्यति। एतस्य एव विचारः 'जन्माद्यस्य यतः' इत्यस्मिन् कृतो वर्तते। तद्यथा, प्रत्यक्षा-द्युपस्थापितस्य विचित्रस्यास्य जगतः जन्मादिः यस्य जन्मस्थितिभङ्गस्य तत् जन्मादि, जन्मस्थितिभङ्ग-मित्यर्थः। परमार्थतो निर्गुणमपि ब्रह्म व्यवहारतः अनिर्वचनीयमायाशक्तियोगेन सगुणमपि। अतः दृष्टिभेदेन उभयस्वरूपसिद्ध्या न विरोध इति भावः।

शास्त्रयोनित्वाधिकरणे दृश्यते यत्, 'अस्य महतो भूतस्य निःश्वसितमेतत् यत् ऋग्वेदः'[8] इत्यादिश्रुतौ निःश्वास इव अप्रयत्नेनैव ब्रह्मणो वेदकर्तृत्वमुक्तमस्ति। अत्र इयं श्रुतिः विषयः। तत्र वेदस्य सापेक्षत्वप्रसङ्गाप्रसङ्गाभ्यां भवति संशयो यत् ब्रह्म वेदस्य कर्तृ अस्ति न वेति। श्रुतौ एव 'विरूपो नित्यया वाचा'[9] इत्येवं वेदस्य नित्यत्ववर्णनात् तत् ब्रह्म वेदस्य कर्तृ भवितुमर्हति। कुतः उच्यते– अस्य महतो भूतस्य इत्यादिश्रुतौ, अनादिनिधना नित्या वागुत्सृष्टा इत्यादिस्मृतौ च निःश्वासिताद्युक्तेः।'तस्मात् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे'[10] इत्यादियज्ञशब्दवाच्यात् ब्रह्मणः विस्पष्टमेव वेदोत्पत्तिश्रवणात् च। ननु उत्पद्यमानस्य वेदस्य कथं नित्यत्वं, तदा भाष्यकारेण उच्यते यत्, पूर्वसाम्यतः नित्यत्वं सिद्ध्यति। तस्माद्धेतोः सर्वाभासिवेदस्य कर्तृत्वात् ब्रह्म सर्वविद् भवेत्।

पुनश्च दृश्यते यत्, 'तं तु औपनिषदं पुरुषं पृच्छामि'[11] इत्यादिश्रुतौ परब्रह्मरूपस्य पुरुषस्य उपनिषद्वेद्यत्वं प्रतीयते। अत्र मानान्तरगम्ये भूतार्थे शास्त्रप्रामाण्यस्य सम्भवासम्भवाभ्यां भवति संशय; अस्य ब्रह्मणः अन्यमेयतापि अस्ति, अथवा वेदैकमेयता। तथा च अनुमानं द्रष्टुं शक्यते यत्, 'घटवत् सिद्धवस्तुत्वात् ब्रह्म अन्येनापि प्रमाणेन मीयते' इति। तथा च भाष्यकारेण उच्यते यत्, रूपादिलिङ्गादिराहित्यात् अस्य ब्रह्मणः मान्तरयोग्यता नास्ति। तं तु औपनिषदं पुरुषं पृच्छामि, नावेदविन्मनुते तत् वृहन्तम्[12] इत्यादौ च अस्य ब्रह्मणः वेदैकमेयता प्रोक्ता, तस्माद्धेतोः ब्रह्म वेदैकमेयमिति।

अन्तरधिकरणे पुनो दृश्यते यत्, छान्दोग्यस्य प्रथमाध्याये उद्गीथोपासनायाम् उपसर्ज्जनानि उपास्यानि अभिधाय प्रधानमुपास्यमिति अधिधातुमिदमाम्नायते यत्, 'अथ यैष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'[13] इति। वाक्यमिदमत्र विषयो वर्तते। तत्र रूपवत्त्वश्रवणात् सर्वपापसंस्पर्शश्रवणात् च अयं संशयो भवति असौ हिरण्मयः विद्याकर्मातिशयवशात् जगदधिकारं निष्पादयन् वर्तमानः कश्चित् देवात्मा स्यात् उत वा सर्वगतत्वात् आदित्यमण्डलेऽपि वर्तमानः परमेश्वरः स्यात्। पूर्वपक्षरूपेण द्रष्टुं शक्यते यत्, 'ये च अमुष्मात् पराञ्चः लोकाः तेषाञ्च ईष्टे देवकामानां च'[14] इति ऐश्वर्यमर्यादोक्तिः अन्तरादित्ये इति आधारोक्तिः हिरण्मयः इति रूपोक्तिः। एवम्प्रकारेण मर्य्यादाधाररूपोक्तेः असौ पुरुषः देवतात्मा एव न ईश्वरः। न हि

---

[1]ब्र.सू.वि.मृ.भा.१.१.२
[2]यो.सू.१.२४
[3]ऐ.उप १.१.१
[4] यो.सू.१.२५
[55]यो.सू. १.२६
[6]तै.उप.३.१
[7]तै.उप.२.१
[8]बृ.उप.२.४.१०
[9]ऋक्.सं. ८.६४.६
[10]ऋक्.स.१०.९०.९
[11]बृ.उप. ३.९.२६
[12]तै.ब्रा.३.१२.९
[13]छा.उप.१.६.६
[14]छा.उप. १.६.८

सर्वेश्वरस्य सर्वाधारस्य परमेश्वरस्य ऐश्वर्य्यमर्य्यादाधाररूपाणि सम्भवन्तीति भावः। एवं सति भाष्यकारेण उच्यते यत् "सा एव ऋक्, तत्साम"[1] इत्यस्मिन् वाक्ये हिरण्मयस्य पुरुषस्य ऋक्सामाद्यशेषजगदात्मकत्वरूपात् सर्वेभ्यः पाप्मभ्य उदितः[2] इति वचनात् सर्वदुरितराहित्यात् च अस्यौ हिरण्मयः पुरुषः ईश्वरः मतः। उपाधिगाः मर्यादाद्याः उपास्त्यर्थं सोपाधिके ईशेऽपि स्युः। अन्तस्तद्धर्मोपदेशात्[3] सूत्रे दृश्यते यत्, अन्तः अर्थात् यैषः अन्तरादित्ये[4], यैष अन्तरक्षिणि[5] इति अत्र यः श्रूयमाणः, सः परमेश्वर एव न तु संसारी, तद्धर्मोपदेशात् अर्थात् तस्य परमेश्वरस्य ये सर्वपापराहित्यादयो धर्माः, तेषामस्मिन् वाक्ये उपदेशत्वात्। भेदव्यपदेशाच्चान्यः[6] इत्यस्मिन् सूत्रे दृश्यते यत्, यः आदित्ये तिष्ठन् आदित्यात् अन्तरः, यमादित्यो न वेद, यस्य आदित्यः शरीरं, य आदित्यमन्तरः यमयति, एषः ते आत्मा अन्तर्यामी अमृतः[7] इति अन्तर्यामिब्राह्मणे आदित्यशरीराभिमानिनः जीवात् अन्यस्य परमात्मनः अन्तर्यामितया भेदव्यपदेशात् अर्थात् भेदेन कथनात् अपि च अन्य आदित्याक्षोरन्तः श्रूयमाणः पुरुषः आदित्यशरीराभिमानी जीवात् भिन्नः। अतः परमेश्वरः एव अक्षादित्ययोः उपास्य इति सिद्धो भवति।

प्रकृतिपुरुषाद्यखिलशक्तिः[8] यस्मिन्अन्तर्निहिता, यः स्वतः चिन्मात्रस्वरूपः, विशुद्धसत्ताख्यमायायस्यउपाधिः, अविद्यादिक्लेश-कर्म-तज्जन्यफलभोग-तज्जनितसंस्कारैः सह असम्बद्धः[9], तादृशचेतनविशेषएवपरमेश्वरः।

शालावत्येन महर्षिणा सर्वलोकाधारवस्तुनि पृष्टे सति प्रवाहणो राजा उत्तरमाह यत्, आशाक इति होवाच, सर्वाणि ह वै इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रति अस्तं यान्ति, आकाशो हि एव एभ्यो ज्यायान् आकाशः परायणम्[10] इति आकाशाधिकरणस्य विषयवाक्यं वर्तते। आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रयोगदर्शनात् अत्र संशयो भवति यत्, आकाश इति होवाच इत्यत्र आकाशशब्देन खं बोध्यते उत वा ब्रह्मेति।

पूर्वपक्षरूपेण दृश्यते, आकाशशब्दस्य तत्र भूताकाशे रूढत्वात् आकाशात् वायुः[11] इति श्रुतस्य च वाय्वादेः आकाशात् सर्जनात् अपि अत्र आकाशः खं स्यादिति।

एवं सति भाष्यकारेण उच्यते यत्, सर्वाणि ह वै इमानि भूतानि इत्यत्र पठितेन असङ्कुचितसर्वशब्देन अत्र श्रुतस्य आकाशस्य साकाशशब्दजगदुत्पत्तिहेतुत्वात्, रूढिस्तु लौकिकी विुत एव अस्तु परन्तु, आकाशः वै नामरूपयोः निर्वाहिता[12] तथ च आकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते– ऋचो अक्षरे परमे व्योमन् यस्मिन् देवाः अधिविश्वे निषेदुः[13], सैषा भर्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता[14], कं ब्रह्म खं ब्रह्म[15], खं पुराणम्[16] इत्यादिषु श्रुतिवाक्येषु ब्रह्मणि एव आकाशशब्दस्य श्रौतरूढितः, किञ्च आकाशात् एव इति अत्रस्थ एवकारः कारणान्तरं व्युदस्यति। न चैतत् भूताकाशपक्षे सम्भवति, घटादिषु आकाशव्यतिरिक्तानां मृदादिकारणानामपि उपलम्भात्। ब्रह्मपक्षे तु ब्रह्मणः सद्रूपस्य सर्वानन्यतया कारणान्तरव्युदासः उपपद्यते। अतः आकाशात् एव इति अत्र पठितेन एवकारादिना च कारणान्तरव्युदासलाभात् अत्र ब्रह्म एव आकाशशब्दवाच्यं भवति। एतदेव साधयति आकाशस्तल्लिङ्गात्[17] इति सूत्रम्।

प्राणाधिकरणेऽपि दृश्यते यत्, प्रस्तावनाम्नः सामभागस्य देवतायां प्रस्तोत्रा पृष्टायाम् उषस्तिः उत्तरं ददौ यत् प्राण इति होवाच सर्वाणि ह वै इमानि भूतानि प्राणम् एव अभिसंविशन्ति[18] इति वाक्यमिदं विषयो भवति अस्याधिकरणस्य। अत्र प्राणशब्दस्य मुख्यप्राणे ब्रह्मणि च प्रयोगदर्शनात् संशयो भवति प्रस्तावदेवता प्राणः मुखस्थो वायुः ब्रह्मेति वा। पूर्वपक्षः कथयति यत्, यदा वै पुरुषः स्वपिति, प्राणं तर्हि वाग् अप्येति[19] इति श्रुतौ सुषुप्तिकाले इन्द्रियादीनां मुखविलान्तर्वत्तिणि प्राणवायोः लयो वर्ण्यते। अतः सुप्तौ अत्र प्राणवायोः भूतसारेन्द्रियक्षयात् प्रस्तावदेवता प्राणो मुखविलान्तर्वर्ती वायुः भवेत्। तदा भाष्यकारेण प्रतिपाद्यते यत्, विलयस्यास्य अक्षपरत्वे व्याख्यायमाने सर्वाणि ह वै इमानि भूतानि प्राणमेव अभिसंविशन्ति[20] इति सर्वभूतलयश्रुतेः सङ्कोचो भवेत्। अपि च अस्ति हि प्राणशब्दस्य ब्रह्मणि श्रौतरूढिः, प्राणस्य प्राणः[21], प्राणबन्धनं हि सोम्य मनः[22] इत्यत्र ब्रह्मविवक्षया द्वितीयप्राणशब्दस्य प्रयोगात्। प्राणम् एव[23] इत्यत्र पठितेन च एव कारेण लयाधारान्तरं व्युदस्यते। तेन आकाशशब्दवत् प्राणशब्दोऽपि ब्रह्मपदवाच्यः।

---

[1]छा.उप. १.७.५
[2]छा.उप.१.६.७
[3]ब्र.सू.१.१.२०
[4]छा.उप.१.१.६
[5]छा.उप.१.७.५
[6]ब्र.सू. १.१.२१
[7]बृ.उप. ३.७.९
[8]ब्र.सू.वि.मृ.भा. २-१-३०
[9]पात.द.१-२४
[10]छा.उप.१.९.१
[11]तै.उप. २.१
[12]छा.उप.८.४.१
[13]ऋक्.सं. १.१६४.३९
[14]तै.उप.३.६
[15]छा.उप.४.१०.४
[16]बृ.उप.५.१
[17]ब्र.सू.१.१.२२
[18]छा.उप.१.१.१५
[19]शत.ब्रा.१०.३.३.३६
[20]छा.उप.१.११.५
[21]केन.उप.२
[22]छा.उप.६.८.२
[23]छा.उप.१.११.५

## कालिकायाः स्वरूपे ब्रह्मवादस्य निरूपणम्*

शास्त्र-क्रियानुष्ठान-मन्त्रविद्यादिभिः शब्दैः तन्त्रशास्त्रं प्रतिपाद्यते। वस्तुतः आगमशास्त्रे अस्य शास्त्रस्य अर्थः शिवशक्तितत्त्वविज्ञानमिति। तन्त्रम् साधनशास्त्रमेव। अनेन शास्त्रमार्गेण आगमोक्ततत्त्वाना-मुपलब्धिर्जायते। तनोति विस्तारं करोति, तन्यते विस्तार्यते ज्ञानं अनेन इति तन्त्रम्, तनोति विपुलम् अर्थं तत्त्वतन्त्रसमन्बितम् एनञ्च कुरुते यस्मात् तन्त्रं इत्यभिधीयते।

अस्य शास्त्रस्य आदिक्षेत्रं भारतवर्षमेव। पण्डितानां मतानुसारं वेदसमकाले एव तन्त्रशास्त्रं आभारते आदृतमासीच्च। अध्यापकचिन्ताहरण-चक्रवर्तिमहोदयः स्वकृतौ “The Tantra : Studies of their Religion and Literature इतिसंज्ञके पुस्तके अलिखत् Elements of the various Tantrika rites are distinctly traceable to Vedic rites….They are to be found even in the earliest Vedic works e.g the Rigveda, as also in other parts of the Vedic literature”[1]।

तन्त्रस्य आचारगतप्रभेदात् आभारतभूमिः विष्णुक्रान्ता, रथक्रान्ता, अश्वक्रान्ता गजक्रान्ता वा इति नाम्ना क्रान्ता त्रयेण विभज्यते।

१.विष्णुक्रान्ता- विन्ध्यपर्वतस्य पूर्वस्यां दिशि चट्टग्रामपर्यन्तं ये प्रदेशाः वर्तन्ते ते विष्णुक्रान्तायाम् अवस्थिताः।

२.रथक्रान्ता- विन्ध्यपर्वतस्य वायुकोणे ये प्रदेशाः वर्तन्ते ते रथक्रान्तायाम् अवस्थिताः।

३. अश्वक्रान्ता/गजक्रान्ता- विन्ध्यपर्वतस्य दक्षिणस्यां दिशि दाक्षिणात्यपर्यन्तं ये देशसमूहः वर्तते सः अश्वक्रान्तायाम् अवस्थितः।

क्रान्ताप्रभेदात् वङ्गदेशः विष्णुक्रान्तायाम्। अस्यां विष्णुक्रान्तायां कालीकूलस्य प्रभावाधिक्यं वर्तते। तन्त्रे शक्तिरूपायाः कालिकायाः स्वरूपं गुह्यातिगुह्यम्। तन्त्रशास्त्रे यः शिवशक्तिरूपेण प्रतिभाति दार्शनिकदृष्ट्या सा एव शिवशक्तिः स्वस्वदार्शनिकशाखासु तदनुगुणं प्रतिपादिता भवति।

वेदान्तानाम् उपनिषत् प्रमाणं इति वेदान्तसारे प्रतिपाद्यते। तथैव ऐतिहासिकानां मतानुसारं तन्त्रस्य आधारः अपि उपनिषदेव। ललितासहस्रनामग्रन्थस्य भाष्येकारस्य पण्डितभास्कररायस्य मतानुसारं तन्त्रस्य सृष्टिः विकासश्च उपनिषदः अंशरूपेण अभवत्। यथा श्रौतसूत्रं

*तथागत मण्डलः
शोधच्छात्रः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

[1] तन्त्रे तत्त्व ओ साधना- पृ० ४

धर्मसाहित्यञ्च वैदिकसाहित्यस्य अंशरूपेण परिगण्यते[1]। यस्य तन्तस्य आधारः उपनिषद्, तस्मिन् तन्त्रे प्रतिपाद्यमानाः ये देव्यः सन्ति तेषु कालिकायाः दार्शिनिकरीत्या बहुधा व्याखानमुपलभ्यते।

बृहद्धर्मपुराणे उच्यते-

**काली-तारामहाविद्या षोडशी-भुवनेश्वरी।**
**भैरवी छिन्नमस्ता च सुन्दरी वगलामुखी।**
**धूमवती च मातङ्गी महाविद्या दशैव ताः।।**[2]

दशमहाविद्यासु प्रथमा विद्या काली इति आख्याता। यस्याः कालिकायाः तत्वम् अतीव निगुढमस्ति। वस्तुतः तन्तशास्त्रे बहुविधायाः कालिकायाः वर्णनं प्राप्यन्ते। यथा- दक्षिणाकालिका, सिद्धकालिका, गुह्यकालिका, श्रीकालिका, भद्रकालिका, चामुण्डाकालिका, श्मशानकालिका, महाकालिका, कालकाली, कामकलाकाली, धनकालिका, चण्डिकालिका इति। एताषु दक्षिणाकालिकायाः विषये एव बहुधा दर्शनिकरीत्या व्याख्यातमस्ति।

आपाततः दक्षिणाकालिकायाः या प्रतिमा अस्माभिः दृश्यते तस्यां सा चतुर्भुजा शवरूपशिवहृदयोपरि संस्थिता[3]। परन्तु दार्शनिकाः रूपमिदं दार्शनिकरीत्या प्रतिपादितवन्तः। तन्त्रशास्त्रे देव्याः कालिकायाः तत्त्वं कदाचित् परब्रह्मरूपेण कदाचित् मायारूपेण प्रतिभातः भवति। अधुना अस्याः विषये यत् ब्रह्ममयरूपं गुह्यं तत्त्वमस्ति तत् अद्वैतमुखेन वर्ण्यते।

**कालिकायाः स्वरूपे ब्रह्मत्त्वप्रतिपादनम्**

कालिका इति शब्दस्य वर्णविन्यासेन क- आ- ल- इ- क- आ इति प्राप्यते। अधुना विमलानन्दनाथस्य स्वरूपव्याख्यानुसारेण एतेषां वर्णानां अर्थविश्लेषणपुरःसरं कालिका ब्रह्मरूपिणी इत्यस्य प्रमाणं प्राप्यते। अस्यां व्याख्यायां विमलानन्दनाथेन आह "कालिके! क ब्रह्म[4], आ अनन्त[5], ल विश्वात्मा[6], इ सूक्ष्मा[7], क ब्रह्म, आ अनन्त इति कालिका, एतेन महादेव्या आद्यन्तरहितत्त्वम् अनन्तत्वं सूक्ष्मत्वं विश्वात्मकत्वं च सूचितम्"[8]। अतः कालिका इत्यनेन अनाद्यनन्तब्रह्मरूपिणीत्यर्थः प्रतिपाद्यते।

महानिर्वाणतन्त्रे कालिकायाः आद्यन्तरहितत्त्वम् अनन्तत्वं सूक्ष्मत्वं विश्वात्मकत्वञ्च सूचनाय उच्यते-

**सद्रूपं सर्वतोव्यापि सर्वमावृत्य तिष्ठति।**
**सदैकरूपं चिन्मात्रं निर्लिप्तं सर्ववस्तुषु।।**
**न करोति न चाश्नाति न गच्छति न तिष्ठति।**
**सत्यं ज्ञानमनाद्यन्तम् अवाङ्मनसगोचरम्।।**[9]

महानिर्वाणतन्त्रे उक्तम्- हे देवि त्वं सूक्ष्मरूपेण मायाहीना अव्यक्तरूपिणी निराकारा। तैथव त्वं मायया युतः स्थूलरूपेण व्यक्तरूपिणी साकारा। अतः त्वां वेदितुं कोऽपि योग्यो न भवति[10]।

अद्वैतवेदान्तप्रतिपादितः परबह्मणः स्वरूपलक्षणम्[11] आम्नातं तैत्तिरीयोपनिषदि- 'सत्यं ज्ञानमनन्तं ब्रह्म'[12] इति। सः एव नित्यशुद्धबुद्धमुक्तसत्यस्वभावः निर्गुणपरब्रह्म मायामाश्रित्य सगुणः भवति। तस्यैव सगुणब्रह्मणः उपासकैः उपसना क्रियते। निर्गुणब्रह्मणः तत्त्वं मनसेन्द्रिययोः अविषयः। मनसेन्द्रिययोः अविषयत्वे सगुणस्यैव उपासना क्रियते।वेदान्तसारे उक्तम्- उपासना इत्युक्ते सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि। यथा एकं विन्दुमवलम्ब्य तस्मिन् विन्दौ मनस्संयोगे सौविध्यं जायते तथैव निराकारोपासनायाः सूक्ष्मत्वात् काठिन्यत्वात् च साकारमवलम्ब्य उपासकः सारल्येन निराकारं प्रति गन्तुं शक्नोति।

तथैव उक्तं महानिर्वाणतन्त्रे- उपासकानां कार्यार्थं गुणक्रियानुसारेण अरूपायाः देव्याः कालिकायाः रूपं प्रकल्पितम्[13]। अर्थात् अरूपस्य रूपकल्पना उपासकानां उपासनायाः सिद्ध्यर्थम्।

अधुना जगतः लयप्रसङ्गे अरूपायां कालिकायां कथं कृष्णवर्णत्वस्य आरोपः। तस्मिन् विषये आलोच्यते महानिर्वाणतन्त्रोक्तश्लोकैः-

**श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते।**

---

[1]तन्त्रे तत्त्व ओ साधना- তন্ত্রের সৃষ্টি ও বিকাশ হয়েছিল উপনিষদেরই অংশরূপে,- যেমন শ্রৌতসূত্র ও ধর্মসাহিত্যগুলিকে বৈদিক-সাহিত্যের অংশ বলে গণ্য করা হয়।
[2]बहद्धर्मपुराणम्- मध्यखण्डम्।६।१२६।
[3]वृहत्तन्त्रसारः- पृ० ३८७- शवरूपमहादेवोहृदयोपरिसंस्थिता।
[4]तन्त्राभिधान(T. T., Vol.1)- ब्रह्म सृष्टिः खादिमश्च क्रोधीशश्च स्वरान्तकः। पृ० ५५।
[5]तन्त्राभिधान(T. T., Vol.1)- मुखवृत्तं गुरुः शेषो दीर्घोऽनन्तो मरुत् तथा। पृ० ५३।
[6]तन्त्राभिधान(T. T., Vol.1)- विश्वात्मा मन्दौ वलवान् मेरुर्गिरिः। पृ० २०।
[7]तन्त्राभिधान(T. T., Vol.1)- इःसूक्ष्मा शाल्मली विद्या चन्द्रः पूषा सुगुह्यकः। पृ ० ६।
[8]कर्पुरादिस्तोत्रम्- स्वरूपव्याखा। ३।
[9]महानिर्वाणतन्त्रम्- ३।२७-२८।
[10]महानिर्वाणतन्त्रम्- त्वमेव सूक्षा स्थूला त्वं व्यक्ताव्यक्तस्वरूपिनी।
निराकारापि साकारा कस्त्वां वेदितुमर्हति।।४।१५
[11]वेदान्तद्रशनम्- स्वरूपं सत् व्यावर्तकम्। भावदीपिका। पृ० ९७।
[12]तैत्तिरीयोपनिषद्- २। १। १।
[13]महानिर्वाणतन्त्रम्- उपासकानां कार्याय पुरैव कथितं प्रिये।
गुणक्रियानुसारेण रूपं देव्याः प्रकल्पितम्।।१३।४

**प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे॥**
**अतस्तस्याः कालशक्तेः निर्गुणाया निराकृतेः।**
**हिताया: प्राप्तयोगानां वर्णः कृष्णो निरूपितः॥**[1] इति।

यथा श्वेतपीतादिवर्णाः कृष्णवर्णे विलीयन्ते तथैव सर्वभूतानि अपि कालिकायां प्रविशन्ति। तस्मात् ये योगिजनाः मोक्षोपायभूतब्रह्मज्ञानं लब्धवन्तः ते अस्याः कालशक्तेः निर्गुणायाः निराकृतेः वर्णः कृष्ण इति निरूपितवन्तः।

तान्त्रिकगुरुपुस्तके निगमानन्दसरस्वतिना उक्तम्- पराशक्तिः अरूपा तस्मात् वर्णहीना। वैज्ञानिकानां मतानुसारं यत्र सर्ववर्णानाम् अभावः सः एव कृष्णवर्णः। तेषां मतानुसारं अस्माकं नेत्राभ्यां यः ज्योतिः धारणे अक्षमः सः निविडकृष्णवर्णरूपेण प्रतिभाति। तस्मात् महाज्योतिःस्वरूपा कालिका कृष्णवर्णा। सा महाज्योतिस्वरूपा तु केवलं ज्ञाननेत्रेणैव दर्शनयोग्या।[2] परब्रह्मणः महाज्योतिःस्वरूपस्य प्रसिद्धिः उपनिषदि अपि गीयते। मुण्डकोपनिषदि आम्नातं "तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः"।[3] इति।

**शिवशक्तितत्त्वस्य ब्रह्ममायारूपेण प्रतिपादनम्**

निगमानन्दसरस्वती तस्य तान्त्रिकगुरुः इत्यस्मिन् पुस्तके अलिखत- "वेदान्ते माया मिथ्या। अधिष्ठानरूपब्रह्मणि एव मायायाः प्रतीतिः भवति। तस्मात् अधिष्ठानव्यतिरिक्तायाः मायायाः पृथक्सत्तायाः प्रतीतिः न सम्भवति। शवरूपशिवः निष्क्रियब्रह्म। तं निष्क्रियं ब्रह्ममश्रित्य ब्रह्मशक्तिः क्रियाशीला भवति। ब्रह्म निर्गुणं अस्ति। तस्मात् निर्गुणस्य उपसना कर्तुं न शक्यते। अतः शक्तेः सहयोगेन तस्य निर्गुणब्रह्मणः उपसना क्रियते। अतः तान्त्रिकानां शक्तेः उपासना सगुणब्रह्मोपासना। वस्तुतः आद्याशक्तिमहामाया सगुणब्रह्म एव। शवरूपी शिवः तस्य आलम्बनमात्रम्। "[4]।

अद्वैतवेदान्तप्रतिपादितं परब्रह्म यथा मायाशक्तिं विहाय न तिष्ठति तथैव तन्त्रशास्त्रे शिवशक्तेः अपि अभेदत्त्वं प्रतिपाद्यते। स्कन्दपुराणस्य काशिखण्डे उक्तम्- "त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः"[5]। अस्मात् श्लोकात् शिवशक्त्याः अद्वैतत्त्वमवबुध्यते।

महानिर्वाणतन्त्रे ब्रह्ममायाविषये उक्तम्-

**स एक एव सद्रूपः सत्योऽद्वैतः परात्परः।**
**स्वप्रकाशः सदापूर्णः सच्चिदानन्दलक्षणः॥**
**निर्विकारो निराधारो निर्विशेषो निराकूलः।**
**गुणातीतः सर्वसाक्षी सर्वात्मा सर्वदृग्विभुः॥**
**गूढः सर्वेषु भूतेषु सर्वव्यापी सनातनः।**
**सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः॥**
**लोकातीतो लोकहेतुरवाङ्मनसगोचरः।**
**स वेत्ति विश्वं सर्वज्ञस्तं न जानाति कश्चन॥**
**तदधीनं जगत् सर्वं त्रैलोक्यं सचराचरम्।**
**तदालम्बनतस्तिष्ठेत् अवितर्क्यमिदं जगत्॥**
**तत्सत्यतामुपाश्रित्य सद्वद्भाति पृथक् पृथक्।**
**तेनैव हेतुभूतेन**[6] **वयं जाता महेश्वरि॥**
**कारणं सर्वभूतानां स एकः परमेश्वरः।**
**लोकेषु सृष्टिकारणात् स्रष्टा ब्रह्मेति गीयते॥**[7]

पुनः महानिर्वाणतन्त्रे परमाप्रकृतिमायाशक्तेः प्रसंशायामुच्यते- त्वमेव ब्रह्मणः मायाशक्तिः अस्ति। त्वत्तः एव जगतः सृष्टिः अभवत्[8]। श्वेताश्वतरोपनिषदि अपि ब्रह्ममयायाः विषये उक्त्वा जगदिदं तेषाम् अवयवभूतमस्ति इति आम्नातम्-

मायां तु प्रकृतिं[9] विद्यान्मायिनं[10] तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥[11]

तैत्तिरीयोपनिषदि आम्नातम्- 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति'[1]।

---

[1]महानिर्वाणतन्त्रम्- १३। ५- ६

[2]তান্ত্রিকগুরু- পরাশক্তি অরূপা সুতরাং বর্ণহীন, যেখানে সর্ব বর্ণের অভাব তাহাই নিবিড় কৃষ্ণবর্ণ,- এ কথা বিজ্ঞান সম্মত। বিজ্ঞান আরও বলে, যে জ্যোতিঃ আমাদের চক্ষু ধারণ করিতে পারে না, তাহাই নিবিড় কৃষ্ণবর্ণ দেখায়, তাই মহাজ্যোতিঃ কালী কৃষ্ণবর্ণা। কিন্তু জ্ঞাননেত্রে মহাজ্যোতিঃ রূপে দৃশ্যা হন।পৃ০ ৭১

[3]मुण्डकोपनिषत्- २।२।९।

[4]तान्त्रिक गुरुः- युक्तिकल्पापृ०- ५२-५३।

[5]स्कन्दपुराणम्- काशिखण्डः। १३। १६।

[6]अत्र हेतुभुत इति पदेन मयासहितब्रह्मणः सृष्टिः सूच्यते।

[7]महानिर्वाणतन्त्रम्- २।३४- ४०।

[8]महानिर्वाणतन्त्रम्- त्वं पराप्रकृतिः साक्षात् ब्रह्मणः परमात्मनः।
तत्त्वो जातं जगत् सर्वं त्वं जगज्जननी शिवे।४।१०।

[9]श्वेताश्वतरोपनिषद् (शाङ्करभाष्यम्)- मायां त्विति। जगत्प्रकृतित्वेनाधस्तात्सवत्र प्रतिपादिता प्रकृतिर्मायैवेति विद्याद्विजानीयात्।४।१०

[10]श्वेताश्वतरोपनिषद् (शाङ्करभाष्यम्)- महां श्चासाविश्वरश्चेति महेश्वरस्तं मायिनं मायायाः सत्तास्फूर्त्यादिप्रदं तथाधिष्ठानत्वेन प्रेरयितमेव विद्यादिति।४।१०

[11]श्वेताश्वतरोपनिषद्- ४।१०।

तथैव महानिर्वाण तन्त्रे उक्तम्-

**यतो विश्वं समुदभूतं येन जातञ्च तिष्ठति।**
**यस्मिन् सर्वाणि लीयन्ते ज्ञेयं तद् ब्रह्मलक्षणम्॥**

अस्मात् श्लोकात् ज्ञायते यतः जायते यस्मिन् जीवति यत्र लीयते तदेव ब्रह्म इति। अर्थात् जन्मस्थितलयः यस्मिन् भवति तत् एव ब्रह्म।

अधुना तन्त्रोपनिषदः श्लोकानां विचारेण दृश्यते अद्वैतवेदान्ते उपनिषदः प्रामाण्यमाश्रित्य यस्याः ब्रह्ममयायाः स्वरूपं प्रतिपाद्यते सा एव शिवशक्तिरूपा ब्रह्ममाया तन्त्रवचनैः समानरीत्या अद्वैतमुखेन एव प्रतिपादिता भवति।

छान्दोग्योपनिषदि हृदयपुण्डरीके[3] परमात्मनः उपलब्धेः स्थानमिति निश्चितम्।

तथैव महानिर्वाणतन्त्रे उच्यते-

हृदयकमलमध्ये निर्विशेषं निरीहं हरिहरविधिवेद्यं[4] योगिभिर्ध्यानगम्यम्।
जननमरणभीतिभ्रंशि सच्चित्स्वरूपं सकलभुवनबीजं ब्रह्म चैतन्यमीडे॥[5]

**सहायकग्रन्थावली**


दास उपेन्द्रकुमार,शास्त्रमूलक भारतीय शक्तिसाधना,प्रथमखण्ड, कलकाता : रामकृष्ण मिशन इनस्टिटिउट अव कालचार, २०११।
स्वामी प्रज्ञानानन्द, तन्त्र तत्त्व ओ साधना, प्रथमखण्ड, कलकाता: श्रीरामकृष्ण वेदान्त मठ, २०१८।
महानिर्व्वाण तन्त्रम्,सम्पा० ज्ञानेन्द्रनाथ तर्करत्न, कलकाता : नवभारत पावलिशार्स, बङ्० १४०९।
वृहत्तन्त्रसारः, सम्पा० चट्टोपाध्याय श्रीरसिकमोहन, कलकाता : नवभारत पावलिशार्स, बङ्० १३३९।
स्वामी विश्वरूपानन्दः, वेदान्तदर्शनम्, प्रथमः अध्यायः, कलकाता : उद्बोधन कार्यालय, १२०४।
भट्टाचर्य हंसनारायण, हिन्दुदेर देवदेवी उद्भव ओ क्रमविकाश, तृतीय पर्व, कलकाता : फार्मा केएलएम प्राइभेट लिमिटेड, २०१५।
वेदान्तसारः, कलकाता :उद्बोधन कार्यालय, २०१३।
ईशादि नौ उपनिषत्, गीरखपुर : गीताप्रेस, सं० २०७०।
बृहदारण्यकोपनिषद्गीरखपुर : गीताप्रेस, सं० २०७२।
बृहद्धर्म्मपुराणम्, सम्पा० तर्करत्न श्रीपञ्चानन, कलिकाता :बङ्गवासी ष्टीम- येसिन प्रेस, बङ्०१३००।
श्रीमत् स्वामी निगमान्द परमहंस, तान्त्रिक गुरु, ढाका : जाह्नवी प्रेस, बङ् १३३१
खामेज कृष्णदास, श्रीस्कन्दमहापुराणम्, चतुर्थभाग। दिल्ली: नागपावलिशार्स, २००३
WoodroffeJhon, Hymn to Kali Karpuradi- stotram, Madras: Ganesh & Co, (Madras) LTD, 1953


## सूरदास के काव्य में कृष्ण[*]

सूरदास वैष्णव सम्प्रदाय के सर्वश्रेष्ठ पुष्टिभाग के संत थे। उनका भगवान् श्रीकृष्ण की भक्ति से ओतप्रोत हे। सूर के अनुसार भगवान श्रीकृष्ण के अनग्रह से मनुष्य को सद्गति मिलती है। अटल भक्ति ज्ञानयोग, कर्मयोग से श्रेष्ठ हैं। सूर ने अग्नी अपनी प्रतिभा के बल पर कृष्ण के बाल स्वरूप का अतिसुंदर, ररस अजीव और मनोवैज्ञानिक वर्णन किया है। सूर ने अनेक विनय पर्दो की रचना की है। भगवान् कृष्ण के अनन्य भक्ति होने के नाते उनके मन से सच्चे भाव निकालते हैं। भक्त शिरोमणि सूर ने इसमें सगुणोपासना का चित्रण हृदय की अनुभूति के आधार पर कि है - "सूर्य प्रेरक हे, प्राणप्रद हे, प्राण का भण्डार एवं प्राण प्रदाता है। उससे चारों ओर प्रकाश की किरणें विकीर्ण होती है। सूर का काव्या की भावप्रधान होने के कारण प्रेरक है, लीलापरक

[1]तैत्तिरीयोपनिषद्- ३।१।
[2]महानिर्वाणतन्त्रम्- ३।९।
[3]छान्दग्योपनित्- अथ यद् इदम् अस्मिन् ब्रह्मपुरे दहं पुण्डरीकं वेश्म, दहरः अस्मिन् अन्तराकाशः. तस्मिन् यद् अन्तः तद् अन्वेष्टव्यं तद् वाव विजिज्ञासितव्यम्।८।१।१।
[4]अत्र हरिहरविधिवेद्यम् इति पदेन अकार उकार मकार प्रतिपादितः प्रणवरूपशब्दब्रह्म ज्ञेयः।
[5]महानिर्वाणतन्त्रम्- ३।५०।
[*]रेखा

होने से ज्वलन्त जीवनकम्पन्न है, भवगवान कृष्ण के गोला गायन एवं चौठाचित्रण से जीवनप्रद तथा प्रकाशपूर्ण और हृदयप्रसूत होने के कारण परम पावन प्रकाश का प्रकट करने वाला है।"

सूर के जीवन और काव्य पर अब तो जो बवोज हुई है, वह उनके व्यक्तित्व एवं कर्तव्य को स्पष्ट से स्पष्टतर, महत् से महत्तर तथा प्रभाविष्णु से प्रभाविष्णुतर सिद्ध करती जाती है। सूर साधक, विरागी एवं भक्त थे, यह सर्वविदित है। उनकी प्रारम्भिक रचनाओं में उनका गर्ग रस विशेषतः भक्तिपूर्वक हुआ है। आचार्य बल्लभ के संपर्क मे आकर उन्होनें हरिलीला के गर्भ को हृदयगर्भ किया। वही क्यों, साक्षात्कार की इस भूमि पर प्रतिष्ठित होने के कारण, उन्होंने परिलीला का जो मर्मस्पर्शी वर्णन किया, भाव-विभोरता एवं तन्मयता का जो रूप खडा किया, उसने अपकी रचना के अन्यों की अपेक्षा वरीयसी विशिष्टता प्रदान की।

सूर के कृष्ण "अधम उघरन", "असुरसंसरन" 'अंतर्यामी त्रिभुवनराइ' है-

गोकुल प्रगट भस्म हरि आइ।

अमर-उधारन्, असुर संसर्न अन्तर्यामी त्रिभुवनराइ।

सूर के परमब्रह्म कृष्ण जगत के निमित्त उत्पादन कारण है- जल, अन्न, अनिल-नभ, छाया, पंचतत्त्वतो जग उपन्यस्ताः।

लोक स्वै बाबते डारू और् सो जगद्व्यापिनी-संगलीला धीरैत्रः।।

'सूर सरस्वती' में सूरदास जीन ने कृष्ण जी के सौन्दर्य का वर्णन वताया है-

रवेतट रवेतटचिन्तु मे आई सृष्टिकरण विस्तार अपने आप हरि प्रकट कियो इसी पुरुष अवतार।

लीलागान करते समय महात्मा सूर का महाकवि रूप अधिक प्रखर रहा है। उन्होंने अतीव सौन्दर्य के साथ अपने आराध्य देव कृष्ण के माहात्म्यरूप का वर्णन किया है।

हम सेवक तुम जगत आधार

तुम परब्रह्म जगत करतार नर तनु धरयौ हवन भुवभार तीन लोक हरि हरि विस्तार, अपनी जोति कियौ अम्नयाई।

तीनिहु लोक सगुन तब जानो, ज्योति सरूप आत्मा मानौ।

यात्र जंगम जहै लगी भस, ज्योति तम्हारी चेतन किए।

सूरदास जी एक उच्चकोटि के भक्त है, उनकी भक्ति में बल्लभीय भक्ति के अनुरूप विविध सेवा दिखाई पडती है। तनजा, वित्तजा एवं मानसिक। जिससे क्रमशः प्रेम आसक्तिः एवं व्यसन भाव की सिद्धि होती है। अतः वे भगवान श्रीकृष्ण की अराधना करते हैं, जिनकी उपासना से असंभव की संभव बन जाता हेः

चरणकमल बंदौ हरि राई।

जाकी कृपा पंगु गिरि लंघै, अंधे को सब कुछ दरसाई।।

महीरौ सुनै मूक पुनि बोतै, रंग चलै सिरदत्र धराई।

सूरदास स्वामी करुणामय,गैर-तौर बन्दौं तेहि पाई।।

सूरदास भगवान् कृष्ण के एकनिष्ठ भक्त हैं, वे उनकी छोडकर किसी की अराधना नहीं करना चाहते है, अतः भ्रमरगीत की गोपिकाकामो की कृष्णभक्ति उनकी ही आकर अग्रिन को प्रवर्शत करती हैं-

मेरौ मन अत कहां सुख पावें।

जैसे उडि जम्रज को पंही, फिरि, जम्रज पर आवै।।

कमलनैन को दांडि महांतम् और देव को ध्यावै।

परम गंग कौ छाडि पियासौ, दुरमति कूप रग्नावै।।

निहि मधुरुह अंबुज-रस-नाढ्यौ, म्यों कराल-फल भावै।।

सुखाम प्रभु कामधेनु ताज, देरी कौन दुह्यवै।।

सूरदास कृष्णभक्ति कवि, बल्लभसम्प्रदाय के व्याढपात्य एवं शृंगास्वात्सल्य के समाकलक महात्मा के रूप में प्रसिद्ध है। "निर्वयाक्तिकता और एकान्त आत्म-समर्पण सूर की रचनात्मकविशिष्टता का एक महत्त्वपूर्ण अंग है। यहीं कारण है कि वे श्रीकृष्ण के जीवन को विभिन्न लीलायों में अपने को एकाकार कर लेते हैं। सूर एक पल के लिए भी अपने आलंबनो-गोपियां, यशोदा, नन्द, उद्धव से अलग नहीं होते। आचार्य हजारी प्रसाद द्विवेदी ने स सम्बन्ध में लिखा हे कि यशोदा को उपलक्ष्य कर के वस्तुतः सूरदास का भक्तचित्त ही शत-शत रसस्रोतों से उद्वेलित हो उठा है। वही चित्र गोपियों, गोपालों और सबसे बढकर राधिका क रूप में अभिव्यक्त हुआ है। इसीलिए सूर की पुनरुक्तियां जरा भी नहीं खटकती और वाक-चातुर्य इतना उत्तम कोटि का होकर भी व्यांगार्थ के सामने अत्यंत तिरस्कृत हो गया है। उनका वात्सल्यवर्णन तो अभूतपूर्व है ही, उनके अलंकार, शब्द, भाव और सम्बन्धी प्रयोग तक उन्हें समर्प्य चित्र बारम्बार चित्रित होकर भी अपने उपमा वैशिष्ट्य, नूतन उत्प्रेरणाओं तथा रूपकों के कारण अपूर्व सौन्दर्य लोक का निर्माण करते है।"

आचार्य देवेन्द्रनाथ शर्मा ने ठीक ही कहा है- "माता-पिता के सहज, स्वाभाविक वात्सल्य का उद्घाटन करते हुए सूर ने न जाने कित्ने पद हे हैं जो एक से एक उत्कृष्ट हैं। सचमुच उन पदों का वास्तविक आनंद उसे ही प्राप्त हो सकता हे जिसे माता पिता के सहज स्वाभाविक का उद्घाटन करते हुए सूर ने न जाने कितने पद कहे हैं जो एक से एक उत्कृष्ट है। "/

कनरु भूमि पर कर पग द्वारा उपमा इक राजत।

प्रतिकरं प्रतिपद प्रमाने बहुधा कमल वैत की साजत्।

लौल दसा सुरत निगरते जशोदा पुनि पुनि नंद बुलावत्।

अंचरा तरलों ढांकि'सुर' प्रभु जननी बुध पियान्त।।

सूर के कृष्ण अद्वितीय सौन्दर्य के सर्गो है, वे करोडो कामदेव कों भी लाज्जिति करने वाले है. उनके सौन्दर्य पड नाम-गुनि, चर अचर सभी मुग्ध हैं। सूरदास जी भी उनके सौन्दर्य का वर्णन करने में अपने को असमर्थ मानते हैं-

कहा लौं वरनौं सुन्दरताई।
खेवत कुंवर कनक आंगन में नैव निरसि हवि हाई।
कुलहि लवाट् सिर स्याम पुभग अति बहु विधि सुरंग जनाई।
मानो जव धन ऊपर राजत मधवा धनुष चदाई।

सूरदास ने कृष्ण को समाज के साथ सामाजिक मनोविज्ञान के साथ लोक ममता की वत्सलता के साथ एक कर दिया है। इसीलिए श्रीकृष्ण के रूप पर उनकी नाल लीला पर, उनके काव्य और आनंद पर सारा नरनारी समाज अपनत्व का अनुभव करता है। व्रज के सारे स्त्री पुरुष श्रीकृषण से उसी प्रकार स्नेहसिक्त व्यवहार करते हैं जैसे नन्दन यशोदा। इस प्रकार सूर श्री कृष्ण के लौकिक रूप को लेकर मनोमुग्धकारी मधुर लीलाकलाप का विकास करते हैं। उन्होंने पहै दास्य भाव से कृष्ण की उपासना की और वाद में वात्सल्य, सदय और माधुर्य भाव से। डा. ब्रजेश्वर वर्मा कहते हैं- "दास्य भाव के आलम्बन कृष्ण एक मनुष्य शोभाशाली, अनोखा शिशु एवं सुकुमार मनोहर क्रीडाक्रिया चंचल पुष्ट बालक हैं। ब्रह्म ही सम्पूर्ण लीला में वे नन्द, यशोदा तथा वात्सल्य भाव के आश्रय स्वजन परिजनों को निरंतर इसी रूप में अपने विविध वात भौतुकों से देते हैं।

## रसो वै सः*

संस्कृतसाहित्ये रसः प्रमुखतत्त्वः इति मन्यते। रस (रस्+अच्) शब्दस्य कोशगतार्थः अस्ति – सारः, जलम्, मधुराम्लादि षड् रसाः, रसायन-पारद-वीर्य-विष-दुध-अमृत-स्वादानन्दादि[ii]। सुखार्थः सर्वभूतानां प्रवृत्तिः। सर्वे प्राणीनः कीटपतङ्गादि तथा ब्रह्मापि सुखानन्दं रसं प्राप्तुमिच्छन्ति। तैत्तरीयोपनिषदि रसः परमब्रह्मेत्युक्तं यतो हि तं रसं प्राप्तं जीवाः सुखानन्दं अनुभवन्ति। यथा- **'रसो वै सः रसं ह्योवायं लब्धानन्दीभवति।'**

सः एषः आत्मा रसः, अयं जीवः आत्मानन्दरसं लब्ध्वा एव हि आनन्दी भवति। आत्मा रसस्वरूपः। रसो नाम आनन्दः। आनन्दस्वरूप एव आत्मा। अयम् आनन्दस्वरूपः आत्मैव सर्वस्यापि जीवस्य आनन्दित्वे कारणम्। सर्वः प्राणी सर्वथा जीवितुमिच्छति अस्य कारणं रसस्वरूपस्य ब्रह्मणः एतेषां प्रत्यगात्मत्वात्।'**तपस्विनः बाह्यसुखसाधनरहिता अपि अनीहाः निरेषणाः ब्राह्मणाः बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसः**' इति शाङ्करभाष्यम्।

संस्कृते रसः शब्दस्य व्युत्पत्तिः 'रस्यतेऽसौ इति रसः' अनेन प्रकारेण कृतम् अर्थात् यस्मात् आस्वादं प्राप्यते सैव रसः। रसशब्दस्य प्रयोगः प्राचीनकालात् प्रचलितमस्ति। रसः न केवलं साहित्ये अपि तु इतरशास्त्रेषु अस्य प्रयोगः दृश्यते। ऋग्वेदे स्थलत्रये रसशब्दस्य प्रयोगः भिन्नार्थे अभवत्-

- **पेयार्थे** – आ सुते सि..चत श्रियं रोदस्योरभिश्रियम्। रसादधीत वृषभयम्[iii]।
- **जलार्थे** – सोमो देवो न सूर्योऽद्रिभिः पवते सुतः। दधानः कलशे रसम्[iv]।
- **सारार्थे** – यस्य ते मद्यं रसं तीव्रं द्रु हन्त्यद्रिभिः। रस पवस्वाभिमत हाँ।

ऋग्वेदैव यजुर्वेदे, सामवेदे तथा अथर्ववेदेऽपि रसशब्दस्य प्रयोगः अस्ति। अथर्ववेदे प्रयुक्तः रसशब्दः स्वादार्थवाचकः अस्ति – **आ हरामि गवां क्षीरमाहर्ष धान्यं रसम्[i]**। वेदोपरान्तं रामायणमहाभारतेऽपि रसशब्दः प्रयुक्तः अस्ति। रामायणे जीवनरस-पेय तथा विषार्थे, महाभारते जल-सुरा-

*प्रियङ्का दास
शोधच्छात्रा, साहित्यविभागः, श्री सदाशिवपरिसरः, पुरी, राष्ट्रियसंस्कृतसंस्थानम्

गन्ध-काम-स्नेहार्थे रसशब्दस्य प्रयोगः अस्ति। उपनिषदि रसः ब्रह्मानन्दवाचकः अस्ति। पाणिनीयव्याकरणे रसशब्दः आस्वादनार्थे प्राप्यते। व्याकरणे रसशब्दस्य व्युत्पत्तिः विभिन्नप्रकारेण कृता –

- **रस्यते आस्वाद्यते**[vii] **-** अनया व्युत्पत्या निष्पन्नः रसशब्दः परमात्मारूपी रस-मधु-सोम-गन्ध-मधुरादि अर्थवाचकः अस्ति।
- **रस्यते अनेन**[viii] **-** अस्मात् विग्रहात् व्युत्पन्नः रसशब्दः गुण-राग-वीर्य-देहादि अर्थवाचकः भवति।
- **रसति रसयति वा रसः**[ix] **-** एवंरूपेण निष्पन्नः रसशब्दः धातु-पारद-जलादि अर्थबोधकः अस्ति।
- **रसनं रसः आस्वादः**[x]**-** अनया व्युत्पत्या निर्मितः रसशब्दः शृङ्गारादि रसास्वादादि अर्थान् बोधयति।

साहित्ये रसशब्दस्यार्थः काव्यास्वादः, काव्यानुभूतिः, काव्यानन्दश्च। काव्यं पठने, श्रवणे तथा अभिनयदर्शने सहृदयान् यस्य आनन्दस्य अनुभूतिः भवति साहित्यशास्त्रे सः रसेति उच्यते।

रसः अत्यन्तप्राचीनः एवञ्च सारगर्भितानेकार्थवाचकः शब्दः अस्ति। अलंकारशास्त्रे एषः सर्वाधिक-व्यापकरूपं धारयित्वा अवतरितः। रसः साहित्यस्य प्राणभूतः अस्ति। रसरहितं काव्यं काव्यं न। भरतानुसारं तु रसरहितस्य कस्यापि अर्थस्य प्रवृत्तिः न भवति– '**न हि रसादृते कश्चिदर्थः प्रवर्तते**'।[xi]

साहित्ये रसस्यार्थः काव्यास्वादः काव्यानन्दः वा। काव्यं पठने, श्रवणे तथा अभिनयदर्शने हृदयस्य स्थायिभावः आलम्बनविभावेन जाग्रतः, उद्दीपनेन उद्दीप्तः, व्यभिचारीभावेन परिपुष्टः तथा अनुभावेन व्यक्तः भूत्वा यं आनन्दमयीतन्मयावस्थां प्रप्नोति सः एव रसः।

भारतीयकाव्यशास्त्रस्य प्रथमाचार्यस्य भरतस्य रससूत्रे सर्वप्रथमं रसः परिभाषितः – '**विभावानुभावव्यभिसंयोगाद्रसनिष्पत्तिः।**'[xii] भरतं पश्चात् धनञ्जयानुसारं विभाव-अनुभाव-सात्विकभाव-व्यभिचारिभावानां संयोगेन आस्वाद्यमानः स्थायीभावः रसः कथ्यते। यथा-

**विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः।**

**आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥**[xiii]

मम्मटानुसारं लौकिकव्यवहारे रत्यादि चित्तवृत्तिविशेषस्य यः कारण-कार्य-सहकारीकारणं भवति सः एव काव्यं तथा नाटके वर्णितं भूत्वा रत्यादि स्थायीभावानां विभाव-अनुभाव-व्यभिचारीभावः कथ्यते, तथा विभावादिभिः व्यक्तः स्थायीभावः रसः। यथा-

**कारणान्यथ कार्याणि सहकारीणि यानि च,**

**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।**

**विभावाः अनुभावास्तत् कथ्यन्ते व्यभिचारिणः**

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥**[xiv]

आचार्यविश्वनाथानुसारं यदा विभाव-अनुभाव-संचाराभावैः सहृदयानां हृदये वासनारूपे स्थितः स्थायीभावपूर्णः परिपक्वावस्थां प्राप्नोति सः रसः कथ्यते। यथा-

**विभावेनानुभावेन व्यक्तः संचारिणा तथा।**

**रसतामेति रत्यादिः स्थायी भावः सचेतसाम्॥**[xv]

पुनश्च-

**सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**

**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥**

**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः।**

**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥**[xvi]

अर्थात् रसः अखण्ड-स्वप्रकाश-आनन्दमय-चिन्मयः अस्ति। वेद्यान्तरस्पर्शात् शूण्यमस्ति। ब्रह्मास्वादः सहोदरः अस्ति। अलौकिकचमत्कारः अस्य प्राणः, कश्चित् पुण्यात्मा हि सत्वगुणोद्रेकेन स्वात्मानन्दात् अभिन्नरूपे रसस्यास्य आस्वादग्रहणं करोति।

'ब्रह्मानन्दसहोदरः' अस्य आशयः अस्ति यत् रसानन्दः ब्रह्मानन्दः अनयोः मध्ये पार्थक्यं वर्तते रसानन्दे सांसारिकविषयस्य सम्बन्धं जायते तथा ब्रह्मानन्दः सर्वथा सांसारिकविषयरहितः अस्ति। अस्मिन् प्रसङ्गे विश्वनाथेन उक्तम्- '**कैश्चित् प्रमातृभिः = प्राक्तनपुण्यशलिभिः स रस आस्वाद्यते। यदुक्तम्- पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्।**[xvii]' इति।

अर्थात् यथा कोऽपि विशिष्टयोगी ब्रह्मसाक्षात्कारं करोति तथैव केचन वासनाख्यसंस्कारेन युक्तः पुरुषः रसमास्वादयति। इत्यर्थं ब्रह्मास्वादस्य अधिकारी-योगीव विश्वनाथेन सचेतसामेव रसास्वादस्य अधिकारी स्वीकृतः। अर्थात् यदा सहृदयस्य मनसि सत्त्वगुणस्य प्रभावः अधिकः भवति तदा तस्मै रसस्य अनुभूतिः भवति।

पण्डितराजजन्नाथः रसस्वरूपविवेचनस्य प्रसङ्गे अकथयत् रत्यादि स्थायिभावैव स्वतः प्रकाशमानात्मानन्देन सह अनुभूतः भूत्वा रसः भवति- **स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः.........रत्यादिरेव रसः**[xviii]**।**

रसमहत्वं प्रसङ्गे छान्दोग्योपनिषदि कथितमस्ति– '**एषां भूतानां पृथिवी रसः पृथिव्या आपो रस; अपामौषधयो रसः, औषधीनां पुरुषो रसः, पुरुषस्य वाग् रसः, वाच ऋग् रसः, ऋचः साम रसः, साम्न उद्गीथो रसः स एव रसानां रसतमः परमः पराध्योऽष्टमोयदुद्गीथः**'।[xix] अग्निपुराणेऽपि उक्तं यथा- **'लक्ष्मीरिव बिना त्यागान्न वाणी भाति नीरसा।**[xx]**'**

ब्रह्मानिर्मितजगते भौतिकदृष्ट्या 'रस' जिह्वान्द्रियेण ग्रहितं गुणविशेषमस्ति, परन्तु कविजगते एषः भिन्नः। सः इन्द्रियग्राह्यः न। रसः अनिर्वचनीय-हृदयसंवेद्य-आनन्दविशेषस्य नाम अस्ति। लौकिकानुभवात् विलक्षणत्वात् रसः अलौकिकः तथा आत्मस्वरूपत्वात् ब्रह्मानन्दसहोदरः।

एवंप्रकारेण ब्रह्मानन्दसहोदरः, अनिर्वचनीयः, वेद्यान्तरस्पर्शशून्यः, सहृदयहृदयसंवेद्यः, परमानन्दरूपः रसः संस्कृतसाहित्ये अलंकारवादी-रीतिवादी-वक्रोक्तिवाद्यादिभिः आचार्यैः स्वीकृतः।

---

[ii]संस्कृत-हिन्दी शब्दकोश, वामन शिवराम आप्टे, पृ-849.
[iii]ऋग्वेद- 8/72/13.
[iv]तत्रैव- 9/63/13.
[v]तत्रैव- 9/65/15.
[vi]अथर्ववेद- 2/4/9/5.
[vii]रस आस्वादन – स्नेहनयोः धातोः एरच्, 3/3/56 सूत्रात् अच् णिलोप।
[viii]रस् धातोः पुंसि संज्ञायां घः प्रायेण, 3/3/118 सूत्रात् घ प्रत्यय णिलोप।
[ix]रस् धातोः पचाद्यच् पा. सू., 3/1/134.
[x]रस् धातोः भावे 3/3/18 अथवा अकर्तरि च कारके संज्ञायाम्, 3/3/19 तः घञ् अल्लोप तथा णिलोपस्य स्थानविद् भावात् उपधावृद्धेः अभावः।
[xi]नाट्यशास्त्रम् – अ-6.
[xii]तत्रैव-6/31.
[xiii]दशरूपकम्-4/1.
[xiv]काव्यप्रकाशः – 4/27-28.
[xv]साहित्यदर्पणम् – 3/1.
[xvi]तत्रैव – 3/2-3.
[xvii]तत्रैव – 3.
[xviii] रसगंगाधरः, प्रथमाननः।
[xix] छान्दोग्योपनिषद – 1/1/2/3.
[xx]अग्निपुराणम् – 339/9.